(12) काशिकादिषु प्राचीनग्रन्थेषु 'सर्वनाम्नो वृत्तिमात्रे—' इति वचनं न पठितम्। यद्यपि भाष्ये 'दक्षिणोत्तराभ्यामतसुच्' (5-3-28) इत्यत्र वचनमिदं पठितम्, तथाऽपि प्रौढिवादोऽयम्। अतसुच्प्रत्ययस्य स्थाने तसुजेव विधीयताम्, मात्रालाघवसद्भावात् — इति व्यर्थं विचारमुपक्षिप्य, उभयोः पक्षयोरपि 'दक्षिणतः, उत्तरतः' इति अभीष्टरूपस्य सिद्धिर्भवतीति प्रौढिम्ना साधनावसरे वचनमिदं पठितम्। अतश्च नास्य वचनस्य तादृङ्मुख्यत्वमिति अनास्थयैव काशिकायां न पठितमिदं वचनम्। यद्यपि भाष्ये व्याख्यातानि बहूनि वार्त्तिकानि काशिकायां न दृश्यन्ते। तथाऽपि सिद्धान्तवार्त्तिकानां लक्ष्यसिद्ध्युपयुक्तानां नियमेन पाठ इति क्रमस्य काशिकाकारैराश्रयणात्, अस्य वचनस्य तावन्मुख्यता नास्तीति दृढमध्यवस्यैव न पठितमिति अवधेयम्।

एवं तावत् द्वादश कारणानि प्रकृतवचनस्यानित्यत्वे वादतरङ्गिणीकारैः साधितानि, अन्यत्र च ग्रन्थान्तरेषु दृष्टानि, स्वयमाचार्यकटाक्षलेशात् अस्माभिरभ्यूहितानि च अत्र वैयाकरणविनोदाय संगृहीतानि।

वस्तुतस्तु उपदिश्यमानस्थलगतधर्मापेक्षया अतिदिश्यमानस्य धर्मतो न्यूनता लोकसर्वतन्त्राभ्युपगता। अतोऽतिदेशत्वात् 'पुंवत्' इत्यस्य, न सार्वत्रिकत्वमस्य। यथा 'लोटो लङ्वत्' (3-4-85) इति विहितेन लङ्वद्भावेन लङ्धर्माः तामादयः वस्मसोः सलो-



पादयः केचनैव लोटि प्रवर्तन्ते, न तु अडागमादयः, तद्वत्। अतोऽत्रापि पुंवद्भावः कश्चिन्न इत्याश्रयणं वरम्। एवञ्च 'वृत्तिमात्रे पुंवद्भावः' इत्यस्य वचनस्याश्रयणेऽपि न दोषोऽत्रेत्याद्याकारेण अन्यान्यपि कानिचन कारणानि प्रदर्श्यास्माभिरप्यत्र विषये बहुधा प्रकृतप्रयोगाः शिष्टप्रयोगसमीक्षानामके ग्रन्थे समर्थिताः, प्रकृतवादतरङ्गिणीग्रन्थभागोऽपि तत्र सप्रपञ्चं व्याख्यातः। विस्तरस्तत्र द्रष्टव्यः।

## तारार्थसारः तारार्थसारप्रभा च

अकारोकारमकारात्मके त्र्यक्षरब्रह्मणि प्रथमो वर्ण उपेयवाचकः, चरमस्तु उपेतृवाचक इति साम्प्रदायिकोऽयमर्थः। 'ओमित्यात्मानं युञ्जीत', 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्॥' इत्यादिषु श्रुतिवाक्येषु सम्प्रतिपन्नोऽयं मार्गः। तत्र मकारो जीववाचकः। 'मन ज्ञाने' इति धातोर्निष्पन्नोऽयं मकार इति पक्षे ज्ञानस्वरूपत्वम्, 'मनु अवबोधने' इति धातोर्निष्पन्न इति पक्षे ज्ञानगुणकत्वम्, 'माङ् माने' 'मसी परिणामे' इति धात्वोर्निष्पन्न इति मते अणुपरिमाणवत्त्वम्, इत्यादिरूपेण बहुधाऽस्य निष्पत्तावर्थवर्णने च पक्षभेदाः सिद्धान्तग्रन्थेषु निरूढाः। तेषु पक्षेषु प्रथमद्वितीयपक्षयोः क्रमेण प्रकृत्यात्मभ्रान्तिः, जडात्मभ्रान्तिश्च निवृत्ते इति सारः। तेन 'दुःखाज्ञानमला

मोहाः प्रकृतेस्ते न चात्मनः' इत्येतत् सिद्धम् । अतश्च शरीरेभावाधिकरणे उपास्यस्वरूपवत् उपासकस्वरूपस्याप्यनुसन्धानस्य प्राप्तेषु स्थलेषु कथमनुसन्धानमित्याशङ्कायाम्, 'एक आत्मनः शरीरे भावात्' इति सूत्रेण पूर्वपक्षमुपक्षिप्य 'व्यतिरेकस्तद्भावभावित्वात्, न तूपलब्धिवत्' इति सूत्रेण सिद्धान्तः कृतः । अपहतपाप्मत्वादिकं यत् स्वाभाविकं जीवस्वरूपं प्रजापतिवाक्योक्तम्, तस्यैव मुक्तौ भावित्वात् तादृशाकारविशिष्टमेव जैवं स्वरूपमनुसन्धेयम् इति प्रकृतसूत्रार्थः । तत्र च तत्क्रतुन्याय उपष्टम्भकतया श्रीभाष्यकारैरुपात्तः । तत्क्रतुन्यायस्वरूपं च उपायविभागाधिकारे तत्त्वटीकायां च आचार्यैरेवमुक्तम्—

'उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया ।
सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम् ॥' इति ।

शरीरेभावाधिकरणश्रीभाष्यसेवया 'तं यथोपासते तं तथैव भवति' इति श्रुतौ एवकारः उपास्यगुणान्ययोगव्यवच्छेदपरः प्रतीयते । आचार्यवर्याणां श्रीसूक्तिः एवकारस्यायोगव्यवच्छेदपरतां गमयतीति स्फुटम् । ततश्च श्रीभाष्यविरुद्धमिदं पद्यम्—इति पूर्वपक्षिणामाशयः ।

''विशेषणविशेष्याभ्यां क्रियया च समन्वितः । अयोगं योगमपरैरत्यन्तायोगम् एव च ॥ व्यवच्छिनत्ति सम्बन्धं निपातो व्यतिरेकतः ॥'' इति अधिकरणचिन्तामणौ (श्लो. 231)



उपात्तः पूर्वाचार्यश्लोकः उक्तेऽर्थेषु अत्र अन्ययोगव्यवच्छेदपरत्वमेवकारस्येत्ययमर्थो भाष्यान्न सिद्ध्यतीति सप्रपञ्चं पञ्चभिः श्लोकैः तारार्थसारः इति ग्रन्थरूपेण परिणतैः प्रसाध्य, तदुपरि पुनः प्रवृत्तमाक्षेपं परिजिहीर्षुभिरेभिः तस्य व्याख्याव्याजेन तारार्थसारप्रभानाम्नी कृतिरारचिता । श्रीभाष्य - उपायविभागाधिकारश्रीसूक्त्योर्न मिथो विरोध इति च विस्तरेण तु ग्रन्थयोर्न्यरूपि । तत्क्रतुन्यायमधिकृत्य तदात्वेऽतीते गणगाले बहुभिः प्राज्ञैः लघ्व्यः कृतय आरचिताः । सामान्यशास्त्रेषु एतेषां आचार्यैः विश्वप्रसिद्धैः सर्वतन्त्रपारावारपारीणैः शताधिकातिप्रौढसर्वशास्त्रीयग्रन्थनिर्माणनिर्धूतपरमतैः श्रीमद्भिः 'तिरुप्पुक्कुलि स्वामिनः' इति प्रसिद्धैः महामहोपाध्यायैः श्रीकृष्णताताचार्यैः, तथा, महामहोपाध्यायैरस्मत्कूटस्थैः श्रीरामानुजसिद्धान्तविजयध्वजैः श्रीकपिस्थलं देशिकाचार्यैः अन्यैश्च बहुभिः स्वस्वग्रन्थेषु परेषां वादोऽत्र विषये पराकृतः ।

श्रीमत्परमहंसेत्यादि श्रीरङ्गमाण्डवन् श्रीपादुकासेवकरामानुजमहादेशिकैः तत्क्रतुन्यायविचार इति ग्रन्थे—'तं तथैव भवति' इत्यत्र एवकारस्य अन्ययोगव्यवच्छेद एवार्थ इति पक्षे श्रीभाष्य - श्रुतप्रकाशिका - वेदार्थसंग्रहादिबहुग्रन्थविरोधः तत्तद्ग्रन्थसंवाददर्शनपूर्वकं दशधा प्रदर्शितः । मान्यैः सर्वतन्त्रनिष्णातैः कृतविविधकृतिभिरेभिरनुगृहीताः ग्रन्थाः विद्यारसिकानां प्रमोदावहाः ।

सङ्कटविनाशार्थं ध्येयेषु भगवन्मूर्तिविशेषेषु मध्ये 'दामोदरं बन्धगतः' इति श्रीविष्णुधर्मवचनमुपात्तं सर्वार्थसिद्धौ । तदनुसृत्य "बद्धं तथा भावयतां मुकुन्दमयत्नविच्छेदिनि कर्मबन्धे । तपस्विनी तत्क्रतुनीतिराद्या सव्रीडमारण्यकधासु तस्थौ ॥" (4-35) इति यादवाभ्युदयेऽभिहितम् । यथोपासनं फलम्, इति, फले यादृशी स्थितिः जीवेश्वरयोः तादृश्येवोपासनावसरे - इति च योऽयं तत्क्रतुन्याय-सिद्धोऽर्थः, सोऽत्राय भगवतो ध्यानेन बन्धगतस्य बन्धनिवृत्तिरस्माकमिति शास्त्रेण भग्न इति प्रदर्शनव्याजेन—आचार्यैरेवात्र कोलाहलः शमित इव । युज्यते चैतत्, 'अत्यन्तभक्तियुक्तानां नैव शास्त्रं न च क्रमः' इति किल महर्षिवाक्यम् । 'निचाय्यत्वादेवं व्योमवच्च' इति सूत्रखण्ड-विवरणावसरे श्रीभाष्ये सर्वकर्मत्वादीनां भगवद्गुणानां द्विवारमुपादानं "उपास्यतया प्राप्यतया च । हृदि स्थिते द्विरुक्तिः हृदयस्थितिज्ञापनार्थम्, सौलभ्यानुसन्धानार्थं च" इति श्रुतप्रकाशिकायां व्याख्यातम् । तेन इतरेषामपि वचन-न्यायसिद्धानां उपास्योपासक-गुणानां यथायथं अनुसन्धानं न विरोधाय इति सिद्ध्यति । अत एव प्रणवार्थानुसन्धानवेलायां जीवपरमात्मनोः शास्त्रसिद्धान् बहून् धर्मान् अभिधायान्ते, ".... என்று இவை प्रधानங்களாகக் கொண்டு இவற்றைத் துவக்கிவரும் மற்றுள்ள प्रामाणिकार्थங்களும் எல்லாம் இப் पदங்களில் அடைவே शब्दसामर्थ्यத்தாலும் अर्थस्वभावத்தாலும் अनुसन्धेयங்கள்." इति मूलमन्त्राधिकारे आचार्यैरभिहितमिति बोध्यम् ॥



## स्थूणालिङ्गविनिर्णयः

श्रीमद्भिः श्रीनिगमान्तमहागुरुभिः दशावतारस्तोत्रे नृसिंहावतारस्तवनश्लोके 'याकाचित् सहसा महासुरगृहस्थूणा पितामह्यभूत्' इति प्रयुक्तम् । अत्र महासुरगृहस्थूणं इति नपुंसकान्तप्रयोग एव न्याय्यः, न स्त्रीलिङ्गता—इत्याक्षेपः । अहीन्द्रनगरे एतेषां श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकानां पूर्वाश्रमे कदाचिन्नभस्यमासे श्रीदेशिकदिव्योत्सवावसरे तत्रत्यैर्विद्वद्भिरनुयुक्ता एते, एतद्विषये श्लोकदशकमारचय्य—अस्याः शङ्कायाः समाधानव्याजेन तत्त्वं निरूपयामासुः ।

लिङ्गानुशासनसूत्रेषु 'स्थूणोर्णे नपुंसके च' (1-21) 'गृहशशाभ्यां क्लीबे' (1-22) इति सूत्रद्वयं वर्तते । अत्र गृह-शब्दात् परस्य स्थूणाशब्दस्य, शशशब्दात् परस्य ऊर्णाशब्दस्य च यथासङ्ख्यं नपुंसकत्वं विहितम् । गृहस्थूणम्, शशोर्णम्, इत्युदाहरणम् । एवं च 'महासुरगृहस्थूणा' इत्यत्र गृहशब्दोत्तरस्थूणाशब्दस्य स्त्री-लिङ्गता कथम् ? इत्याक्षेपसारः ।

दशावतारस्तोत्रव्याख्याने द्वेधा समाधानमत्रोक्तम् । (1) "केवलगृहशब्दात् परस्यैव स्थूणाशब्दस्य नपुंसकत्वविधानात्, अत्र च अतथात्वात् स्त्रीलिङ्गता । (2) अथवा 'गृहशशाभ्यां क्लीबे' (1-22) इति सूत्रात् गृहस्थूणशब्दस्य नित्यनपुंसकत्वेऽपि,

'शलाका स्त्रियां नित्यम्' (1-34) इत्यत्र नित्यग्रहणम्—अन्येषां क्वचित् व्यभिचारं ज्ञापयति, इति पूर्वसूत्रविहितानामपि अनित्यत्वज्ञापनात् 'महासुरगृहस्थूणा' इत्यपि रूपं सिद्ध्यति ॥'' इति ।

अत्र व्याख्याने प्रदर्शिता रीतिरेव श्री. उ. वे. वेलियनल्लूर् शङ्खपुरं V. R. श्रीनिवासताताचार्यैः उद्यानपत्रिकायां (September 1930) 'पदसंस्कारः' इति शीर्षकमादाय समर्थ्य स्थापिता । विदुषां सम्मोदाय सोऽपि व्यासोऽत्रानुबन्धेऽस्माभिरायोजितः ।

एभिराचार्यैस्तु विलक्षणा वैखरी विषयेऽत्र प्रदर्शिता । तत्र चायं सारः । पदसंस्कारपक्षमवलम्ब्य प्रथमं महासुरगृहपर्यन्तां वृत्तिमाश्रित्य, पश्चात् महासुरगृहस्य स्थूणा इति तत्पुरुषाश्रयणेन 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति शास्त्रात् प्रकृतप्रयोगः साधुरिति कश्चन पक्षः । एतदुपरि वृत्तिद्वयाश्रयणमत्र साधु वेति विचारं प्रस्तुत्य 'समर्थः पदविधिः' इति नियमात् व्यवस्थामाश्रित्य, व्यासिन्याय—प्रत्यासत्तिन्याययोर्बलाबलनिरूपणपूर्वकं व्यासिन्यायाश्रयणेनात्र समासेऽभिमतरूपस्यापि साधुत्वमास्थाय 'निर्बाधं लिङ्गयुग्मं स्तुतिगतपदगं सुष्ठु च स्त्रीत्वलिङ्गम्' इति समापितम् ॥

'लिङ्गमशिष्यम्, लोकाश्रयत्वात् लिङ्गस्य' इति भगवत्कात्यायनवचनमवलम्ब्य भाष्ये लिङ्गविचारः सूत्रगतः सर्वोऽपि मन्दप्रयोजन इत्यभि-



हितम् । अत एव सूत्रकारैरपि 'लुपि युक्तवद् व्यक्तिवचने' (1-2 51) इति पूर्वेषां सूरीणां सूत्रमनूद्य, 'तदशिष्यं संज्ञाप्रमाणत्वात्' (1-2-53) इति स्वाशयः प्रकटितः । कुशाशब्दविषये भामतीकारस्य भ्रान्तिं भट्टोजिदीक्षितः प्राचीकशदेवम्— ''एवं च श्रुति - सूत्र - भाष्याणामेकवाक्यत्वे स्थिते 'आच्छन्द' इति आङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपरः—इति विभावनीयं बहुश्रुतैः ॥'' इति । 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम्' इति सूत्रे 'अस्त्री कुशं कुशो दर्भः पवित्रम्' इत्यमरसिंहोक्तिमनुसृत्य, कथमत्र स्त्रीलिङ्गता साध्वी ! इत्याशङ्क्य भामत्यामाच्छन्दः इति आङः प्रश्लेषेण समर्थितम् । तदुपरि प्राक्तनैः दोषा आरोपिताः । तेषां दोषाणां समाधिव्याजेन सुदूरं विचार्य ''पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः । वाचस्पतेरियत्यर्थेऽप्यबोध इति साहसम् ॥'' इति कल्पतरुकारैरभिहितम् । 'जानपद—' (4-1-) सूत्रेऽर्थविशेषे कुशी कुशा इत्युभयोरप्युदाहरणप्रत्युदाहरणयोः स्त्रीलिङ्गान्तत्वात्, निरुक्तब्रह्मसूत्रात्, 'कुशा वानस्पत्याः स्थ ता मा पात' इति श्रुतेः, दर्भ एव 'अस्त्री कुशं—' इत्यमरसिंहानुशासनमिति तत्रैव स्फुटं प्रतीतेः, 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीषु—' (8-3-46) इति स्पष्टमेव पाणिनिना कुशाशब्दस्य स्वयं प्रयुक्तत्वादस्य च लोकवेदोभयसाधारणसूत्रत्वात्, आच्छन्द इति आङः प्रश्लेषेऽप्यत्र अर्थासामञ्जस्यात्, अर्थभेदेन लिङ्गभेदस्य ''अर्थात् प्रकरणाल्लिङ्गादौचित्याद् देशकालतः । शब्दार्थाः प्रविभज्यन्ते न शब्दादेव केवलात्''

इति वाक्यपदीयोक्तरीत्या वैयाकरणैरनुमतत्वाच्च, अन्येभ्यश्च कारणेभ्यो निरुक्तभामतीग्रन्थोऽसंगतः, कल्पतरुकृतापि भामतीभक्त्या स्थितस्य गतिश्चिन्तनीयेति न्यायेन प्रवृत्तेत्येव भट्टोजिरभिप्रैति । इत्थं च निरुक्तस्थले स्थूणाशब्दो वृत्तिविषये स्त्रीलिङ्गान्तः प्रयुक्तः साधुरेवेति बहुश्रुतैरवधेयम् ।

'स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये सति' इत्यमरसिंहवाक्यात् अल्पत्वविवक्षायामत्र स्त्रीत्वमित्यपि अस्मत्तातपादा विदामासुः । यत्र स्थूणाशब्दो मालविकाग्निमित्रे (4 अङ्के) प्रयुक्तः । तत्र चैवमेव व्याख्यातृभिर्निर्वाह आश्रितः इत्यतोऽयमपि मार्गः समीचीनतरः ।

चिन्तनश्रमभीरवः केचित् तुन्दपरिमृजाः 'मह सु गृहस्थूणं' इत्येव पठित्वा प्रसिद्धं स्त्रीलिङ्गान्तं पाठमसाधुमेवास्थापयन् स्वयमपि व्याख्याय एवं पूर्वसूरिभिः बहुधा प्रदर्शितान् साधुत्वसाधकान् विधाभेदान् अभिमानमूलकानाहुः । स्वोक्तार्थे प्रमाणत्वेन 'प्राचीनतालपाठो नपुंसकान्त एव' इत्यप्यभ्यधुः । अस्माभिः शिष्टप्रयोगसमीक्षायां कैयटहरदत्तयोराशयमाविष्कृत्य 'समासेऽङ्गुलेः सङ्गः' इति सूत्रार्थविचारपूर्वकं 'यच्चाप्युक्तं नवीनैः—' इत्यारभ्य (स्थूणालिङ्गविनिर्णय) पक्षस्याशयो विवृतः । विस्तरभियाऽत्रोपरम्यते ।



## न्यायसिद्धाञ्जनकारिकाविमर्शनम्

श्रीन्यायसिद्धाञ्जने जीवपरिच्छेदे न्यासविद्यां प्रस्तुत्य, "अस्यां च विद्यायामन्तिमप्रत्ययापेक्षाऽपि न विद्यते" इत्याचार्यैरभिहितम् । ततः कारिकेयं पठिता— "इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनः सहकारिणाम् ॥" इति । अत्र भक्तिस्थाने श्रीशस्यैवोपायत्वेनाध्यवसायात् इयं=शरणागतिः, स्वहेतुत्वधियं = स्वेन शरणागतिना हेतुभूतेन सर्वं सम्पत्स्यते पुंसाम्, इति बुद्धिं रुन्धे, इति अर्थः कैश्चित् वर्णितः । ततश्च शरणागतिः सर्वफलप्रदा इति न सिद्ध्यति, 'सदुपायस्य प्राधान्यमेवानेन पद्येन प्रतिपादितम् । तेन शरणागतिरनर्थिका इत्यर्थादाचार्यैरभिहितमिति तेषां वादः ॥ स चात्र सप्रमाणमस्माभिः 'न्यायसिद्धाञ्जनकारिकाविमर्शनम्' इति ग्रन्थरूपेण वारितः । 'स्वहेतुत्वधियं रुन्धे' इत्यत्र स्वशब्देन पराधीनकर्ता प्रपन्न एवाभिहित इति स्फुटं व्युत्पन्नानाम् । वाक्यशैली चात्रैवानुकूला । प्रमाणान्तरं तदनुसन्धाने भविष्यति । 'इयं' इत्यनेन वा शरणागतिः परामृश्यताम्— सैव 'स्व' शब्देन ग्राह्या — इति वादः हठादाकृष्टगतिमनुसरति । चरमश्लोकाधिकारे आचार्यपादैः एकशब्दविवरणावसरे षडर्थाः एकशब्दस्य सप्रमाणं प्रपञ्चिताः । तेषु तृतीयस्य 'प्रपत्तेर्व्याजमात्रत्वम्' इति पक्षस्य निरूपणावसरे प्रतिपादिताः प्रकारा एवात्र 'स्वहेतुत्वधियं रुन्धे' इति पादेन ज्ञापिताः — इति पक्षः यद्यपि पूर्वपक्षिणां बाढमुपद्रवयति, तथाऽपि तत्रैव 'तेन तेनाप्यते

तच्चन्यासेनैव महामुने' इति वचनमुदाहृत्य एवकारः 'त्वमेवोपायभूतो मे भव' इत्यत्रेव परस्परानपेक्षाव्यञ्जको न इति तात्पर्यमस्य वर्णितं त्वत्, இசைவித்தென்னை உன் தாளிணைக் கீழ் இருத்தும் அம்மானே! इति, என் உணர்விலுள்ளே யிருத்தினேன் அதுவும் அவனது இன்னருளே इति च श्रीशठकोपसूरि-सूक्तिसंवादप्रदर्शनपुरस्सरं, 'वरद! तव खलु प्रसादादृते। शरणमिति वचोऽपि मे नोदियात्' (वरदराजस्तवे 88 तमः श्लोकः) इति श्रीकूरेशानुसन्धानोद्धरणपूर्वकं च स्वप्राधान्यनिवारणस्य कृतत्वात्— अत्रापि न्याससिद्धाञ्जनकारिकायां स्वशब्देन प्रपत्त्यैव ग्रहणम्, न प्रपत्तेः इत्यर्थः सिद्ध्यति। 'हेतुर्वैधे विमर्शे भजनवदितरत्—' इति न्यासतिलके (श्लो - 15) साक्षात् हेतुत्वेन स्वयमेवोक्तायाः शरणागतेः अत्राहेतुत्वं साध्यते— इति कथनं सर्वथाऽसङ्गतम्।

एतावताऽपि ये दृढमुष्टयः स्वाभिमानं न त्यजन्ति, ते—

"आदेष्टुं स्वप्रपत्तिं तदनुगुणगुणाद्यन्वित इव मुकुन्दो
'माम्' इत्युक्त्वैकशब्दं वदति, तदुचितं तत्र तात्पर्यमूह्यम्।
तत् प्राप्यप्रापकैक्यं सकलफलदतां न्यासतोऽन्यानपेक्षां
प्राधान्याद्यं च किञ्चित् प्रथयति स परं श्रीसखे मुक्त्युपाये॥"

(श्लो. 16)

इति न्यासविंशतिपद्यं दृष्ट्वा यथार्थमवगन्तुमर्हन्ति। "स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम्। स्वदत्तस्वधिया स्वार्थं स्वस्मिन्



न्यस्यति मां स्वयम्।" इत्यत्राप्ययमेवार्थोऽभिसंहित इति स्फुटम्। 'स्वेनैव कल्पसमपदेशमपेक्षमाणः' 'मुख्यं च यत् प्रपदनं स्वयमेव साध्यं दातव्यमीश! कृपया तदपि त्वयैव' इत्यत्र व्याख्यानव्याजेन विस्तरेणास्माभिरपि विषयोऽयं यथाप्रमाणं प्रदर्शितस्तत्र द्रष्टव्यः।

वस्तुतोऽत्र 'स्वहेतुत्वधियं रुन्धे' इति श्लोकखण्डः अन्तिमस्मृतिविषये श्रीसुदर्शनसूरिणामाशयमनुरुध्य प्रवृत्तः। तद् यथा- शरणागतिगद्यव्याख्याने सुदर्शनसूरिभिरेवमभिहितम्— "प्रपन्नं तु काष्ठपाषाणसन्निभं भगवानेव स्मरति, स्वस्मिन् विश्रमानन्तरं प्रबोधं च जनयति। 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' इति हि श्रूयते।" इति। तेन स्वप्रयत्नेनान्तिमस्मृतेरभावेऽपि परसंकल्पात्, शरणागतविषयेऽवश्यम्भाविनी स्मृतिरियमित्यर्थोऽत्रानुसंहितः। स्पष्टमेव "स्वतन्त्रप्रपत्तिनिष्ठனுக்கு भगवद्भूषणத்தில் अन्तिमप्रत्ययம் अवश्यं வரும். ... 'केवलं मदीययैव दयया' என்றிறே இங்கு அருளிச் செய்தது" इति वाक्यैरयमर्थो निर्याणाधिकारे आचार्यैरभिहितः। अतोऽत्र विषये शङ्कैव नोदेति। 'सुखमस्तीत्यभाषिष्ठाः' इति न्यायेन ये आक्षिपन्तो वृथाऽत्र— तेऽनेन सगर्वरामयेन ग्रन्थेन शिक्षिता एभिः सर्वोत्तमैराचार्यसार्वभौमैरित्यलम्॥

## आदेशमणिः सव्याख्यः

छान्दोग्ये 'उत तमादेशमप्राक्ष्यः' इति वाक्ये आदेशशब्दो वर्तत इत्यत्र न विवादः। स च खलु कस्मिन् अर्थे? इति विचारः।

कर्मणि करणे वा व्युत्पन्नः आदेशशब्दः उपदेशगम्य इत्यर्थम् उपदेशात्मकं वाक्यं वा क्तीति अद्वैतिन अभिप्रयन्ति । तत्र प्रत्ययः सुगमः सुलभश्च । प्रकृतायां सद्विद्यायामर्थस्वारस्यं परामृश्य श्रीभाष्यकारैः आदेष्टा (=कर्ता) आदेशशब्दार्थत्वेनाभिहितः । स्पष्टमिदं वेदार्थसङ्ग्रहे । अद्वैतिनां पक्षे प्रत्ययस्वारस्यसद्भावेऽपि प्रकृत्यर्थास्वारस्यम् । अस्मत्पक्षे तु यद्यपि प्रत्ययो न स्वरस इति ते मन्यन्ते, तथाऽपि प्रधानभूतप्रकृत्यर्थस्वारस्यम्, अर्थौचित्यं च इति वैलक्षण्यस्य सद्भावात् आदेष्टृरूपार्थाश्रयणे नैर्भर्यं पूर्वसूरिभिः प्रदर्शितम् । 'पदरुजविशस्पृशो घञ्' (3-3-16) इति सूत्रे योगविभागाश्रयणेन अन्येष्वप्यत्र सूत्रेऽनुपात्तेषु धातुषु कर्तरि घञं प्रसाध्य देशादीनां शब्दानां निष्पत्तिर्वैयाकरणैः सम्मता । पचादिषु 'देवट्' इति पाठात् कर्तरि अच् इति पक्षस्याश्रयणेऽपि 'अपामार्गः' इत्याद्यर्थं कर्तरि घञ् आवश्यकः । अत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घाप्त्यर्थं घञन्तत्वमेवावश्यमाश्रयणीयम् । मृजू शुद्धौ इति धातोर्घञ् । णित्त्वात् 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम् । अतश्च अपमार्ष्टि इत्यापामार्ग इति वैद्यकादिप्रदर्शितया व्युत्पत्त्या स्वरसया कर्तरि घञेवात्र । ततश्च श्रुतिषु प्रकृत्यर्थस्वारस्यमनुरुध्य क्रियमाणस्य व्याख्यानस्य प्रकृतोपयुक्तस्य यत् खण्डनम्— तत् साहसमेवेत्यवधेयम् । आदेशोऽस्यास्तीति अर्शआद्यजन्ताश्रयणेन उपनिषद्भाष्यकारैः प्रकारान्तरेणापि साधुत्वमस्य छान्दोग्यभाष्ये भावप्रकाशिकायां च समर्थितम् । यत्तत्त्वसारे श्रीवात्स्यवरदगुरुभिः पूर्वोत्तरपक्षयोः सङ्ग्राहकत्वेन



श्लोकद्वयमत्र विषयेऽनुगृहीतम्, ततो ज्ञायते—नायमाक्षेपोऽप्यव्ययदीक्षितोपज्ञ इति । तेन यत्कैश्चिदेवमभिहितम्, तदपि न समीचीनमित्यवधेयम् । श्रुतप्रकाशिकायां विषयेऽत्र पराक्रान्तम् ।

एवं स्थिते चम्पकारण्यवास्तव्यैः भारद्वाजैः रङ्गाचार्यनामकैः कैश्चित् स्वनिर्मितायां 'आदेशकौमुदी' नाम्न्यां कृतौ पूर्वाचार्यप्रदर्शितमार्गविरुद्धया रीत्या केवलं स्वीयवैयाकरणत्वप्रख्यापनाय पूर्वसूरिप्रदर्शितव्युत्पत्तिप्रकारेषु दोषा उपक्षिप्ताः । तेषां दोषाणां यथाक्रममुद्धरणाय आदेशमणिः इति नाम्ना कौस्तुभाख्यव्याख्यानेन सह श्रीमद्भिः श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैः पूर्वाश्रमे गोपालाचार्यनाम्ना विश्वविख्यातैः स्वमतिमन्थाननिर्मथितामितपदशास्त्रपारावारैरमृतरूपो ग्रन्थ आविष्कृतः । अत्र क्रमेणाचार्यवन्दनादिपुरस्सरं विशिष्य स्वशाब्दिकाचार्यान् श्रीमतः तिरुप्पुक्कुऴि श्रीकृष्णताताचार्यमहाशयान् अभिवन्द्य, अष्टत्रिंशता स्रग्धराभिः आदेशकौमुद्यामुपक्षिप्तानामाक्षेपाणां क्रमेण निरसनं क्रियते इति सूक्ष्मेक्षिकयाऽवगन्तव्यम् । "नाच्छादयति कौपीनं न दंशमशकापहम् । शुनः पुच्छमिवानर्थं पाण्डित्यं धर्मवर्जितम् ॥" इत्याचार्यैरुपात्ते प्रमाणश्लोके प्रतिपादितेन व्यङ्ग्यार्थेन यदस्माभिरवश्यं ज्ञानसम्पादनप्रथमप्रयोजनत्वेनाभिहितं कार्यम्, तदेवानुष्ठेयम्—इति स्थिते, अतीते गणरात्रे कश्चनाव्यपदेश्यः स्वयं श्रीभाष्यकारसिद्धान्तस्थ इति ब्रुवन्नपि द्रव्यलोलुप आमिषार्थी यतः कुतश्चित्

प्रतिपक्षिणः तत्कृत्वा मोक्षविषये ग्रन्थं जिग्रथिषुः क्रमेऽस्मन्मते बहून् दोषानुपक्षिप्य उपसंहारे स्वोपक्षिप्तस्य बालिशप्रतारणरूपस्याक्षेपजालस्य स्वयमेव समाधानमनवबुध्य, वृद्धानपृच्छन् सन्देहान् किमपि प्रजल्प्य ग्रन्थं समापयामास — इति यथाऽवगच्छाम:—तद्वत् प्रायोऽद्य ग्रन्थनिर्माणनिपुणाः ! एते । प्रातः स्मरणीया अस्मदाचार्याः गोमालानाम्न्यां विस्तृतायां कृतौ आदेशकौमुदीकाराणां बालजल्पप्रायान् आक्षेपान् कूलङ्कषया रीत्या विचार्य निवार्य, निर्धूय तन्मतं, यद्यपि स्वसिद्धान्तं प्रकटयाम्बभूवुः। अथापि तद्ग्रन्थस्य वादतरङ्गिणीवत् दुरूहतया, ततो निष्कर्षस्य मितप्रज्ञैः सुकरत्वमभिसन्धाय आदेशमणिमेनं सकौस्तुभं समभ्युद्धृतवन्तः। 'तां च गोमालां द्रक्ष्यामि, मन्निकटे वर्तते' इति अस्मदाप्तैः कैश्चिदुक्तम्, परं एतावन्तं कालं ते न प्रेषितवन्तः।

## दासदासीसमर्थनी

श्लोकदशकात्मिकेयं कृतिः। चतुःश्लोक्यां 'त्वद्दासदासीगण' इत्यत्र 'पुमान् स्त्रिया' (1-2 67) इत्येकशेषः प्राप्तः, स न कृत इति प्रथम आक्षेपः। गवाश्वप्रभृतिषु (2-4-11 गणे) 'दासीदासम्' इति पाणिनिना पाठात्, तद्वैपरीत्येन अत्र कथं पाठः? इति तदनुबन्धी द्वितीय आक्षेपः। 'अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्' (वा. 3-2-9) इत्यत्र यथा वा अर्थविशेष-



प्रतिपादनाय घटघटीशब्दौ पृथगेव भगवता कात्यायनेन प्रयुक्तौ, न तु एकशेषः, तद्वदत्रापि अर्थविशेषविवक्षया एकशेषेऽनादरः प्रदर्शित इत्यपि वक्तुं शक्यते। युक्तं चैतत्, 'सदयित इत्युपादानेऽपि औचित्यात् दासीशब्दः तत्पत्न्यंशेऽन्वेतव्यः' इति चतुःश्लोकीभाष्ये स्वारस्यमपि सूचितमेवाचार्यैः। ततश्च 'इन्द्रेन्द्राण्यौ' इति काशिका-(1 2 67) योगे आनुगागमरूपविशेषं पुरस्कृत्य यथा वा नैकशेष आश्रितः, एवमत्रापि 'स्त्रीप्रायमखिलं जगत्' इति प्रमाणानुरोधेन 'सदयितः ब्रह्मेशादिसुरव्रजः त्वद्दासस्य कुम्भदासीगणवत्' इत्यर्थविशेषं पुरस्कृत्य नैकशेष आश्रितः परमाचार्यैः। अत्र च 'न केवलं स्त्रीपुंसकृतो विशेषः, किं तर्हि? आकृतिश्रुतिकृतोऽपि' इति न्यासकारवचनमवधेयम्। एवमस्मिन्नत्र व्यवस्थया साधुत्वं समर्थितम्। महाभाष्ये 'तेन प्रोक्तम्' (4 3-101) इत्यत्र या माथुरी वृत्तिरष्टाध्यायीव्याख्यारूपोपात्ता, तस्यां वृत्तौ 'तदशिष्यं संज्ञाप्रमाणत्वात्' (1-3-53) इति सूत्रात् 'अशिष्यम्' इति आपादपरिसमाप्तेरधिकार इति पक्ष आश्रित इति भाषावृत्तौ (1-2 57) पुरुषोत्तमदेवोऽभणीत्। 'माथुर्यां तु वृत्तौ 'अशिष्य' ग्रहणमापादमनुवर्तते' इति तत्रत्यो ग्रन्थः। एवञ्च, एतत्पक्षे सम्पूर्णस्य एकशेषप्रकरणस्यैव पाणिनिरीत्या अशिष्यत्वात् पूर्वाचार्यलक्षत्वेनानुवाद एवेति सिद्ध्यति। ततश्च अत्र कथं 'दासदासी' शब्दप्रयोगः साधुरिति प्रश्न एव नोदेति। अत एव 'सरूपाणाम्—' (1-2-64) इति सूत्रे भाष्येऽपि, अन्ते 'अशिष्य एकशेष एकेनोक्तत्वात्' इति वार्तिकव्याख्याव्याजेन एकशेषप्रकरणप्रत्याख्यानमुपपन्नं भवति इति सूक्ष्मदर्शिनां

सुगमम् । तथाऽपि कोऽपि यद्विषय: प्रातिज्ञो यथाश्रुतमतिर्भ्राम्येतेति तद्भ्रान्तिनिवारणार्थमियं दासदासीसमर्थनीनाम्नी कृतिराचार्यैराभिराविष्कृतेति ज्ञेयम् ।

## मकाररक्षा

प्रणवो वर्णत्रयात्मक इति श्रुत्यादिसिद्धो विषय: । तत्र चान्त्यो वर्णो मकार: । तस्य च निष्पत्ति: व्याकरणप्रक्रियया 'मन ज्ञाने' इत्यादिधातुभ्य: इति मूलमन्त्राधिकारे आचार्यैरभिहितम् । आदिपदग्राह्या धातव: के ? इत्यपेक्षायामाचार्यैरेव 'मनु अवबोधने' इति धातु: सारसारे उपात्त: । 'मुद हर्षे' इति धातो: टिलोपे यदि निष्पत्ति:, तदा आनन्दस्वरूपत्वमस्येति सिद्ध्यति । 'मन ज्ञाने' इत्यस्मात् तु ज्ञानस्वरूपत्वम् । अवबोधनार्थकात् धातोस्तु ज्ञानगुणकत्वं सिद्धमेव । 'माङ् माने', 'मसी परिणामे' इत्यनयोर्निष्पत्तिमपेक्ष्य अणुस्वरूपत्वमभ्युपगतम् । 'मद तृप्तियोगे' इति चौरादिकादनित्यण्यन्तात् तु स्वयम्प्रकाशत्वादिकम् । एतत् सर्वं रहस्यग्रन्थेषु स्पष्टम् । अत्र सर्वत्र टिलोपे कृते 'म्' इति अवशिष्यते इति सम्प्रदाय: । एवं स्थिते परेषामाक्षेप एवम्— 'मो नो धातो:' इति शास्त्रात् पदान्तस्य मकारस्य नकार एव न्याय्य इति हेतो: कथं मकार: श्रूयते ? न नकार: ? इति । अत्र मकाररक्षायां "बाहुलकं प्रकृतेस्तनुदृष्टे: प्रायसमुच्चयनादपि तेषाम्" इति 'उणादयो बहुलम्' इत्यत्र दृष्टं श्लोकवार्तिकमवलम्ब्य बाहुलकात् समाधानमभिहितम् । द्विविधिना साधितम् ।



वस्तुतस्तु "अकारेणोच्यते विष्णु: सर्वलोकेश्वरो हरि: । उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा । मकारस्तु तयोर्दास इति प्रणवलक्षणम् ॥" इति ईश्वरपरिच्छेदान्ते न्यायसिद्धाञ्जनोपात्तया श्रुत्या मकारो जीववाचक इति सिद्ध्यति । तेन श्रौते पदे "छन्दसि दृष्टानुविधि:" इति न्यायेन ईदृशप्रश्नस्यैव नावकाश: । अत एवाचार्यैरन्यत्र अस्मच्छब्दे छान्दसप्रक्रियया पूर्वोत्तरवर्णलोपेन मकारस्यावशेष इति स्पष्टमभिहितम् । ततश्च कृत्वाचिन्तया यै: पुरोभागिभि: आक्षेप: कृत:, तस्य समाधानं शास्त्रीयया प्रक्रिययाऽत्र कृतमित्यवधेयम् ।

## स्थेमदर्पण:

"दह्यमाना: सुतीव्रेण नीचा: परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥" इति महर्षिवाक्यं सत्यापयितुं जनुषान्धै: कैश्चित् श्रीभाष्यप्रतिपादितप्रमेयप्रमाणादिविषये किमपि वक्तुमसमर्थै: शब्दसौष्ठवमधिकृत्य केचन विचारा: प्रावर्तिषत । तेषु स्थेमशब्दविचार एक: । 'अखिलभुवनजन्मस्थेमभङ्गादिलीले' इति श्रीभाष्यमङ्गलश्लोके स्थेमशब्द: प्रयुक्त: । स चासाधु: । व्याकरणरीत्या प्रकृतार्थेऽननुशिष्ट इति तेषामाक्षेप: । 'भुवनभवनस्थेमध्वंसप्रबन्धविधायिने' इति न्यायकणिकायां विधिविवेकव्याख्यायामुपक्रम एव वाचस्पतिना शब्दोऽयं प्रयुक्त: । 'नि:स्थेमानो दशाननकीर्तय:'

इति मुरारिः (6-36) प्रायुङ्क्त । किं बहुना ? 'सन्नह्यत्येवैनमेतया स्थेम्ने' इति श्रुतावपि स्थिरशब्दादिमनिचि स्थेमशब्दनिष्पत्तिमभिसन्धाय प्रयुक्तमिति 'स्थिरो भव' इति मन्त्रव्याख्यानत्वेनास्य ब्राह्मणभागस्य स्फुटमध्येतॄणाम् । एवं स्थिते ईदृशप्रयोगविषये ये प्रत्यवस्थिताः, तेषां वादान् क्रोडीकृत्य तेषां समाधानान्यत्र ग्रन्थे विस्तृतानि । श्रुतप्रकाशिकायां स्थेमशब्दविचारो नास्ति । परं तत्त्वटीकायां दृश्यते । एतेन ज्ञायते श्रीमन्निगमान्तगुरोः काल एवैष विचार उपक्षिप्त इति । तैरेव द्वेधाऽत्र समाधिरभिहितः । (तत्त्वटीकायामत्र प्रकरणे कचित् स्थामशब्दो लक्ष्यते । नूनं तत्र स्थामशब्देन भाव्यम् । आस्तामेतत् ।) अत्र ग्रन्थे गणरत्नमहोदधिग्रन्थं वर्धमानोपाध्यायकृतं व्याकरणान्तरीयमपि पाणिनीयस्याप्यनुगुणं प्रमाणीकृत्य स्थेमशब्दस्य स्थिरशब्दान्निष्पत्तिरित्येकः प्रकारः, बाहुलकात् स्थामादिवत् प्रत्ययान्तरस्योहनेन साधनमित्यन्यः, 'उणादयो बहुलम्' इत्याश्रित्य कोकाईस्यापि इमनिचः कल्पनमिति प्रकारत्रयेण साधितमिति सङ्क्षेपः ।

## अस्माभिरनुपलब्धाः ग्रन्थाः

एतद्ग्रन्थकर्तॄणामाचार्याणामन्तेवासिभिः अनुबन्धिभूतैश्च श्रीमद्भिः इळनगर् तिरुमलै गड्डम् श्री. उ. वे. श्रीशैलदेशिकतातार्यैः द्राविड्यां लिखिते एतदाचार्यचरितनिबन्धे एभिरनुगृहीता अन्येऽपि केचन ग्रन्थाः ससन्दर्भं प्रस्तुताः । ते च बहुधाऽस्माभिरन्वेषणे कृतेऽपि लब्धुं न पारिताः । अथापि तेषां परिचयस्तैरेव यो



दत्तस्सोऽत्रानूद्यते । (1) **अर्गलपञ्चकम्** । वीक्षारण्यक्षेत्रवाससमये एतेषां विषये केचन पापिष्ठाः अपचारमाचरितुकामाः अर्गलं प्रतीहारे निक्षिप्य अगच्छन् । बहिरागमनसमये एतेषां पादयोः स्पर्शेन व्यथा एभिरनुभूयतामिति तेषामाशा । तदात्वे स्तवमिममनुसन्धाय श्रीवीरराघवमभिष्टुत्य तेभ्यः सन्मतिप्रदानं भगवति प्रार्थयाञ्चक्रिरे इति । नूनं निग्रहाष्टकवत् अर्गलपञ्चकमिदमिति भाति । (2) स्वाचार्यान् 'पत्तिप्पट्टु अळगियशिङ्गर्' इति प्रसिद्धान् अधिकृत्य **आचार्यसप्ततिः**, अत्रत्यः 'येनैवासौ यतीन्द्र' इति दशमः श्लोकोऽप्यत्रोपात्तः । (3) **श्री-आदिवण् शठकोपयतीन्द्रवैभवचन्द्रिका** (4) **श्रीरङ्गनाथशठकोपयतीन्द्रमहादेशिकस्तवः** । अत्र एतेषां त्रयाणां स्तवानां त्रिस्तवी इत्यपि व्यवहारः कृतः । (5) **आषाढ्युपाकर्माभ्यनुज्ञा** (6) **गोमाला** (7) **गोष्ठीनाथस्तवः** । (8) **यण्प्रकाशः** । 'धुभ्वोः कर्म प्रसाध्यम्' इति श्रीमन्निगमान्तगुरुश्रीसूक्तौ कथं यण् सङ्गच्छेत ? 'न भूसुधियोः' (6-4-85) इति निषेधात् ? इति श्रीभूतपुरीवास्तव्यैः कैश्चित् अनुयुक्ता एते, तदात्वे यण्प्रकाशं श्लोकरूपेणारच्य, तस्य व्याख्यानरूपेण (9) **यण्प्रकाशव्याख्यानम्** अप्यन्वगृह्णन् । (10) **यतिराजभोगः** । श्रीभूतपुरीदिव्यालये सेव्यमाना या श्रीभाष्यकारीया अर्चामूर्तिः, तस्यां भक्त्यतिशयादेभिः कृता स्तुतिरियम् । (11) **वेदान्तकौस्तुभसारः** । परवस्तु श्रीवेङ्कटाचार्यैः वेदान्तकौस्तुभनामा ग्रन्थो मीमांसाजटिलः शैवखण्डनपरोऽप्यबादिदुराक्षेपदूरीकरणपरः

कृतो वर्वर्ति । तस्यातिविस्तृतत्वात् परिच्छेदचतुष्टयात्मकं तं वीक्ष्य उद्धृताः साराः त्रिशतस्रग्धरया एभिराचार्यैर्ग्रथिता इति अवगच्छामः । 'एतद्ग्रन्थमहिमा एतद्ग्रन्थसेविनां विदुषामेव गोचरः' इति विवरणमपि दत्तम् । हंहो ! कुत्र वा निलीनोऽयं ग्रन्थ इति न जानीमः । (12) वेदान्तदेशिकोत्सवमालिका । श्रीफणिपतिपुरे श्रीमन्निगमान्तमहागुरोरवतारोत्सवप्रकरणे प्रतिदिनं तत्तादृशीं विशिष्टां विलक्षणामनितरसाधारणीं तत्क्षेत्रैकानुभाव्यां सेवां अनुभूय तदाकृष्टचित्तैर्वेश्यवाग्भिरेभिरुल्लेखादिबहुलः स्तवोऽयमारचित इति विवरणं दत्तम् । (13) श्रीभाष्यकारसुप्रभातम् । कदाचित् मार्गशिरोमासे श्रीभूतपुर्यां स्वाचार्यजन्मनक्षत्रोत्सवसमये श्रीभाष्यं सम्पूर्णमासेव्य समापनकाले स्तुतिरियमनुसंहितेति विवेचितम् ।

एवमेते ग्रन्थाः तत्र द्रामिडयां ससन्दर्भमुपवर्णिताः । अस्माभिरद्य यावदनासादिताः । यदि कैश्चिदितः परं प्रकाशिता भवेयुः, तर्हि तान् महानुभावान् अद्यैव शिरसाऽहं वन्दे । को वा ईदृशं भाग्यं कृतवान्, य एतेषु अन्यतमं वा प्रकाशयिष्यतीति ।

## उपसंहारः

अन्ते च आचार्याणां श्लोकरूपाः काश्चन कृतयः यथोपलम्भं मुद्रिताः । तदनु प्रकृतोपयोगिनोऽनुबन्धाः व्याख्यानपत्रिकादिषु प्रस्तुताः, शिष्टप्रयोगसङ्ग्रहकाराणामाशयः, हंससन्देशरसास्वादिनीकाराणां



पक्षः, ब्रह्मश्री. मन्नार्गुडि राजुशास्त्रिवर्याणामाचार्याणां च प्रवृत्तो लेखक्रम इत्यादिकं यथोपलम्भं मुद्रिताः । केचन ग्रन्थाः विद्वदग्रेसरैः श्री. उ. वे. देवनार्विलाहम् श्रीनिवासदेशिकाचार्यैः कृपया प्रेषिताः । तेषां कृते नित्याधमर्णोऽयं दासः । एतद्ग्रन्थमुद्रणादिषु दासं नियुक्तवतां प्रकृतग्रन्थवर्तॄणां जन्मविद्योभयविद्यसम्बन्धिनां शान्त्यादिसद्गुणनिधीनां शास्त्रीयग्रन्थप्रचारबद्धश्रद्धानां पिळ्ळैपाक्कम् श्री. P. .N पार्थसारथिस्वामिनां सकुटुम्बानां सर्वविधश्रेयःप्रदो भगवान् अस्मत्कुलधनं श्रीलक्ष्मीहयवदनः श्रीलक्ष्मीनृसिंहश्च भूयात् इत्याशासे । सुबहुविलम्बेनापि यथावत् मुद्रणं समापितवते तिरुवल्लिक्केणि श्री (नूतन) भारतीविजय मुद्रणालयाधिकारिणे सन्तु श्रेयांसि । मानुषसाधारणेनानवधानेनान्येन केनापि कारणेनापतितान् दोषान् दूरीकृत्य वक्तृविषयवैलक्षण्यादिकं पुरस्कृत्य ग्रन्थोऽयं विद्वद्भिरनुभाव्य इति प्रार्थये ।

| | |
|---|---|
| 13 - 2 - 84 रुधिरोद्गारि | इत्थं विदुषां विधेयः |
| कुम्भपुनर्वसुः | श्रोत्रियं पैयम्बाडि· चेट्लूर् |
| श्रीदेशिकविद्याभवनम् | वासुदेव श्रीवत्साङ्काचार्यः |
| २७, श्रीवेङ्कटेशाग्रहारः | |
| महिलापुरी, मद्रास् - ४. | |

श्रीः

श्री श्रीवण्शठकोप-श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैरा-रचिताः अद्यानुपलभ्यमानाः महद्भिर्गवेषणीयाः प्रकाशमपेक्षमाणाः पूर्वैः प्रस्तुताः ग्रन्था इमे—

1. श्रीमदादिवण्शठकोपयतीन्द्रमहादेशिकवैभवप्रकाशिका
2. श्रीरङ्गनाथशठकोपयतीन्द्रमहादेशिकस्तवः
3. आचार्यप्रसत्तिः
4. गोष्ठीनाथस्तवः
5. यतिराजभोगः
6. वेदान्तदेशिकोत्सवमालिका
7. श्रीभाष्यकारसुप्रभातम्
8. वेदान्तकौस्तुभसारः
9. यण्प्रकाशः
10. यण्प्रकाशव्याख्यानम्
11. गोमाला
12. आषाढ्युपाकर्माभ्यनुज्ञा
13. अर्गलपञ्चकम्
14. अन्ये च केचन मुक्तकश्लोकाः

---

# विषयसूचिका


श्रीमदहोबिलमठीयस्वामिवर्याणां श्रीमुखम्

प्रकाशकानां विज्ञप्तिः

प्रस्तावना

श्रीमदाचार्याणां चरित्रम् ( English, தமிழ்)

| संख्या | विषयः | पुटम् |
|---|---|---|
| 1. | श्रुतिगीताव्याख्या | 1 |
| 2. | शारीरकसुप्रभातम् | 55 |
| 3. | वादतरङ्गिणी | 63 |
| 4. | तारार्थसारः | 110 |
| 5. | तारार्थसारप्रभा | 111 |
| 6. | स्थूणालिङ्गविनिर्णयः | 128 |
| 7. | न्यायसिद्धाञ्जनकारिकाविमर्शनम् | 132 |
| 8. | आदेशमणिः | 136 |
| 9. | आदेशमणिव्याख्या कौस्तुभः | 136 |
| 10. | दासदासीसमर्थनी | 225 |
| 11. | मकाररक्षा | 227 |
| 12. | स्थेमदर्पणः | 229 |
| 13. | पट्टाभिषेकश्रीमुखश्लोकाः | 261 |

| | | |
|---|---|---|
| 14. | अनुबन्धः प्रथमः | 268 |
| 15. | ,, द्वितीयः | 273 |
| 16. | ,, तृतीयः | 275 |
| 17. | ,, चतुर्थः | 276 |
| 18. | ,, पञ्चमः | 278 |
| 19. | ,, षष्ठः | 281 |
| 20. | ,, सप्तमः | 286 |
| 21. | ,, अष्टमः | 293 |


श्री नवनीत नटः



आविर्भवत्वनिभृताभरणं पुरस्तात्
आकुञ्चितैकचरणं निभृतान्यपादम् ।
दध्ना निमन्थमुखरेण निबद्धतालं
नाथस्य नन्दभवने नवनीतनाट्यम् ॥

श्रीरस्तु

श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैरनुगृहीता

# श्रीश्रुतिगीताव्याख्या

(मूलम्) परीक्षित् राजा—

ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे ॥ १ ॥ इति ।

(व्याख्या)

श्रीरामानुजयोगीन्द्रसिद्धान्तविजयध्वजम् ।
प्रणम्य निगमान्तार्यं ब्रह्मवादार्थ उच्यते ॥ १ ॥
दशमे श्रीभागवते सप्ताशीतितमे मुनिम् ।
शुकं परीक्षित् पप्रच्छ ब्रह्मणि श्रुतिमानताम् ॥ २ ॥

---

**ब्रह्मणि**—'यतो वा इमानि' इत्यादिकारणवाक्यप्रतिपन्ने ब्रह्मणि । **निर्गुणे**—अपहतपाप्मत्वादिभिः कारणत्वार्हत्रिगुणसम्बन्धरहिते । अत एव **सदसतः परे**—अस्तीति व्यपदेशार्हचेतनात् नास्तीति व्यपदेशार्हादचेतनाच्च परे । अत एव **अनिर्देश्ये**—'सदेव सोम्येदमग्र आसीत्, असद्वा इदमग्र आसीत्' इति च निर्देष्टुमशक्ये । **गुणवृत्तयः**—त्रिगुणपरिणामशब्दभूताः श्रुतयः । **कथं**—साक्षात् प्रत्यक्षतया स्वसाक्षात्कृतवस्तुवत् । **चरन्ति**—प्रवर्तन्ते, विषयीकुर्वन्तीत्यर्थः ।

अस्यायमाशयः—श्रुतयो हि ब्रह्म ‘यतो वा इमानि’ इत्यादिना जगज्जन्मादिकारणत्वं लक्षणीकृत्यैव प्रथममुपदिशन्तीति ‘जन्माद्यस्य यतः’ इति सूत्रे भाष्यादिसिद्धं लक्ष्यलक्षणभावनिर्णयाय पुरोवादसापेक्षयद्-वृत्तनिर्देशाद्धि जगत्कारणत्वस्य लक्षणरूपत्वं स्थापितम्। अन्यथा ब्रह्मत्वमेव लक्षणं किं न स्यात्? एवं च जगत्कारणत्वस्य उपादान-त्वादिरूपस्य लोकदृष्ट्या शास्त्रदृष्ट्या च त्रिगुणसम्बन्धिन एवोपपन्नतया तदभावेन ब्रह्मणि घटादेर्मृदादिवद् उपादानत्वासम्भवेन तल्लक्षणमुखेन तदुपदेशासम्भवात्, कथञ्चित् सम्भवे वा प्राकृतसृष्ट्यनन्तरभावि-शब्दात्मकश्रुतिभिः तत्प्राक्कालिकब्रह्मस्वभावदर्शनाभावात् ‘सदेव .... आसीत्’ इत्यादिनिर्देशासामर्थ्यात् तथा निर्दिश्य ब्रह्मलक्षणप्रति-पादनासहत्वाच्च कथं तासां ब्रह्मणि लक्षणबोधनमुखेन प्रामाण्यम्? इति ॥ १ ॥

तदेतत्प्रश्नानुरूपमुत्तरमाह—

(मू.) श्रीशुकः—

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥

इति। स्पष्टम्। अत्र बुद्धिशब्दोपलक्षितमहदादिसृष्टेरेवाभिधानात् कारणावस्थत्रिगुणसम्बन्धस्य तदानीं ब्रह्मणि सत्ताबोधनेनोपादानत्व समर्थनात् ‘एकमेव’ इत्यनेन वस्त्वन्तरसद्भावव्यवच्छेदेन स्रष्टृभूत-निमित्तकारणान्तरस्य व्यवच्छेदलाभेऽपि ‘तदैक्षत बहु स्याम्’ इति



श्रुतिबलेन तस्यैव निमित्तकारणत्वलाभेन कार्यत्वसम्भवसमर्थनाच्च; उभयविधकारणत्वलक्षणमुखेन ब्रह्मणि प्रामाण्यं सिद्धम्। ‘तदैक्षत’ इत्यादिश्रुतीनां शब्दमयत्वेऽप्यपौरुषेयत्वेन वेदावगततत्तदिन्द्रादिवस्तु-संस्थानस्मरणपूर्वमेव सृष्टिकरणस्य ‘वेदशब्देभ्य एव’ इत्यादिप्रमाण-सिद्धत्वेन च भगवदाहितशक्तीनां वेदानां सृष्टिकालेऽपि भगवत्सङ्कल्प-विशेषनिःश्वसितमयतया भगवत्स्वभावदर्शनसम्भवात् ‘सदेव .... इदमासीत्, असद्वा इदमग्र आसीत्’ इत्यादिनिर्देशसम्भवात्, तथा निर्दिश्य कारणत्वप्रतिपादनमुखेन ब्रह्मणि प्रामाण्यं सुलभमिति भावः। तदेतदाह—जनानामिति। प्रभुरिति। सर्वशक्तिरित्यर्थः। ‘यः सर्वज्ञः’ इत्यादिश्रुत्यर्थस्योपलक्षणमिदम्। अनेन ‘वेदेन रूपे व्याकरोद्’ इति सृष्ट्युपयुक्तवेदधारणे उच्चारणनिरपेक्षशक्तिमत्त्वं सूचितमिति तत्सृष्टिव्यवच्छेदः। ननु परिपूर्णस्य प्रयोजनान्तरनिरपेक्षस्य कथं सृष्टिप्रवृत्तिरित्यत आह—मात्रार्थमिति। मात्राः विषयाः। ऐहिकपशुपुत्रादिभोगाः। भवार्थमिति। भवाः शरीरान्तरानुभाव्याः स्वर्गादयः। आत्मने—आत्मानुभवरूपकैवल्यार्थमित्यर्थः। अकल्पनाय—मोक्षायेत्यर्थः। यद्वा, आत्मने कल्पनायेति भगवदर्थकैङ्कर्य-रूपमोक्षसाधनधर्मायेत्यर्थः। अत्र कल्पे मात्रार्थम् इत्यनेन ऐश्वर्यम्, भवार्थम् इत्यनेन कैवल्यं (च) विवक्षितमिति बोध्यम्। एवं च प्रलये—अचिद्विशिष्टान् जनान् विलोक्य परमकारुण्येन पुरुषार्थानु-

भवार्हतासिद्ध्यर्थं स्वस्य लीलाद्यर्थं च त्रिगुणसंसृष्टजीवानां प्रभुः—श्रुत्यधिष्ठातृभूतः सर्वशक्तिः स्वसङ्कल्पसिद्धवेदाख्यशब्दप्रत्यक्षशक्तिकः सर्वान्तर्यामिशक्तिकश्च बुद्ध्यादीन् असृजत्—इत्यर्थः ॥ २ ॥

एवमुक्ते सृष्टिकालेऽचिद्विशिष्टजीवान्तर्यामित्वे त्रिगुणसंसृष्टजीवानामनादित्वे श्रुतीनां भगवन्मयत्वे कारणावस्थब्रह्मविषयसाक्षात्कारवत्त्वे च प्रमाणभूतां ब्रह्मवादाख्यामुपनिषदं नारदस्य नारायणर्षिणा प्रोक्तां संवादयति —

सैषा ह्युपनिषद् ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद् यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३ ॥

इति। **एषा**—वक्ष्यमाणा। **ब्राह्मी**—कारणत्वेन लक्षितब्रह्मानुबन्धिनी। **उपनिषत्**—प्रथमं ब्रह्मप्रतिपादकश्रुतिरूपा। गीतोपनिषद् इत्यर्थः। **पूर्वेषाम्**—सनन्दनादीनां सम्बन्धिनी; तत्कृते ब्रह्मसत्रे वक्ष्यमाणे संसिद्धा कथं त्वया ज्ञातेत्यत आह—**पूर्वजैरिति**। मत्पूर्वजैर्वसिष्ठादिभिः **धृता** जगदुज्जीवनार्थमुपदेशपारम्पर्यसम्पत्तये धारिता। तस्य धारणमात्रेणापि क्षेमप्राप्तिरित्याह—**श्रद्धयेति**। कथं तस्य साक्षान्मोक्षसाधनत्वमत आह—**अकिञ्चन इति**। धारणीयान्योपनिषद्धारणानधिकृतस्य एतद्धारणसाध्यब्रह्मज्ञानसम्पादनद्वारा क्षेमलाभ इति भावः ॥ ३ ॥



तामेनामुपनिषदं तुभ्यं प्रतिपादयामीत्याह—

अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥

**अत्र**—त्वया पृष्टविषये नारदनारायणर्ष्योः **संवादं** प्रश्नप्रतिवचनरूपां **नारायणान्वितां** 'एको हवै नारायण आसीत्' इत्यादिना परमकारणभूतनारायणविषयिणीं **गाथां** वक्ष्यमाणगीतारूपां संवादमिति वाऽन्वयः। **वर्णयिष्यामि**—विस्तरेण वक्ष्यामीत्यर्थः ॥४॥

कदा कथं प्रवृत्तः संवाद इत्येतत्प्रकारमष्टभिराह—

एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥

यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।
धर्मज्ञानशमोपेत आकल्पादास्थितस्तपः ॥ ६ ॥

तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।
परीतं प्रणतोऽपृच्छदिदमेव कुरुद्वह ! ॥ ७ ॥

तस्मा अवोचद् भगवान् ऋषीणां शृण्वतामिमम् ।
यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥

**श्रीभगवान्—**

स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत् पुरा ।
तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ।
ब्रह्मवादः सम्प्रवृत्तः श्रुतयो यत्र शेरते ॥ १० ॥

तत्र ह्यायमभूत् प्रश्नः त्वं मां यमनुपृच्छसि ।
परिहारांश्च तान् सर्वान् वक्ष्येऽहं शृणु तेऽनघ ! ॥ ११ ॥

तुल्यश्रुततपश्शीलास्तुल्यस्वीयारिमध्यमाः ।
अपि चक्रुः प्रवचने एकं शुश्रूषवोऽपरे ॥ १२ ॥

प्रश्नस्त्वदुक्ताकार एवेति सिद्धवत्कृत्योत्तरवचनमाह—

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १३ ॥

पूर्वकल्पे स्वनिर्मितमिदं विश्वं प्रलयसमये आपीय सम्भृत्य शक्तिभिः सह सूक्ष्माभिः भावशक्तिभिः सह शयानं योगेन निद्राणमिव स्थितम् । परम् ईश्वरं, तदन्ते प्रलयान्ते, तल्लिङ्गैः—भगवदसाधारणजगत्कारणत्वादिलक्षणभूतधर्मैः, बोधयाञ्चक्रुः—प्रबोधयामासुरित्यर्थः । अत्र एतत्कल्पादौ सृष्टेः प्रागपि पूर्वकल्पसृष्टविश्वस्य



अप्ययकथनात् त्रिगुणसंसृष्टजीवसद्भावलाभाद् अप्ययस्थानविशेषाकाङ्क्षायां स्वस्यैव तत्स्थानत्वलाभेन स्वस्य तत्सम्बन्धायत्तोपादानत्वलाभात् शयानमित्यनेन चेतनव्यापारवाचितया अप्ययप्रयोजनसङ्कल्पाश्रयत्वस्यापि स्वस्मिन् बोधनेन निमित्तकारणत्वसिद्धेश्च 'निर्गुणत्वाद् ब्रह्मणः कारणत्वासम्भवः' इति प्रश्नांशः प्रत्युक्तः । 'गुणवृत्तितया शब्दमयवेदस्य सृष्टिकालावस्थभगवद्दर्शनासम्भवः' इत्यंशस्योत्तरमाह—तदन्ते बोधयाञ्चक्रुरिति । अनेन प्रलयसमानकालस्थत्वस्य तस्य वेदेषु बोधनेन प्राकृतसृष्ट्यनन्तरभाविशब्दमयत्वव्युदासः क्रियते । इदञ्च 'तस्य ह्वा एतस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदः' इत्यादिश्रुतिसिद्धमिति भावः ॥ ५–१३ ॥

ननु पुरुषोच्चारणाधीनस्वरूपस्थितिकस्य वेदस्य कथं तदानीं सद्भावो घटते ? इत्यत आह—

यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १४ ॥

राजाधीनस्वरूपस्थितिप्रवृत्तिका भृत्या वन्दिनः स्तुतिपाठकाः, शयानं सुप्तं, राजानं प्रत्यूषेऽभ्येत्य तदाज्ञया नियमेनागत्य, सुश्लोकैः कर्णश्राव्यश्लोकप्रतिपाद्यैः पराक्रमैः तदसाधारणापदानभूतैः यथा बोधयन्ति तथेत्यर्थः । तदधीनसत्तादिका एव वन्दिनः सम्राट्छ्रवणसुखानुभवमात्रार्थं शत्रुजयादिस्मरणार्थं च तदपदानानि यथा निशान्ते

पठन्ति, न तु प्रबोधार्थं प्रयतन्ते—तथेहापि भगवदधीनसत्तादिका एव वेदाः प्रलयान्ते तदीयसृष्ट्यादिव्यापारापदानानि तत्सन्तोषार्थं सृष्ट्याद्युपयुक्तसंस्थानस्मरणमात्रार्थं च स्तुवन्ति; न तु स्वतन्त्राः प्रबोधयन्तीति भावः। एवञ्च भगवद्व्यापारविशेषाः सन्त एव ते तदानीं स्थिता इति न त्रिगुणव्यापारभूतशब्दमयत्वं वेदानामिति सिद्धम्। 'सर्ववेदमयोऽस्म्यहम्' इत्यादिकमनुसन्धेयम् ॥ १४ ॥

कथमस्तुवन्? इत्यत्र श्रुतिगीतामुपन्यस्यति—

श्रुतयः—

**जय जय जह्यजामजित दोषगृभीतगुणां**
**त्वमसि यदात्मना समवरुद्धसमस्तभगः।**
**अगजगदोकसाम् अखिलशक्त्यवबोधक ते**
**क्वचिद् अजयात्मना च चरतोऽनुच(रो)रे द्‍ निगमः ॥१५॥**

जयजयेति। भो अजित अजयाऽपि जेतुमशक्य जय जय उत्कर्षमाविष्कुरु, सृष्ट्यादिव्यापारेण हि ते सर्वोत्कर्षप्रसिद्धिरिति भावः। तदाह—जह्यजामिति। अजां मूलप्रकृतिं, जहि नाशय। महदादिपरिणामसङ्कल्पनेन अजात्वं नाशयेत्यर्थः। यद्वा, जहीत्यजलीनां तमोऽवस्थामव्यक्तादिकतया विसृजेत्यर्थः। जौहोत्यादिकात् 'ओ हाक् त्यागे' इत्यतो लोण्मध्यमः, हेर्लुगार्षः। कथं स्वतो नित्यायाः परिणामसङ्कल्पनम्? इत्यत आह—दोषगृभीतगुणामिति।



परिणामादिदोषायैव गृभीताः गृहीताः, 'ग्रहेर्भश्छन्दसि' (वा. 8-2-35) इति हस्य भादेशः गुणाः—सत्त्वरजस्तमांसि यस्यास्ताम्। गुणवैषम्यप्रयुक्तप्रदेश एव परिणामसङ्कल्पनात् तस्याः स्वतो नित्यत्वं न भज्यत इति भावः। ननु ब्रह्मादय एव अजानाशने किं न शक्नुयुः? इत्यत आह—त्वमसीति। यदात्मना यादृशात्मना अजान्तर्यामितया त्वं समवरुद्धः प्रतिहतः, स्वसङ्कल्पायत्तान्वयव्यतिरेकः समस्तानां ब्रह्मादीनां भगः ऐश्वर्यं येन, तथा भूतोऽसि। प्रकृतिपरिणामाण्डान्तर्वर्तिब्रह्मादीनां न महदादिपरिणामसङ्कल्पने शक्तिरिति भावः। नन्वेवं प्रकृतिपरिणामविशेषशब्दविशेषमयस्य वेदस्य ते कथमिदानीं प्रलयावसाने मदीयमहिमावलोकनप्रसङ्गः? इत्यत आह—अगजगदोकसामिति। न गच्छन्तीति अगाः स्थावराः, गच्छन्तीति जगन्ति—जङ्गमाश्च ओकांसि स्थानानि, शरीराणीति यावत्, येषां तेषां जनानाम्। अखिलशक्त्यवबोधक समस्तकर्मादिशक्त्युद्बोधक, प्राक्तनकल्पसृष्टस्थावरजङ्गमानामनुगताकारशक्तिस्मरणपूर्वकं तेषां तत्तच्छक्तिप्रकाशनमात्रव्यापार इत्यर्थः। ततश्च सर्वजीवानां कर्मशक्त्यादीनां च अनादित्वादहमपि इदानीं वर्ते इति भावः। ननु तथापि तव स्वरूपसद्भावेऽपि मया तच्छक्तिप्रकाशनरूपसृष्ट्यनन्तरमेव हि मदीयमहिमावलोकनशक्तिरित्याह—क्वचिदिति। क्वचिदजया प्रकृतिपरिणामाधिष्ठातृत्वेन ब्रह्मादिशरीरकतया, क्वचिद् आत्मना च प्रलयनित्यविभूत्यादौ स्वरूपेण च चरतः ते निगमः वेदः, अनुचरेत् अनुचर इवाचरेत् इत्यर्थः। अनुचरशब्दात् आचारक्विबन्तात् कर्तरि

लिङ्। तथा च त्वया ब्रह्मादीनां प्राकृतसृष्ट्यनन्तरं शक्त्याविष्कारेऽपि 'वेदेन रूपे व्याकरोत्' इत्यनेन तव सृज्यमानवस्तुसंस्थानादेः प्राक्तनकल्पानुगताकारत्वस्य स्मरणार्थं स्मर्तुस्तवेव स्मरणसाधनवेदस्यापि प्राकृतब्रह्मादिसम्बन्धितया परिशुद्धत्वत्स्वरूपसम्बन्धितया च स्थितिः त्वत्सङ्कल्पायत्तैवेति तदानीं निगमरूपस्यापि मे त्वदीयमहिमावलोकन-शक्तिरस्तीति भावः ॥ १५ ॥

जयजय दुर्जय प्रकृतिमुत्सृज जुष्टगुणां
त्वमसि यदात्मना स्ववशभूतसमस्तपदः ।
स्थिरचरदेहिनां सकलशक्तिविकासक ते
क्वचिदजया स्वतश्च चरतोऽनुचरेन्निगमः ॥ १ ॥

नन्वेवं मन्महिम्नो यथावद् वेदनमस्ति चेद्—ब्रूत, इत्यत्राहुः—। यद्वा, स्थिरचरदेहिनां शक्तिविकासनमेव मया कार्यमिति ब्रूषे; तेन त एव सृष्ट्युपादानम्, अहं तु निमित्तमात्रमित्युक्तं भवति; अतो निगमस्य मदनुचरभावकथनमसङ्गतम्, मदीययथावदाकाराकथनात्, इत्यत्राहुः—

(मूलम्)—

बृहदुपलब्धमेतद् अवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदि वाविकृतात् ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १६ ॥



बृहदिति। उपलब्धं प्राक्कल्प उपलब्धं बृहत् स्थूलम् एतत् जगत् अवशेषतया त्वदेकशेषतया, अवशिष्टत्वदेकात्मतयेति यावत्। अवयन्ति 'सदेव सोम्येदमग्र आसीद् एकमेव' इत्याद्याः श्रुतयः प्रतिपादयन्तीत्यर्थः। प्राकृतब्रह्मादिसम्बन्धितया वर्तमानाभिः परिदृश्य-मानवस्तुसमुदायात्मकप्रपञ्चस्य अविशिष्टत्वदेकात्मकताबोधनेन सर्वथा अविद्यमानस्य त्वदात्मकत्वासम्भवात् प्राक्कल्पोपलब्धस्यानुपलभ्यमानता-रूपसूक्ष्मावस्थैवोच्यत इति तद्विशिष्टत्वदेकात्मकत्वमेव लभ्यत इति भावः। ततश्च त्वमेव सृष्ट्युपादानमपीत्युत्तरं फलितम्। तदुपपादयन्ति —यत इति। एतेन 'स्वसृष्टमिदमापीय' इत्युक्तं समर्थितं भवति। विकृतेः घटशरावादेः मृदि मृत्तिकायाम् व इव अविकृतात् त्वत्त एव उदयास्तमयौ उत्पत्तिप्रलयौ। यत इति सार्वविभक्तिकात् (-कः!) तसिः। तेन प्रलयाधारत्वम् उत्पत्त्युपादानत्वं च दर्शितं भवति। अत एव मृदि इति अधिकरणत्वविवक्षया सप्तम्युपात्ता। व इत्युपमार्थमव्ययम्। 'व वा यथा तथैवैवम्' इति कोशात्। अतः एवंरूपात् त्वत्त एव। ऋषयः वेदाः, तद्द्रष्टारो वा, त्वदधीनस्वरूपस्थिति-प्रवृत्तिकाः सन्त एवेत्यर्थः। त्वयि मनोवचनाचरितम्—मनोव्यापार-वाग्व्यापारौ दधुः। इदं जगत् पुरा त्वदात्मकमासीत् इति ज्ञात्वा तथा वचनम्। 'सदेव.... इदमग्र आसीत्' इत्यादिवाक्यरूपमूचुरित्यर्थः। नन्वेवमिदानीन्तनदशामेव पुरस्कृत्य बृहदुपलब्धमेव सदद्य भवति इति किमिति नोच्यते? इत्यत्राहुः—कथमयथा भवन्तीति। भुवि भूमौ दत्तपदानि लब्धस्थितिकानि मनोवचनानि कथं नृणामयथा

भवन्ति नरोपलब्धप्रकारातिवृत्तानि कथं भवन्तीत्यर्थः। प्रपञ्चस्य स्वसमकालवर्तितया एवोपलब्धिरित्ययं नरोपलब्धिप्रकारः, न कल्पान्तरोपलब्धतया, तदानीं प्राकृतप्रतिपत्तृभेदार्थोपाख्यानसम्बन्धितयैव स्वव्यापारस्य त्वत्सङ्कल्पायत्तत्वादिति भावः ॥ १६ ॥

श्लो— बहु खलु दृष्टमेतदवयन्त्यविशिष्टतया
जन(नि?)विलयौ मृदीव विकृतेर्जगतस्त्वयि च ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति नरदृष्टपदाः श्रुतयः ॥ २ ॥

एवं कारणावस्थब्रह्ममहिमावलोकनसम्भवं स्वस्मिन्(स्यां?) उपपाद्य तादृशब्रह्मणो ऋषिभिरुपासनसम्भवं फलसम्भवं च कैमुत्यन्यायेन द्रढयन्ति—यद्वा, स्तोतुं शक्तोऽपि मामेवं स्तुत्वा निगमः किं फलमाप्नुयात्? इत्यत्राहुः—

(मूलम्)—

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम! भजन्ति ये पदमजस्रसुखानुभवम् ॥ १७ ॥



इतीति। त्र्यधिपते निखिलजगदीश्वर इति उक्तरीत्या 'सदेव सोम्येदमग्र आसीत्' इत्यादिरूपा अखिललोकानां मलक्षपणी पापनाशिनी या कथा सैव अमृताब्धिः तं अवगाह्य, सूरयः आजानशुद्धा महान्तः अवगाह्य भक्त्याऽनुसन्धाय तपांसि तापत्रयं जहुः त्यक्तवन्तः, मुक्ता आत्मानुभववन्तो बभूवुरिति यावत्। एतत्प्रकरणविहितसद्विद्यानिष्ठानां पुनर्मोक्षप्राप्तिरन्यादृशी इत्यत्र किमु वक्तव्यमित्याह—किमुतेति। हे परम! ये पुनः स्वधाम्ना स्वयोगमहिम्ना, आत्मानुभवतेजसा वा विधुताः आशयकालगुणाः क्षुत्पिपासाजरामरणादयो यैस्ते तथाविधाः भजन्ति उपासते। सद् ब्रह्मेति शेषः। ते अजस्रसुखानुभवं नित्यसुखानुभवार्हं पदं स्थानविशेषं, 'भजन्ति' इत्यावर्तते। किमुत किमु वक्तव्यमित्यर्थः। इत्थं च कारणावस्थसदुपासनाप्रतिपादनार्थमेतदाख्यानपठनेन स्वरूपेण तापत्रयापनोदनार्थं च त्वामेव स्तुमो वयमिति श्रुत्याशय इति सिद्धम् ॥ १७ ॥

श्लो—इति तव सूरयो जगदधीश्वर! लोकमल-
क्षपणकथामृताब्धिमवगाह्य जहुर्दुरितम् ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम! भजन्ति सत्पदमजस्रसुखानुभवम् ॥ ३ ॥

नन्तु कारणावस्थसदुपाख्यानोपासनादौ किमिति सूरयः प्रवर्तन्ते, नतु ब्रह्मोपासनादौ इत्याहुः—। यद्वा, सद्ब्रह्मकथाश्रवणोपासनादाव-प्रवृत्तान् प्रति तव....स्तवः किमर्थमित्यत्र तान् निन्दन्ति—

(मूलम्) दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यत्
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १८ ॥

दृतय इति। महदहमादयः महदहङ्कारादयः, यदनुग्रहतः यादृशब्रह्मानुग्रहतः, अण्डम् चतुर्मुखोत्पादस्थानम् असृजन् तस्य ते अनुविधाः अनुजीविनः त्वदायत्तजन्मस्थितिकाः सूरयः असुतृपः प्राणरक्षणमात्रतृप्ताः, यदि स्युरिति शेषः। त्वत्कथाश्रवणोपासनादिषु विमुखा यदीत्यर्थः। ते दृतयः चर्मभस्त्रिका इव श्वसन्ति श्वासमात्रलाभा भवन्ति। नतु पुरुषार्थभाज इत्यर्थः। एवं च ब्रह्मादीनामपि त्वदायत्तोत्पत्त्यादिकत्वाद् मोक्षप्रदत्वाभावात् परमकारणभूतसद्ब्रह्मकथाश्रवणभजनादिकमेव सूरयः कुर्वन्तीति भावः। अत्र महदादिसृष्टेरेव कथनात् प्रलयकाले प्रकृतिसद्भावलाभेन तद्विशिष्टवेषेण सद्ब्रह्मणो जगदुपादानत्वं च समर्थितमिति निर्गुणे ब्रह्मण्युपादानकारणत्वासम्भवात् 'कथं चरन्ति श्रुतयः' इति प्रश्नांशः समाहित इति बोध्यम्। ननु तर्हि श्रुतिभिः किमिति



अन्नमयादीनां प्राकृतरूपाणां पुरुषविधत्वादिरूपणेन स्तवः क्रियते? तत्कथाश्रवणादेर्विफलत्वात्, इत्यत्राहुः—पुरुषविध इति। अत्र अन्नमयादिस्तवे अन्नमयादिषु चरमोऽन्वयः पूर्वविज्ञान-मयमनुसृतः पुरुषविधः पुरुषाकारत्वेन रूपितः यत् सत् चेतनं यद् असत् अचेतनम्, अतः परं विलक्षणं त्वमेव। अथ पुनः प्रलयकाले यदवशेषं ऋतम्—सत्यं 'सोऽकामयत' इति वक्ष्यमाणश्लोके प्रति-पन्नः परमकारणं च त्वमेव, अन्नमयादिषु ब्रह्मत्वबुद्धिनिवर्तनार्थं तत्र चरमकोशानन्दमयस्यैव ब्रह्मत्वख्यापनार्थं च अन्नमयादिषु रूपणमात्रम्; नतु तेषामेव प्राधान्येन स्तवान्वय इति भावः।

श्लो— विफलाः श्वसन्ति यदि तेऽनुजीविनो
महदादयोऽण्डमसृजन् यदिच्छया ।
पुरुषाकृतिर्हि चरमोऽत्र पञ्चके
सदसत्परं त्वमवशेषमप्यृतम् ॥ ४ ॥

नन्वेवं कारणपराणां श्रुतीनां कथाश्रवणोपासनादिना मोक्षफलत्वादस्तु तासां मदीयस्तवप्रवृत्तिः, 'यस्त्वेतमेवं प्रादेश-मात्रमभिविमानः कारणोपासनरूपात्मानं वैश्वानरमुपास्ते' इत्यादि-वैश्वानरदहरादिविषयकथाश्रवणोपासनपराः किमिति मां स्तुवन्ती-त्यत्राहुः—

(मूलम्)

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगाद् अनन्त! तव धाम शिरः परमं
पुनरिह यम् समेत्य न पतन्ति कृतान्तमुखे ॥ १९ ॥

उदरमिति। ऋषिवर्त्मसु वेदविहितमोक्षसाधनेषु कूर्पदृशः शर्करारजस्सदृशस्थूलदृशः केचित् उदरं जाठरानलशरीरकं त्वामुपासते, कारणावस्थब्रह्मोपासनाक्षमत्वादिति भावः। केचित् परिसराः नाड्यः, तासां पद्धतिं मार्गम्, प्रसरणस्थानार्थमित्यर्थः। हृदयं हृदयान्तर्वर्तिनं त्वाम् उपासते। शाण्डिल्यविद्यानिष्ठा इति भावः। दहरं दहराकाशरूपं त्वामुपासते। केचिद् दहरविद्यानिष्ठाः। आरुणयः अरुणर्षिवंश्या इत्यर्थः। अस्य वैश्वानरविद्यादावन्वयः। हे अनन्त! ततः—हृदयादुपरि तव परमं धाम स्थानं शिरः भ्रूमध्यपर्यन्तम् उदगात् आक्रामन्ति। तदप्युपासनस्थानमित्यर्थः। यद्वा, ततः सिरः दहरादुपरि शिरस्थं भ्रूमध्यस्थमुपासते। एषां परमं धाम परमपदम् उदगात् ऊर्ध्वंसमीपं गतः। एषां परमपद-प्राप्तिरतिसमीप इति भावः। यद् उपासनं परमपदं वा समेत्य पुनरिह कृतान्तमुखे न पतन्ति——संसारमुखे च भ्रश्यन्तीति भावः। इत्थं च अधिकारिविशेषेषु संसारभयनिवृत्त्युपायभूतोपासनादिकथनार्थं तत्र तत्र त्वदीयोपाख्यानस्तव इति तात्पर्यम् ॥ १९ ॥



श्लो—— सद्भजनाक्षमा जठरगानलमूर्तिमिमं
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
शिर उदगाद् अनन्त ! तव धाम ततः परमं
पुनरपि यत् समेत्य न पतन्ति भवाब्धिमुखे ॥ ५ ॥

नन्वेवं कार्यावस्थब्रह्मोपासने कार्यभूतवस्तुसम्बन्धाद् ब्रह्मणः सदोषत्वदुःखित्वादिकं स्यादिति शुभाश्रयत्वाभावादुपास्यत्वमेव न स्यादित्यत्राहुः—

(मूलम्)

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्यनलवत् स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयन्त्यभिविपन्यव एकरसम् ॥ २० ॥

स्वकृतेति। स्वकृताः त्वत्कृताः विचित्राः योनयः उदरादिशरीरावयवाः, येषां तेषु जाठराग्निषु हेतुतया अधिष्ठातृतया, शरीरतयेति यावत्। विशन्निवेति। विभुस्वरूपत्वेऽप्युपासकानुग्रहार्थं रूपविशेषविशिष्टतया प्रविशन्निव, पूर्वं स्थितोऽपि रूपविशेषपरिग्रहमात्रं करोति, न तु तदानीं कुतश्चिदागम्य प्रविशतीति भावः। अनलवत् स्वकृतान् जठरहृदयादीन् अनुकरोषीति तथाभूतः सन् तरतमतः तत्तद्देशानुगुणपरिमाणवत्तया चकासि उपासकानां स्वरूपमाविष्करोषि इत्यर्थः। यथाऽनलः तृणकाष्ठादिषु तत्तत्परिमाणतया प्रकाशते—

तद्वत् उपासनालम्बसिद्ध्यर्थं त्वमुपासकशरीरावयवेषु तत्तत्परिमाणं रूपमाविष्करोषीति भावः। अथ एवमुपासनानिष्पत्त्यनन्तरं अमूषु योनिषु देहा(षा ?)दिषु वितथासु अविद्यमानासु, उपासनामहिम्ना उपसंहृतासु इत्यर्थः। अवितथं अनुपसंहृतम्। समं एकरूपम्। कार्यानुप्रवेशकृतकार्यगतदोषस्पर्शरहितम्, एकरसम् अपरिच्छिन्नानन्दरूपं तव धाम स्वरूपं विरजधियः निर्मलमतयः, क्लेशादिमलशून्यतया परिशुद्धज्ञानाः, अभिविपन्यवः अभितो विविधस्वद्गुणवादात्मकस्तुतियुक्ताः अन्वयन्ति अनुगच्छन्ति, नित्यसूरिवत् नित्यकिङ्करा भवन्तीत्यर्थः। उदरादिस्थतयोपासनेऽपि तव सर्वशरीर(रि ?)तया स्वतो निर्दोषतया च न शरीरगतदोषगन्धप्रसङ्गः। "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (ब्र.सू.) इति सूत्रन्यायादिति भावः॥ २०॥

श्लो— उदरहृदयाद्यन्तस्स्थं त्वामुपासत एव ये
तदनुगुणमेवैषां रूपं प्रकाशयसेऽग्निवत्।
भजनवशतो नष्टेष्वेषु स्थिरं तव धाम यद्
विमलमतयो नित्यं पश्यन्त्यभिष्टुतसद्गुणाः॥ ६॥

अथैवमुपास्यब्रह्मणः उदरादिस्थानसम्बन्धितयोपासने तत्कृतदोषप्रसङ्गात् शुभाश्रयत्वबाधशङ्कां परिहृत्य विभुस्वरूपस्य तत्तत्स्थान-



कृतपरिमाणत्वेनोपासकानां दिव्यात्मस्वरूपप्राप्तिलक्षणमोक्षासिद्धिप्रसङ्ग इति शङ्कां परिहरति—

(मूलम्) स्वकृतपुरेष्वमीषु बहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम्।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः॥ २१॥

स्वकृतेति। स्वकृतेषु स्वसङ्कल्पायत्तेषु पुरेषु दहराद्युपासकशरीरेषु अमीषु दहरादिस्थानेषु अबहिरन्तरसंवरणं बहिरन्तस्सञ्चारप्रतिघातानर्हस्वरूपं अखिलशक्तिधृतः सर्वशक्तेः तव अंशकृतम् शक्तिसङ्कल्पितं पुरुषं उपासकालम्बनपुरुषाकारविशिष्टत्वदात्मकत्वं वदन्ति "अङ्गुष्ठमात्रः पुरुषः" (कठोपनिषत्) इत्याद्याः श्रुतय इत्यर्थः। एवञ्च उपास्यविग्रहावच्छेदेन दिव्यात्मस्वरूपस्य उपास्यत्वलाभात् परिपूर्णब्रह्मप्राप्तिलक्षणमोक्षसिद्धिरिति भावः। दिव्यात्मस्वरूपस्य दुर्ग्रहत्वेऽपि तत्तद्विग्रहोपाध्यवच्छिन्नस्य सर्वनिर्वाहशक्तिमत्तया परिपूर्णब्रह्मप्राप्त्युपायत्वमक्षतमिति सूचयितुम्—अखिलशक्तिधृत इत्युक्तम्। इति इत्थं नु नृगतिं मनुष्यस्य गतिं भगवदधिष्ठितहृदयादिस्थानविशिष्टत्वरीतिं, तत्तदधिकारानुगुणं तत्तत्स्थानानुगुणपरिमाणदिव्यविग्रहविशिष्टब्रह्मोपासनरीतिं च, कवयः वेदान्ततत्त्वज्ञाः विविच्य निरूप्य निगमावपनं निगमानामावपनं कात्स्न्र्येन विस्तरेण वा विषयीकरणस्थानभूतं

भवतः अङ्घ्रिं संसारनिवृत्तिहेतुभूतं विश्वसिताः सन्तः अङ्गुष्ठ-प्रमितत्वादिविशिष्टविग्रहोपासनेऽपि निश्शेषसंसारनिवृत्तिपूर्वक-स्वाभाविकपरब्रह्मानुभवसिद्धिः भवत्येवेति निर्णयवन्तः सन्तः भुवि उपासते। "सर्वं खल्विदं ब्रह्म तज्जलान् इति शान्त उपासीत" इत्यारभ्य "एष म आत्माऽन्तर्हृदये, एतद् ब्रह्मेति, इदमितः प्रेत्य अभिसम्भवितास्मि इति यस्य स्याद् अद्धा न विचिकित्साऽस्ति*" इति पर्यन्तश्रुत्यर्थ इहानुसन्धेयः॥ २१॥

श्लो—

अङ्गुष्ठमात्रे पुरुषेऽप्युपास्ये विभुं यथावन्मनुजा लभन्ते।
इति स्वशक्तिं कवयो निरूप्य त्वदङ्घ्रिमाम्नातमुपासते बुधाः॥७॥

एवमुपासनाभेदान् उपन्यस्य तासां प्रकृतजन्मनि मोक्षपर्यन्त-स्वाभावेऽपि अभ्यासवेलायामेव निरतिशयसुखरूपत्वाद् अवश्य-कर्तव्यत्वमाहुः—

(मूलम्) दुरधिगमात्मतत्त्वनिगमाय तवात्ततनोः
चरितमहामृताब्धिपरिवर्तपरिश्रमणाः।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥२२॥

दुरधिगमेति। हे ईश्वर! ते चरणसरोजयोः हंसा इव रममाणा हंसाः परमहंसादिरूपा उपासकाः, तेषां कुले समूहे



सङ्गेन सम्भाषणेन विसृष्टगृहाः त्यक्तगृहादयः, विरक्ता इति यावत्। केचित् उपासकाः दुरधिगमं उपासनामन्तरेण दुष्प्रापं यत् आत्मतत्त्वं तस्य निगमाय प्रापणाय आत्ता गृहीता तनुः रामकृष्णादिरूपा, अन्तर्याम्यादिरूपा वा येन तस्य तव चरितं दिव्यचेष्टितमेव महामृताब्धिः, तस्मिन् परिवर्तः परिभ्रमणं, परिशीलनमिति यावत्। तस्मिन् परिश्रमणं प्रयासः, औन्मुख्य(म्?) इति यावत्, येषां ते तथाभूताः सन्तः अपवर्गं मोक्षमपि न परिलषन्ति न काङ्क्षन्ति। त्वद्भजनसुखसङ्गमहिम्ना मोक्षमपि तृणीकुर्वन्तीति भावः॥ २२॥

श्लो— त्वत्पादभक्तकुलसङ्गविधूतकामाः
केचित् त्वदाप्तय उपात्ततनोस्तवेश!।
भूमामृताब्धिपरिवर्तसुखैकतृप्ताः
काङ्क्षन्ति मोक्षमपि नो, किमुतेतराणि॥ ८॥

एवं भगवद्भजनस्य सुखरूपत्वेऽपि पूर्वजन्मकृतपापवशात् केचिद् देहमेव भोग्यमनुभवन्तः पापिष्ठयोनिषु जायन्त इत्याहुः—

(मूलम्) त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवत्
चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च।
न बत रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥२३॥

त्वदन्विति। त्वया अनुपथं—अनुगतं, अनुप्रविष्टमिति यावत्। इदं कुलायं शरीरम् आत्मा शरीरी, सुहृत् मित्रं, प्रियं योग्यम्, एतैस्तुल्यमिति "तेन तुल्यं...." (अष्टाध्यायी) इति वतिः। चरति आचरति, भासत इति यावत्, अविवेकिनामिति शेषः। तथा व्यापनभरणस्वाम्यादिभिः शरीरे भ्रान्ताकारतुल्यं उन्मुखे आत्मसुहृदि-प्रियकार्यकरे, अत एव हिते इष्टप्रापके, प्रिये अनुकूलतया भोग्ये, आत्मनि धारके च त्वयि बत कष्टं, न रमन्ति न प्रीयन्ते। इत्थं असदुपासनया हितसुहृदादिकार्यकरत्वेऽसति तद्भ्रान्त्या देहे तत्तद्भावानुसन्धानेन आत्महनः आत्मघातिन एव ते इत्यर्थः। कुतः इत्यत्राहुः—यदनुशय इति। उक्तासदुपासनैव अनुशयः—भुक्तशिष्टं कर्म येषां ते तथोक्ताः जनाः। अत एव कुशरीरभृतः कुत्सितश्वावराहादियोनिभाजः, उरुभये अधिकभयहेतौ संसारे भ्रमन्ति परिवर्तन्ते। "रमणीयचरणाः रमणीयां योनिमापद्यन्ते, कपूयचरणाः कपूयां योनिमापद्यन्ते" इत्यादिश्रुतेरिति भावः। अतः शरीरे आत्मत्वादिबुद्धिं परित्यज्य शरीरिणि भवत्येव आत्मसुहृत्प्रिय-त्वबुद्ध्या भक्तिः कार्येति सिद्धमित्युक्तं भवति ॥ २३ ॥

श्लो— त्वदनुप्रविष्टतनुमेव पापिनः
प्रियमित्रभोक्तृवद् उपासते जडाः।
त्वयि तादृशे भरणधारणोन्मुखे
न रमन्त एव मुहुरात्मघातिनः ॥ ९ ॥



एवं भगवद्भजनहानेः पापफलत्वसंसारहेतुत्वे अभिधाय तद्भजनस्य भगवत्प्रापकत्वसंसारनिवर्तकत्वे कैमुतिकन्यायेन द्रढयन्ति—

(मूलम्)

निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यद्
मुनय उपासते तदरयोऽपि ययुः स्मरणात्।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ २४॥

निभृतेति। निभृतानि निश्चलानि, नियमितानीति यावत्, मरुन्मनोऽक्षाणि प्राणमनइन्द्रियाणि यैस्ते तादृशाः, दृढयोगं अविचाल्योपासनां युञ्जन्त इति दृढयोगयुजः। तादृशाश्च मुनयः हृदि यत्—त्वत्पदसरोजं उपासते, तत् तव पदसरोजं अरयोऽपि शत्रवः चैद्यादयोऽपि स्मरणात् त्वत्स्मरणमात्रात् ययुः प्रापुः। निरन्तरस्मरणस्य द्वेषकृतत्वेऽपि त्वत्प्रापकत्वे, भक्त्या उपासितुः त्वत्प्राप्तौ किमु वक्तव्यमिति भावः। "सुहृदं सर्वभूतानां" (गीता) इति सर्वसुहृत्त्वात् वैषम्यपरिहाराय व्याजमात्रसापेक्षस्य तव कामभोगार्थं त्वदाश्रितासु गोपीष्विव त्वत्पादाब्जभक्तेष्विव च अस्मास्वपि त्वदनुग्रहस्तुल्य एवेत्याह—स्त्रिय इति। शय्याभुजगभोग एवायं, न तु भुज इति तदाश्लेषवशादभिन्नतया दृष्टयोरित्यर्थः। विषक्ता संश्लेषार्थमुद्युक्ता धीः यासां ताः, स्त्रियः गोप्यः, अङ्घ्रिसरोजमेव सुधा पीयूषं येषां ते, भक्ता मुनयश्च वयमपि त्वदीयकथाप्रतिपादन-

मात्रपरा त्वदायत्तस्वरूपाः त्वन्निःश्वासभूताः वयमपि समदृशः समदृष्टेस्तव समा एव तत्तदभिमतप्रदानेनानुग्रहविषयत्वे तुल्या एवेत्यर्थः। अतो मदभिमतकथाश्रवणोपासनादिसिद्ध्यर्थं सृष्ट्यादौ प्रवर्तस्वेति भावः ॥ २४ ॥

श्लो— तव पादपद्मविषयस्मृतेर्वशाद्
रिपवोऽपि जग्मुः ऋषिसेवितं पदम्।
समदर्शनस्य तव गोपिका वयं
पदभक्तसूरय इहैकतामि(मी ?)युः ॥ १० ॥

अथैतावता स्तुतिकरणस्य भगवतः सृष्ट्यादिपूर्वकवेदप्रवर्तनमेव प्रयोजनमिति स्वाशयं प्रकटयन्ति—

(मूलम्) क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृ ऋषिर्यमनु देवगणा उभये।
तर्हि न सन्न चासदृ उभयं न च कालजवः
किमपि न तत्र शास्त्रमपकृष्य शयीत यदा ॥२५॥

क इति। अवरौ पश्चात्तनौ जन्मलयौ यस्य जनस्य, तादृशः को नु को वा अग्रसरं सर्वस्मात् पूर्वभूतं त्वां वेद बत, न कोऽपि वेद। वेदशास्त्रेण विना सृष्ट्या विना च न कोऽपि वेदेत्यर्थः। बतेति खेदे। अवरजन्मलयत्वमुपपादयति—यत इति। यतः



त्वत्त एव, ऋषिः ब्रह्म उदगात् उद्बभूव, यं ब्रह्माणं अनु पश्चात् उभये देवगणाः सनकादयो निवृत्तिधर्मस्था मरीच्यादयः प्रवृत्तिधर्मनिष्ठाश्च उदगुः उत्पन्नाः मनुजादयस्तत इति सर्वोऽप्यवरजन्मलया एवेत्यर्थः। ननु तर्हि स्वयमेव मां विदित्वा ब्रूतेत्यत्राहुः—तर्हि न सदिति। यदा भगवान् शास्त्रमपकृष्य स्वहृदये निधाय स्वनिःश्वासमात्राकारतां प्रापय्य शयीत सृष्टिव्यापारोपरतोऽभवत्, तर्हि सृष्टेः पूर्वकाले सत् कार्यावस्थं चिद्वस्तु, असत् कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यं च कालजवः कालप्रवृत्तिः सर्गादिविषया नासीत्, किं बहुना ? तत्र तदा न किमप्यासीदित्यर्थः। एवं च "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वेताश्वतर) इत्यादिकं स्मृत्वा ब्रह्मादिसृष्टिपूर्वकमस्मान् सकलानुग्रहतया प्रवर्तयस्वेति भावः। त्वदधीनस्वरूपस्थितिप्रवृत्तिका वयं त्वत्सङ्कल्पेन विना त्वद्वेदनोपयोगदर्शा लोके न कर्मेहीति लीनान् जनान् प्रति निर्वेदं चक्रुरिति तात्पर्यम् ॥ २५ ॥

श्लो— अग्रेसरं त्वामवरोद्भवो जनो
न वेद वेधःप्रभृतिस्त्वदुत्थितः।
अस्मान् स्वनिःश्वासमयान् विधाय
त्वं चेच्छयीथाः किमपीह नास्ति हि ॥ ११ ॥

ननु यूयमिदानीमपि जीवानां सद्भावं ब्रूथ, तेषां पुरुषार्थानुभवयोग्यत्वाय सृष्ट्यादिव्यापारे कर्तव्येऽपि वेदप्रवर्तनं च किमर्थम् ?

इत्यत्राहुः—

(मूलम्) जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः।
त्रिगुणमयः पुमान् इति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥ २६ ॥

जनिमसत इति। असतो द्रव्यस्य जनिं उत्पत्तिं, सत्तायोगमिति यावत्। सतश्च द्रव्यस्य पश्चात् मृतिं नाशं च ये तार्किकाः स्मरन्ति इत्यसत्कार्यवादोऽनूदितः। उत इति पक्षान्तरे। आत्मनि भिदां स्थूलत्वकृशत्वमनुष्यत्वमृगत्वादिरूपां भिदां ये केचिद् वदन्तीति चार्वाकमतानुवादः। ते हि देहमात्मानं मन्यन्ते। विपणं देवमनुष्ययोरन्योन्योपकारभावजनितं वाणिज्यफलतुल्यं स्वर्गादि-फलं, ऋतं सत्यं ये मीमांसकाः स्मरन्ति इति कर्मफलनित्यत्वा-दानुवादः। न केवलं स्मरन्ति ते तार्किकादयः, किंतु आरुपितैः। रुहेर्ण्यन्तात् कर्मणि क्तः। 'रुहः पः' *इति हस्य पकारः। गुणात् प्राक् 'निष्ठायां सेटि' इति णिलोपः, प्रतिपदोक्तत्वात्, गुणस्तु 'क्ङिति च' (1-1-5) इति निषेधात्, णिलोपस्य स्थानिवद्भावासिद्धत्वे अनित्यत्वान्नेहाश्रीयेत इति बोध्यम्। हेत्वाभासैरुपदिशन्ति च। 'तमारुपितैः' इति पाठे—तं स्वमतसिद्धं युक्त्याभासैरुपदिशन्ति चेत्यर्थः। तथा पुमान् त्रिगुणमयः सत्त्वादिगुणत्रयप्रचुरः जीव एष,



न तु तदतिरिक्त ईश्वराख्य इति निरीश्वरसांख्यमतानुवादः। तत्र साधारणदूषणमाहुः—इतीत्यादिना। इति भिदा इत्थंभूतमतभेद इत्यर्थः। यदबोधकृता वेदाधीनत्वदीययाथात्म्याज्ञानप्रयुक्ता चिदचि-द्विशिष्टत्वद्रूपस्य सत एव द्रव्यस्य जगदात्मकस्थूलावस्थारूपकार्यता-योगित्वं पूर्वपूर्वसंस्थानत्यागात्मिकां मृतिं, आवृत्तिविधानादिभिः कर्मफलस (स्य ?) तारतम्यमत एवानित्यत्वं, ब्रह्मज्ञानफलस्य नित्यत्वं, जीवासम्भावितसार्वज्ञ्यसत्यसङ्कल्पत्वकरणाधिपत्यस्वभावं परमात्मानं देवमनुष्यादिदेहविलक्षणं प्रत्यगात्मानं च वेदशास्त्रेणाजानतामित्थं मतभेदः प्रवृत्त इत्यर्थः। ततः प्रस्तुतसदसच्छब्दवाच्यप्रकृतिपुरुषाभ्यां परत्र विलक्षणे, अवबोधरसे ज्ञानानन्दस्वरूपे त्वयि शास्त्रेण ज्ञाते सतीत्यर्थः। सः अबोधः तन्मूलो वादभेदश्च नास्तीत्यर्थः। अतो वेदप्रवर्तनं च अवश्यकार्यमिति भावः ॥ २६ ॥

श्लो— सत्कार्यसन्नाशमतं तथाऽऽत्मनि
स्थौल्यादिभेदो विपणस्य सत्यता।
गुणत्रयात्मा पुरुषो न चेश्वर
इत्थं न मुह्यस्त्वयि वेदबोधिते ॥ १२ ॥

अथ वेदसिद्धः सत्कार्यवादः कथं घटते ? इत्यत्राहुः—

(मूलम्) सदिव मनस्त्रिवृत् त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः।

नहि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ २७ ॥

सद्विवेति। त्रिवृत् त्रिगुणपरिणामभूतं मनः आमनुजात् मनुजपर्यन्तसृज्यमानवस्तुष्वेव, 'अस्ति' इति शेषः। अतस्तेषु सदेव विभाति कार्यावस्थमेव प्रतीयते इत्यर्थः। त्वयि अमनसीत्यर्थः। असत् कारणावस्थमपि विभाति। अतो जगद्दृष्ट्याऽविभातमपि त्वद्दृष्ट्या विभातमेव जगदुत्पद्यत इति सत्कार्यवादसिद्धः। न केवलं त्वद्दृष्ट्या विभातत्वम्, योगिदृष्ट्याऽपि विभातत्वमस्तीत्याहुः—सदिति। आत्मविद' परमात्मोपासकाः निष्पन्नोपासनाः, इदं अशेषं जगत्, आत्मतया स्वात्मभूतपरमात्मात्मकतया सत् विद्यमानमेव अभिमृशन्ति पश्यन्तीत्यर्थः। "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे—अहं मनुरभवं सूर्यश्च, अहं" इत्यादिश्रुतेरिति भावः। असत्कार्यवादे दूषणमाहुः—न हीति। कनकस्य विकृतिं विकारं कटकमकुटादिकं तदात्मतया उत्पत्तौ तु कनकत्वाभावादनादरः स्यादिति भावः। नन्वेवं कनकवद् ब्रह्मणः स्वरूपपरिणामः स्यादित्यत्राहुः—स्वकृतमिति। इदं सर्वं आत्मतया अन्तर्यामितया अनुप्रविष्टमवसितं स्वपर्यवसितं, स्वपर्यन्तमेव स्वकृतमित्यर्थः। "बहु स्याम्" इति संकल्प्य, "तत् सृष्ट्वा, तदनुप्रविश्य सच्च



त्यच्चाभवत्" इत्यादिना "सत्यमभवत्" इत्यन्तेन स्वपर्यन्तस्यैव सृष्टिप्रतिपादनादिति भावः। परिमाणामादेर्विशेषणमात्रगतत्वात् विशिष्टस्य कार्यत्वसम्भवेऽपि न स्वरूपपरिणामशङ्केति भावः ॥ २७ ॥

श्लो— अद्यैव सत् तव यतः प्रलये विभाति
पर्यन्ततः सदिति कारणकार्यमाहुः।
पश्यन्ति योगिन इदं नहि हेम कार्यं
जह्युस्त्वयेदमखिलं समनुप्रविष्टम् ॥ १२ ॥

नन्वेवं वेदप्रवर्तनेऽपि ये वेदान् नाधिकुर्वन्ति, ये च तत्र स्वतोऽनधिकारिणः, तेषामसत्कार्यवादादिकं कथं परिहर्तव्यमित्यत्राहुः—

(मूलम्)

तव परि ये चरन्त्यखिलसत्त्वनिकेततया
त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः।
परिवयसे पशूनिव गिराऽविबुधानपि तां-
स्त्वयि कृतसौहृदाः खलु पुनन्त न ये विमुखाः ॥ २८ ॥

तवेति। तव अखिलसत्त्वानि निकेतः निवासस्थानं, शरीरभूतमिति यावत्, यस्य तथाभूततया सर्वदाऽपि चिदचिच्छरीरकतया त्वां वेदेनावगम्य ये परिचरन्ति—स्तुतिनमस्कारध्यानादि-

भिराराधयन्ति, त उत त एव निर्ऋतेः मृत्योः शिरः पदा आक्रमन्ति आक्रामन्ति, व्यत्ययेन दीर्घाभावः। अध्ययनविधियन्त्रिताः ये वेदानधीत्य विचारेण तत्त्वं निर्णीय सर्वात्मभूतत्वत्पादपरिचर्यां कुर्वन्ति, त एव संसारं तरन्तीति भावः। तदेतदाहुः—परिवयस इति। गिरा वेदोपदेशपूर्वकं "स्वाध्यायोऽध्येतव्यः" इति विधिवाक्येन अविबुधानपि असत्कार्यवादादिना अज्ञानेन वेदविमुखानपि तान् पशून् इव परिवयसे बध्नासि, याहच्छिककुकृतादिव्याजेन शास्त्रावश्यान् करोषीत्यर्थः। परिपूर्वात् "वेञ् तन्तुसन्ताने" इत्यस्मात् कर्तरि लट्। प्रलये पुनर्वेदानधिगन्तुमशक्ताः अनधिकारिणश्च, तेषां वेदवश्यत्वं कथमित्यत्राहुः—त्वयीति। कृतसौहृदाः वेदावगततत्त्वतया त्वय्येव कृतत्वद्विषयसौहृदाः पुनन्ति खलु स्वपरिचर्यादिना अन्यानपि मोचयन्ति हि इत्यर्थः। तर्हि सर्वेषां मोक्षसम्भवे किं वेदेन? इत्यत आहुः—न य इति। ये विमुखाः त्वयि स्वच्छासनरूपे वेदे च विमुखाः अश्रद्धालवः, ते तु न पुनन्ति न मुच्यन्ते। नापि मोचयन्तीत्यर्थः। असत्कार्यवादादिकं त्वद्वैमुख्यकार्यमेवेति भावः ॥ २८ ॥

श्लो— वेदोदिताखिलतनोस्तव पादपद्मं

येऽर्चन्ति ते ह्यतिरन्ति भवाम्बुराशिम्।

अज्ञानपि स्ववशगांस्तनुषे दयालो

वश्याः परानपि पुनन्ति, न तूत्पथस्थाः ॥ १४ ॥



ननु मया वा कथं सृष्ट्यादिव्यापारो वेदप्रवर्तनं वा कर्तुं शक्यम्? देहेन्द्रियाद्यधीनत्वात् तयोः, इदानीं च तेषामसृष्टत्वात् तद्विशिष्टब्रह्मादिद्वारा वेदप्रवर्तनस्यासम्भवात्, इत्यत्राहुः—

(मूलम्)

त्वमकरणः स्वराड् अखिलकारकशक्तिधरः

तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः।

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो

विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ २९ ॥

त्वमिति। स्वेन राजत इति स्वराट् अनन्याधीनः स्वं अकरण एव कर्मकृतदेहेन्द्रियादिरहित एव, अखिलानां कारका सर्जिका या शक्तिः तस्याः धरः, "न तस्य कार्यं करणं च विद्यते, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्युक्तेरिति भावः। ननु तर्हि ब्रह्ममरीच्यादीनां कथं विश्वसृट्त्वप्रथा? इत्यत्राहुः—तव बलिमिति। विश्वसृजः ब्रह्मादयः अनिमिषाः तव अजया प्रकृत्या, त्वत्सृष्टप्रकृतिसंसृष्टाः सन्तः वर्षभुजः खण्डमण्डलाधिपतयः अखिलक्षितिभृतः सार्वभौमस्य इव तव बलिं करं उद्वहन्ति च, तदनुगुणं त्वद्दत्तं फलं सृष्ट्याद्यधिकाररूपम्, एवं च त्वामाराध्यैव ब्रह्मादयः स्वं स्वं पदमधिजग्मुरिति भावः। दृष्टान्तापेक्षया दार्ष्टान्तिके विशेषमाहुः—विदधति। ये यत्र पदे त्वया

अधिकृतास्ते तु, तत्तदिति शेषः। भवतः चकिताः सन्तः विश्वदति, "भीषाऽस्माद् वातः पवते भीषोदेति सूर्यः" इत्याद्युक्तेरिति भावः ॥ २९ ॥

श्लो— सङ्कल्पमात्रकृतलोकलयोद्भवादे-
ब्रह्मादयस्तव बलिं वितरन्ति सर्वे।
ऐश्वर्यमप्यनुभवन्ति नृपा इवाल्पे
त्रस्तास्त्वदेव विदधत्यखिलां त्वदाज्ञाम् ॥ १५ ॥

यद्यहं सृष्टौ प्रवर्तेय, तर्हि किं प्रयोजनं मम स्यात्? स्थावरजङ्गमादिविषमसृष्ट्या विहार एव प्रयोजनमिति चेत्— वैषम्यनैर्घृण्यौ(ण्ये?) स्याताम्, अतो नाहं सृष्टौ प्रवर्तेयेत्यत्राहुः—

(मूलम्) स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः।
नहि परमस्य कश्चिचदपरो न परश्च भवेद्
वियत इवापदस्य तव शून्यतुलां दधतः ॥ ३० ॥

स्थिरेति। हे विमुक्त हेयप्रत्यनीक परस्य परिपूर्णस्य तव उदीक्षया कारुण्येन अजया प्रकृतिसम्बन्धवशेन उत्थं निमित्तं अनादिकर्मरूपं यत् तेन युञ्जन्तीति तादृशो जीवाः स्थिरचरजातयः देवतिर्यङ्मनुष्यादिविषमजातयः स्युर्यदि, ततः तर्हि विहर लीलामनुभवेत्यर्थः। संहितायां अविवक्षया न सन्धिः। विहर



लोकमध्यमपुरुषो वा, त्वयि लीनान् जनान् कारुण्येन त्वं यदि सृजेस्तर्हि तत्तत्पूर्वकर्मानुगुण्येन स्थिरचरादिरूपतया स्रक्ष्यसि, ततश्च तव लीलारसः प्रयोजनं भविष्यतीति भावः। कर्मनिमित्तत्वादेव सृष्टौ वैषम्यादिदोषाशङ्कैव नेत्याहुः—नहीति। परमस्य यस्य परः=पर इत्युपेक्षाविषयो मा=न भवति, स परमः, सर्वसम इत्यर्थः, तादृशस्य तव, कश्चित् कोऽपि, अपरः अनुपेक्ष्यः परश्च उपेक्ष्यश्च न भवेत् स्वत इति शेषः। कर्मानुगुण्येनैव कश्चिदुपेक्ष्यः, कश्चिदनुपेक्ष्यश्च भवतीति न वैषम्यादिप्रसक्तिरिति भावः। ननु सर्वज्ञस्य मम एतादृशहेयचराचरानुप्रवेशतद्गतविकारापुरुषार्थानुभवः प्रसजतीति कथं सृष्टौ प्रवर्तेय? इत्यत्राहुः—वियत इति। अपदस्य अनाधारस्य, वियतः आकाशस्य इव शून्यतुलां शून्यसाम्यं चराचरादन्यत् तदनुप्रविष्टं वस्तु नास्त्येवेति निश्चयार्हतां दधतः तव न कश्चिद् दोष इत्यर्थः। यथा आकाशस्य मृत्सुवर्णादिसम्बन्धेऽपि न विशेषप्रतिसन्धानमस्ति — अचेतनत्वात्; तथैव सर्वज्ञस्यापि तव शरीरतया अनुप्रवेशमात्रेण न हेयसम्बन्धप्रतिसन्धानप्रसक्तिः, हेयप्रत्यनीककल्याणैकतानत्वाबाधादिति भावः ॥ ३० ॥

श्लो— हेयप्रतीप परिपूर्ण चराचरस्य
कर्मानुरूपजननाद् विहर प्रभो त्वम्।
नैवास्ति सर्वसम ते ह्यपरः परो वा
दोषश्च खेपद इव त्वयि शून्यतुल्ये ॥ १६ ॥

नन्वेवं जीवानामपि गगनवत् नित्यमुक्तस्वरूपत्वात् मरसाम्येन संसारित्वदुःखित्वादिविलयः स्यादित्यत्राहुः—

(मूलम्)

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्
सममनुजानतां यदमतं मदुष्टतया ॥ ३१ ॥

अपरिमिता इति। हे ध्रुव स्वतः स्थिर, अपरिमिताः असंख्येयाः ध्रुवाः नित्याः च। अनेन विशेषणद्वयेन अमुक्तजीवानामतीतानन्तकल्पेषु मुक्तत्वसम्भावनया प्रलये असद्भावाशङ्का, तदानीं स्वरूपनाशशङ्का च व्युदस्ता। तनुभृतः जीवाः, भुक्तशिष्टकर्मसम्बन्धात् तनुयोग्यत्वात् तनुभृत्त्वव्यपदेशः। सर्वगता यदि स्युः—विभवः स्युर्यदि तर्हि तत्पक्ष एव, शास्यता नियाम्यता इति नियमो न, इतरथा तु अणुत्वपक्षे तन्नियमोऽस्त्येवेति। मच्छास्त्रवश्यतया अनादिकर्मसम्बन्धात् तिरोहितस्वरूपतया नित्यमुक्तस्वरूपत्वेऽपि संसारित्वादिकमवर्जनीयमिति भावः। ननु विभुत्वपक्षेऽपि शास्यतानियमः कथं न स्यात्? उक्तानादिकर्मसम्बन्धाविशेषादित्यत्राहुः—अजनि चेति। तन्मयं यत्स्वरूपं यद्वस्तु अजनि तत् कर्म अविमुच्य अविनाभूय, अपृथक्सिद्धविशेषणीकृत्येति यावत्। तदिति



शेषः। तद् वस्तु नियन्तृ भवेत् आत्मतया नियन्तृभूतं भवेत्। आत्मनां देवादिदेहरूपेण जनने देवादिदेहनियन्तृत्वं स्यात्, न तद्वद् जीवरूपेण ईश्वरजननाद् ब्रह्मणो नियन्तृत्वं तन्मते, तस्योपादानत्वानभ्युपगमात्। इत्थं च विभूनामात्मनां ईश्वरेण विशेषणविशेष्यभावे विनिगमकाभावात् कर्मसम्बन्धस्य सर्वात्मसम्बन्धित्वाच्छासनीयत्वानुपपत्तेश्च नियाम्यत्वनियमासिद्धिरिति भावः। ननु विभुत्वेऽपि अपृथक्सिद्धविशेषणत्वेन नियाम्यत्वं मनसामणुत्वेन तत्तन्नियतफलजननसामर्थ्यं चेत्यभ्युपगम्यत इत्यत्राहुः—सममिति। यदुक्तं अविमुच्य नियन्तृत्वं समं ईश्वरं जीवं च विभुत्वेन तुल्यं अनुजानतां अभ्युपगच्छतां मतस्य आनुमानिकेश्वरतन्निमित्तमात्रत्वादेर्दुष्टत्वात् तद्विरुद्धत्वात् अमतं अनभ्युपगतमित्यर्थः। तथा च शरीरात्मभावलक्षणनियन्तृनियाम्यभावाभ्युपगमादेव नियाम्यत्वनियमासिद्ध्या कर्मवश्यत्वासिद्धिरिति यथाशास्त्रमणुत्वशरीरत्वाद्यभ्युपगमात् शास्यतानियमो निर्बाध इति भावः ॥ ३१ ॥

श्लो— जीवा ध्रुवा गगनवद् यदि सर्वगाः स्युः
शास्यत्वहानिरणुतादि वदत्सु नैषा।
जीवात्मकं तदविमुच्य नियन्तृता ते
साम्यं वदत्सु निजवादहतेरनिष्टा ॥ १७ ॥

ननु जीवानां कर्मणां चानादित्वे कथं मया सृष्टिः कार्या? सृज्यत्वाभावादित्यत्राहुः—

(मूलम्)

न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।
त्वयि त इमे ततो विविधनामगुणैः परमे
सरित इवार्णवे मधुनि लिल्युरशेषरसा ॥ ३२ ॥

न घटत इति । अजयोः—'अजामेकाम्' इति श्रुत्या अजत्वेनाभिहितयोः प्रकृतिपुरुषयोः चिदचितोः उद्भव स्वरूपोत्पत्तिः न घटत एव—न युज्यत एव; तथापीति शेषः । असुभृतः प्राणिनः शरीरसम्बन्धयोग्यानुशयभाज इति यावत् । जलबुद्बुदवत् उभयजा प्रकृतिपुरुषयोर्योगेन, विविधनामगुणैः नानाविधदेवमनुष्यादिनामरूपैः उपलक्षिता भवन्ति, त्वयि उत्पद्यन्त एव, तयोः स्वरूपनित्यत्वेऽपि देवमनुष्यादिनामरूपवत्तारूपावस्थापत्तिविशिष्टतया अब्वायुसंयोगेन अपां बुद्बुदावस्थाविशिष्टतयेव घटाद्यवस्थाविशिष्टतया मृदादेरिव च सृज्यत्वं सम्भवत्येवेत्यर्थः । ततस्त इमे असुभृतः परमे त्वयि अर्णवे सरित इव मधुनि माक्षिके अशेषरसाः समस्तकुसुमरसा इव निलिल्युः—निलीना बभूवुः । प्रलयदशायां नामरूपे विहाय त्वय्यविभक्ततामापुरित्यर्थः । द्रव्यस्य उत्तरोत्तरसंस्थानयोगे हि



पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः, स्वावस्थावस्थितस्य तूत्पत्तिः, अतः अवस्थाश्रयस्य द्रव्यस्य नित्यत्वात् तस्य पूर्वोत्तरावस्थात्यागोपादानात्मकविनाशोत्पत्त्योरविरोध इति भावः ॥ ३२ ॥

श्लो— जीवाचितोरजतयोर्दितयोरपि स्याद्
योगेन जन्म जलबुद्बुदवज्जनानाम् ।
त्वय्येव ते विविधनामगुणैर्निलिल्युः
सर्वे रसा मधुनि, नद्य इवाम्बुधौ च ॥ १८ ॥

नन्वेवं सृष्टिप्रलययोः प्रवाहेऽनादिकर्माधीनत्वेन वैषम्यानापादके सत्यपि संसारित्वदुःखित्वादिकमसकृदुत्पादयतो मम नैर्घृण्यं दुर्वारं स्यादित्यत्राहुः—

(मूलम्)

नृषु तव मायया भ्रममभीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।
कथमनुवर्ततां भवभयं तव यद् भ्रुकुटिः
सृजति मुहुस्त्रिनेमिरभवच्छरणेषु भयम् ॥ ३३ ॥

नृषु इति । अमीषु सृज्यमानेषु नृषु मनुष्यादिजन्मसु शास्त्रावश्यधिकारिषु ये सुधियः स्वदायत्तबुद्धियोगभाजः ते तव मायया प्रकृत्याख्यमोहनपिञ्छिकया भ्रमम् देहात्माभिमानादिरूपं अवगत्य निश्चित्य अभवे कर्माधीनजन्मरहिते त्वयि अनुगतः

प्रभवोऽतिशयः यस्य तादृशम् उत्तरोत्तरोपचययुक्तमिति यावत् । भावं भक्तिरूपापन्नं ध्यानम् दधति । एवं च त्वदीयसृष्टिः सुदीर्घत्वादाश्रितभक्तियोगानुष्ठानोपयोगितया सुखहेतुरेव भवतीति न ते नैर्घृण्यप्रसक्तिरिति भावः । अतः सृष्टिर्न भवभयस्यैव हेतुरिति आहुः— कथमिति । अनुप्रभवम् इत्यनुवर्तते । भवभयं संसारभयं अनुप्रभवं प्रभवे प्रभवे चेतनानां सकलजन्मसु कथमनुवर्तताम् ? नानुवर्तेतैवेत्यर्थः । सर्वेषां सृष्टिकर्मत्वेऽपि कर्मविशेषशक्त्या जन्मभेदेन भक्तियोगरूपसुखानुभवार्हतापादनेन कारुण्यमेव व्यक्तीकरिष्यत इति न नैर्घृण्यशङ्केति भावः । ननु तर्हि प्रकृतिसृष्टानामपि संसारचक्रपरिवृत्तिः केषां स्यात् ? इत्यत्राहुः—यदिति । यत् यस्मात् तव आज्ञातिलङ्घने कुपितस्य भ्रुकुटी भ्रूभङ्गरूपा स्वत्सङ्कल्पाधीना कोपरूपत्वन्निग्रहसंकल्पाधीनव्यापारा, त्रिनेमिः सत्त्वरजस्तमोरूपनेमि-त्रयविशिष्टा प्रकृतिः अप्रपच्छरणेषु भवदेकोपायत्वव्यवसायरहितेषु, अप्रपन्नेषु इति यावत् । मुहुः जन्मनि जन्मनि, भयं संसारभयं, सृजति जनयति । अतस्तादृशव्यवसाययोग्यसत्त्वोद्रेकवत्सु रजस्तमः-कार्यदुरितानुदयात् "ददामि बुद्धियोगं तम्" इति त्वत्सङ्कल्पित-बुद्धियोगलाभेन सुखात्मकभक्तिलाभस्य सृष्ट्यधीनत्वात् कारुण्यकार्यैव सृष्टिरिति सिद्धमिति भावः ॥ २३ ॥



श्लो— सृष्टेष्वमीषु सुधियस्तव माययैषा
भ्रान्तिः किलेति दधति त्वयि भक्तियोगम् ।
नातस्त्वनुद्भवमियं भवभीरुदेति
यद् भ्रूकुटिस्तव सृजत्यभजत्सु भीतिम् ॥ १९ ॥

नन्वेवमपि संसारिणां मन्मायाकृतभ्रमाणां देहात्मभ्रमादि-निवर्तकशास्त्रोपदेशमन्तरेण न भक्तियोगसिद्धिरिति, सृष्टिमात्रेण भ्रमाणं प्रति वेदप्रवर्तनमात्रेण च व्यष्टिपुरुषाणां मत्कारुण्यविषयत्वं कथमित्यत्राहुः—

(मूलम्)

विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समपहाय गुरोश्चरणं
वणिज इवाविशन्ति अकृतकर्णधरा जलधौ ॥ २४ ॥

विजितेति । विजितानि हृषीकाणि—बाह्येन्द्रियाणि, वायुः प्राणश्च यैस्तैरपि । यद्वा, हे विजित जयशील, सर्वोत्कर्षेण वर्तमान, हृषीकवायुभिः हृषीकाण्येव वायवः प्रतिबन्धका इति यावत्, तैः, अदान्तं अनिगृहीतं मन एव तुरगः—अश्वः, दुर्दमत्वेन तुरगसमं, अतिलोलं अतिचञ्चलं मन इत्यन्वयः, अदान्तं इह लोके यन्तुं निगृहीतुं ये गुरोः "साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना"

इत्युक्तरीत्या त्वदवतारभूतस्य गुरोश्चरणं समपहाय अनाश्रित्य व्यवसनशतान्विताः बहुप्रयाससहिताः उपायखिदः उपायेषु खिद्यन्ते क्लिश्यन्त इति तादृशाः सन्तः यतन्ति प्रयतन्ते, त इति शेषः। अकृतकर्णधराः अलब्धनाविकाः वणिज इव पोतवणिज इव जलधौ संसारमयजलधौ आविशन्ति मज्जन्तीत्यर्थः। तथाच त्वत्कारुण्यकार्यभूताचार्यावतारलाभेनैव मनुष्यादीनां भक्तियोगलाभात् तव सृष्टिव्यापारेण सर्वदा कारुण्यकार्यकरणात् तव सर्वोत्कर्ष एव सिद्ध्यतीति भावः ॥ ३४ ॥

श्लो— सृष्ट्वा मुहुस्त्वमवतीय गुरुर्दयालु-
मग्नान् समुद्धरसि शास्त्रचयेन लोकान्।
नो चेज्जनश्चपलहृत् त्वयि भक्तिमेत्य
वैराग्यवान् क इह वाऽतितरेद् भवाब्धिम् ॥ २० ॥

पूर्वोक्ताचार्यवर्यकटाक्षितत्वदीयकरुणामन्तरेण वैराग्यदौर्लभ्यं तादृशविषयानुभवे दोषं तस्य दुस्त्यजत्वं च वर्णयन्ति—

(मूलम्)

स्वजनसुतात्मदारधनधामधरासुरथैः
त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥ ३५ ॥



स्वजनेति। श्रयतः आश्रितस्य सर्वरसे अप्राकृतस्वासाधारणसर्वभोग्यभूते, आत्मनि सर्वान्तर्यामिणि त्वयि सति नृणां स्वजनादिभिः 'कलत्रसुतसोदरानुचरबन्धुसम्बन्धिभिः। धनप्रभृतिकैरपि' किं? अनुकलं भयावहत्वाद् निन्द्यैव स्यात्, न किमपि फलमिति भावः। इति सत् इत्थं तत्त्वम्, अजानतां रतये मिथुनतश्चरतां स्त्रिया मिथुनीभावेन क्षुद्रसुखमनुभवतां मध्ये, निर्धारणे षष्ठी, को नु को वा पुरुषः, स्वविहते स्वत एव नश्वरे स्वनिरस्तभगे स्वत एव यौवनावगमे इच्छायामपि निरस्तकामे इह संसारे सुखयति सुखीवाचरति, न कोऽपि सुखीभवतीति किमु वक्तव्यमिति भावः ॥ ३५ ॥

श्लो— आश्रिताखिलरसेऽखिलात्मनि
त्वय्यपि स्वजनदारधनोत्कैः।
किं न्वितीदमविजानतां नृणां
कस्त्रिया मिथुनतः सुखयीत ॥ २१ ॥

एवं गुरूपसदनफलभूतं वैराग्यप्रकारमुक्त्वा उपसदनीयगुरोः स्वरूपं भगवदवतारत्वलक्षणविशेषं चाहुः—

(मूलम्)

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥ ३६ ॥

भुवीति। विमदाः निरहङ्काराः, अत एव भवत्पदाम्बुजं हृदि येषां तथाभूताः, अत एव अघभिद् पापहृत् अङ्घ्रिजलं पादोदकं येषां ते तथाभूताश्च ये ऋषयः नित्यसुखे निरतिशयानन्दस्वरूपे आत्मनि नियन्तरि धारके वा त्वयि सकृन्मनो दधति। यद्वा, नित्यसुखे मोक्षविषये मनः सकृद् दधति उपायविरोधिपापप्रायश्चित्ततया वा, प्राप्तिविरोधिपापप्रायश्चित्ततया वा सकृद् आत्मसमर्पणं कुर्वन्तीत्यर्थः। ते उत त एव भुवि पुरुपुण्यानि बहुपुण्यकर्माणि तीर्थसदनानि पावनजलस्थानसदृशाचार्याश्रमभूतानि, भवन्तीति शेषः। उक्तविशेषणत्वमेव आचार्यावतारलक्षणमाचार्याश्रमविशेषपरिग्रहनिमित्तं चेति भावः। तदेवाहुः—न पुनरिति। अस्य त इत्यादि। ते पुनः नित्यसुखे निहितमनस्काः पुनः पुरुषाणां सारं वैराग्यादि, तद् हरन्तीति तादृशानि आवसथानि येषां तान्, गार्हस्थ्याश्रमवतो नोपासते नोपसीदन्तीत्यर्थः। एवम्भूतग्रहविस्मरणपर्यन्तवैराग्यादिकमेव आचार्यत्वनिमित्तमित्यर्थाद् आश्रमान्तरपरिग्रहसिद्धिरिति भावः॥ ३६॥

श्लो— लक्ष्मीनृसिंह तव पादसरोजचित्ताः
पापापहाङ्घ्रिसलिला विमदा महान्तः।
न्यस्यन्ति ये सकृदिह त्वयि मोक्षकाङ्क्षा-
स्ते तीर्थतां दधति गेहसुखत्यजश्च॥ २२॥



अथ न केवलमाचार्यावतारस्य वैराग्यप्राप्तिहेतुत्वम्, अपि तु वेदान्तार्थशिक्षाद्वारा प्रपञ्चमिथ्यात्ववादादिकुतर्कवादक्षोभपरिहारकत्वं च सिद्ध्यतीत्याहुः—

(मूलम्)

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक्।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान्॥ ३७॥

सत इति। इदं विश्वं सत् सत्यं, कुतः? सत उत्थितमिति हेतोः। यत् यदुपादानकं तत् तदाकारमिति व्याप्तिश्चाभिप्रेता। इत्थं प्रपञ्चसत्यत्वसाधनमनूद्य दूषयति - इति चेन्नेति! तर्कहतं अनुमानदूषितमित्यर्थः। ननु किं दूषणं पुरुषोपादानककेशादौ पुरुषाकारत्वाभावाद् व्यभिचार इति चेन्नेत्याह—व्यभिचरति क्वेति। न क्वापि व्यभिचरतीत्यर्थः। केशादौ चेतनांशहेतुकत्वानङ्गीकारादिति भावः। शुक्तिरजतादौ स्वाप्नहस्त्यादौ च सदुपादानत्वेऽपि सत्यत्वाभावाद् व्यभिचार इत्याशङ्क्याह—क्वेति। न क्वचिद् मृषेत्यर्थः। शुक्त्यादौ रजतांशसद्भावाद् रजतादिग्रहो नापूर्वरजतादिग्रह इति भ्रमरूपत्वाभावात् स्वाप्नहस्त्यादावीश्वरसृष्टत्वश्रवणात् तत्तत्कालमात्रानुभाव्यतया सद्भावान्नासत्यत्वमिति मिथ्याभूतस्यैवाभावाच्च

व्यभिचार इति भावः। सत उत्पत्तिवैयर्थ्यात् असदेव कार्यमुत्पद्यत इति वक्तव्यमित्यसत्कार्यवादं परिहरति—न तथेति। तत्प्रकारेणैव न भवति। किं तु उभययुग् भवति। कारणत्वकार्यत्वावस्थाद्वययुक्तं भवतीत्यर्थः। पूर्वं सत्त्वेनावस्थितस्य अवस्थान्तरयोगमात्रान्न सत्त्वं बाध्यत इति भावः। यद्वा, तथा व्यभिचारवदुभययुग् न भवतीति कथ स्यात्? सर्वत्रोभययुक् च स्यादेवेत्यर्थः। ननु तर्हि कार्यकारणयोरनन्यत्वे मृत्सुवर्णादेः घटमकुटादिव्यवहारः प्रसज्ज्येतेत्यत्राहुः—व्यवहृतय इति। विकल्पः अवस्थाभेदः संज्ञाभेदश्च व्यवहृतये जलाहरणाद्यर्थाय 'घटमानय' इत्यादिव्यवहाराय इषितः तत्तदवस्थाप्रयोजककुलालादिना अभिमतः। एवं च कारणावस्थायां संज्ञाभेदस्य प्रवृत्त्यभावान्न तथा व्यवहारप्रवृत्तिरिति भावः। अत एव "बहु स्यां प्रजायेय" इति सत एव ब्रह्मणो बहुभवनं सङ्कल्प्य सृष्टिप्रकार उक्तः इति बोध्यम्। ननु "अथ पुरुषो ह वै नारायणोऽकामयत—प्रजाः सृजेयेयेति। नारायणाद् ब्रह्माऽजायत" इत्यपि कारणाद् भेदेन कार्यसृष्टिरपि श्रूयत इति कथं सत्कार्यवादसिद्धिरिति चेदत्राहुः—अन्धपरम्परया अनिरूपकलोकव्यवहारक्रमेण ते भारती उक्तश्रुतिवाक्यरूपा वाक् उक्थवृत्तिभिः उक्थजडान् कर्मजडान् बहुव्यापारैरनादिकर्माभ्यासेन ज्ञानाभ्यासविधुरान् भ्रमयति तदीयज्ञानवासनानुगुणं स्थूलारुन्धतीन्यायेन नारायणस्य ब्रह्मादिसर्वकारणत्वप्रबोधनाय अतात्त्विकमर्थं बोधयतीत्यर्थः॥ ३७॥



श्लो— सतो जातं सर्वं सदिति नियमो न व्यभिचरेद्
मृषाभूतं स्वाम्नायपि न सृजते सेति निगमात्।
द्वियुक् च स्यादिष्टं विविधकलनं व्यावहृतिकं
वचस्ते कर्मान्धान् भ्रमयति बहुव्याप्तिमयान्॥ २३॥

एवं कार्यसत्यत्वं कार्यकारणयोरनन्यत्वं सत्कार्यवादं च सयुक्तिकमुपपाद्य तत्र प्रमाणतया "यथा सोम्यैकेन" इत्यादिश्रुत्युपपादितमृत्तिकातत्कार्यादिदृष्टान्तवर्णनस्य परोक्तार्थं दूषयन्ति—

न यदिदमग्र आस न भविष्यदतो निधनाद्
अनुमतमन्तरा त्वयि विभाति मृषैकरसे।
अत उपमीयते द्रविणजातिविकल्पपथैः
वितथमनोविलासमृतमित्यवयन्त्यबुधाः॥ ३८॥

न यदिति। यत् यस्मात् इदं अग्रे सृष्टेः पूर्वं, नास नासीत्; निधनात् अनु प्रलयादनन्तरं न भविष्यत् न भविष्यति; अतः कारणात् अन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा-मिथ्यारूपमेव विभाति, इति मतं निश्चितम्। विवादाध्यासितमसत् आद्यन्तयोरविद्यमानत्वात् विकारित्वात् दृश्यत्वाद्वा, शुक्तिरजतादिवत् इति। तदेतत् श्रुतिरेव द्रढयतीत्याह—अत इति। अतः उक्तानुमानान्मिथ्यात्वादेव द्रविणजातीनां मृल्लोहकार्ष्णायसानां विकल्पाः घटकुण्डलादयः, तेषां पन्थानो मार्गाः, प्रकाराः, तैः

उपमीयते सदृशतया निरूप्यते। तत्र कार्याणां नामधेयमात्रता-कारणं मृदाद्येव सत्यं तथैव आकाशादीनां नाममात्रता ब्रह्मैव कारणं सत्यमिति "यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, यथा सोम्य एकेन लोहमणिना, यथा सोम्य एकेन नखनिकृन्तनेन" इत्यादिश्रुत्या सदृष्टान्तं कार्यमिथ्यात्वं प्रतिपाद्यत इत्यर्थः। अथैतद् दूषयन्ति—वितथेति। इति इत्थं वितथमनसां अयथावस्थितबुद्धीनां विलासं एवंविधकार्यमिथ्यात्वपरतया श्रुत्यर्थवर्णनरूपं ऋतं प्रामाणिकं अबुधा अवयन्ति, न तु बुधा इत्यर्थः। एकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते तन्निर्वाहाय कारणकार्ययोरनन्यत्वं सन्द्रढयितुं मृत्पिण्ड-तत्कार्यादिदृष्टान्तेन असत्कार्यवादनिरासमुखेन मृत्तिकादिकारणद्रव्याणां कार्ये घटशरावादौ अनुवृत्तिमात्रप्रतिपादिका श्रुतिरिति निरूपका वर्णयन्ति। अन्यथा मिथ्याभूतकार्यस्य कारणविज्ञानेन ज्ञातत्वोप-पादनासम्भवात् श्रुतेरसङ्गतार्थत्वं स्यादिति स्पष्टमेव। विकारो नामधेयं वाचारम्भणमेव - वाक्पूर्वकजलाहरणादिव्यवहारमात्रार्थमेव, न तावता मृत्तिकाद्रव्यविनाश इति तद्द्रव्यानुवृत्तिं दर्शयति श्रुतिः। अत एव 'मृत्तिकैव सत्यम्' इति नोक्तम्, "मृत्तिकेत्येव सत्यम्" इत्यनेन तु विकारनामधेययोः सतोरपि मृत्तिकेत्येव = मृत्तिकाद्रव्यत्वेनैव सत्यम्, प्रमाणेनोपलब्धं, न तद्भिन्नत्वेनेति सिद्ध्यतीति भावः॥



श्लो.— मृल्लोहमण्यादितदुक्तवस्तुनो
दृष्टान्तवादाज्जगतो मृषात्मताम्।
अज्ञा विदुः; वेदविदस्तु सर्वधी-
सज्ज्ञानलभ्येति वचो निरूहिरे॥ २४॥

एवं प्रपञ्चमिथ्यात्ववादे मृत्-तद्विकारादिदृष्टान्तपरश्रुत्यर्थविरोध-मुपपाद्य "अजामेकां लोहितशुक्लकृष्णां" इति श्रुतिसिद्धप्रकृतिपुरुषे-श्वरविवेकविरोधमप्याहुः—

(मूलम्)

स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः।
त्वमुत जहासि तामहिरिह त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः॥ ३९॥

स इति। यत् यस्मात् अजया अनादिभूतया प्रकृत्या सह गुणांश्च लोहितादिरूपान् रजस्सत्त्वतमोरूपांश्च जुषन् अनुभवन् सः जीवः अपेतभगः अनादिनष्टस्वाभाविकापहतपाप्मत्वाद्यैश्वर्योऽभवद्, तत् तस्मादेव अजामनु शयीत प्रकृतिपरतन्त्रतया स्वरूपाज्ञानात् स्वपितीत्यर्थः। "जनयन्तीं सरूपां" इत्यस्यार्थमाहुः— अत एव सरूपतां प्रकृतिपरिणामदेवादिदेहरूपतामनु देहारम्भक्रमेण सह मृत्युं संसृतिं भजति। त्वमुत त्वं तु आत्तभगः स्वत एव गृहीतापहत-पाप्मत्वाद्यैश्वर्यः त्वचं भोगं अहिरिव, अजामित्यनुषज्यते, तां जहासि

तदधिष्ठातृत्वेऽपि तत्पारतन्त्र्यं न यासीत्यर्थः। कुत एवम्? इत्यत्राहुः— अपरिमेयभग इति। अपरिच्छिन्नमाहात्म्यः, विचित्रशक्तिक इति यावत्। तादृशः सन् अष्टगुणिते सञ्जाताष्टगुणे स्वत आविर्भूतापहतपाप्मत्वादिके महसि तेजोमये दिव्यलोके महीयसे पूज्यसे। नित्यमुक्तादिभिरेवं नित्यमनुभूयसे-इति यावत्। एवं सत्यभूतप्रकृतिसम्बन्धेन सत्यभूतजीवस्य सत्यभूतसत्त्वादिगुणपरिणामदेहात्माभिमानस्य सत्यभूतसंसारस्य च तत्प्रत्यनीकस्वरूपत्वस्य भगवति च प्रतिपादनात् ब्रह्मण एव जगदध्यासादिवर्णनमेतच्छ्रुतिविरुद्धमिति स्पष्टमेवेति भावः ॥ ३९ ॥

श्लो.— जीवस्त्वज्ञामनुशयीत गुणांश्च जुष्टः
सारूप्यमेति निजरूपतिरोधिमृत्युम्।
त्वं तु त्यजस्यनुभवन्नपि तां यथाऽहि-
स्तेजोमयेऽष्टगुणिते महितो महद्भिः ॥ २५ ॥

एवं "भुवि पुरुपुण्यतीर्थसदना" दिश्लोकोक्ताचार्यावतारफलभूतयोर्वैराग्यमतान्तरक्षोभपरिहारयोः प्रकारमुक्त्वा, आचार्याभासानां भगवदवतारत्वाभावं सूचयितुं तच्छ्लोकोक्तवैराग्यबाधज्ञानप्रकारमाहुः—

(मूलम्)

यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः।
असुतृप योगिनामुभयतोऽप्यसुखं भगवन्
अनपगतान्तकादनधिरूढपदाद् भवतः ॥ ४० ॥



यदि नेति। यतयः आचार्या श्रमच्छद्मना यतिवेषधराः हृदि मनसि कामजटाः विषयेच्छारूपाज्ञानवसनाः न समुद्धरन्ति यदि स्वस्यैव न निरस्यन्ति यदि, येषामिति शेषः। असतां दुष्टभावानां हे भगवन् त्वं हृदिगतो मनोगतः, वक्षस्स्थोऽपि मणिरस्मृतश्चेद् यथा दुरधिगमस्तद्वत् दुरधिगमः दुर्ज्ञानः दुष्प्राप इत्यत्र किमु वक्तव्यमित्यर्थः। "रागादिदूषिते चित्ते नास्पदी मधुसूदनः" इत्युक्तरीत्या स्वस्य वैराग्यपर्यन्तभगवद्भक्त्यभावे स्वाश्रितवैराग्यहेतुत्वं तेषां कथं स्यादिति भावः। एवमवैराग्येऽपि ये यत्याश्रमस्वीकारमात्रेण योगाभ्यासं कुर्वते तेषामिह परत्र च दुःखमेव फलतीत्याहुः—असुतृपेति। असुतृपाः अशनपानादिभिः प्राणरक्षणतृप्ताः ये योगिनः निन्दितयोगाः, कर्मयोगाधिकारे सत्यपि कर्माणि संन्यस्य ज्ञानयोगप्रवृत्तेर्निषिद्धत्वादिति भावः। उभयतः उभयविधात् भवतः भवात्, संसारात्, भवतः स्वतश्च। आद्ये भवशब्दात् तसिः। द्वितीये भवच्छब्दात् पञ्चमी। असुखं दुःखमेव, भवतीति शेषः। तत्राद्येऽसुखनिमित्तमाहुः—अनपगतान्तकात्। अनपगतः— अनिवृत्तः, अन्तकः मृत्युहेतुभूतकामादिर्यस्मिन् भवे तस्मादित्यर्थः। अन्त्ये तन्निमित्तमाह—अनधिरूढेति। अनधिरूढं धारणया बुद्ध्यनारूढं पदं पदाब्जं यस्य तस्मात् त्वत्त इत्यर्थः। उक्तरीत्या विषयप्रवणचित्तेन भगवद्रूपस्य बुद्ध्या दुर्ग्रहत्वात् तद्विषयभक्तियोगालाभेन तत्प्रयुक्तसुखानुभवसम्भवाद् अशक्यारम्भक्लेश एव फलतीति भावः। एवं च एवंविधयतीनामाचार्यावतारत्वाभावः सिद्धः। अन्येषां वैराग्यादिना उद्धरणहेतुत्वबाधनिश्चयादिति बोध्यम् ॥ ४० ॥

श्लो.— विषयविषविदष्टा नोद्धरन्ति स्वमेते
यतय इह हृदिस्था विस्मृता कण्ठिकेव ।
त्वमसुगम इहैषां योगिनां प्राणितृणा-
मसुखमुभयतस्त्वद्ध्यानदुःखादघाच्च ॥ २६ ॥

ननु (किं?)कर्तर्व्याचार्यावतारलक्षणम्? इत्यत्र, प्रसङ्गात् पूर्वोक्ताचार्यावतारलक्षणमेव विशिंषन्ति—

(मूलम्) त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोः
गुणविगुणान्वयांस्तर्हि न देहभृतां च गिरः ।
अनुयुगमन्वहं सगुण गीतपरंपरया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४१ ॥

त्वदवगमीति । त्वामवगमी अवगमिष्यन्, भक्तियोगेनानुभविष्यन् इत्यर्थः । अवपूर्वाद् गमेः 'भविष्यति गम्यादयः' इति भविष्यदर्थे इनिः । त्वमनुबुभूषुरिति यावत् । **भवदुत्थशुभाशुभयोः** कर्मानुगुणं **भवतः** संकल्पात् उत्थयोः **शुभाशुभयोः**—पुण्यपापयोः, **गुणविगुणयोः** तत्फलभूतसुखदुःखयोः **अन्वयान्**, **तर्हि**—तदानीं, **देहभृतां**—प्राणिनां, **गिरः**—स्तुतिनिन्दागिरश्च, **न वेत्ति**—न स्मरति, "मानावमानयोस्तुल्यः तथैव सुखदुःखयोः" इत्युक्तेरिति भावः । एवम्भूतः कथं भवतीत्यत्राहुः—**हे सगुण** गुणविशिष्ट, **अपवर्गगतिः** मोक्षप्रापकः, **त्वं यतः** कारणात्, **अनुयुगमिति अन्वहं** प्रतिदिनं, **अनुयुगं** अनुकलं, स्वाध्यायार्हयावत्काल इत्यर्थः । **मनुजैः**



भक्तैर्जनैः, **गीतपरम्परया** स्तोत्रपरम्परया, भाषागानादिक्रमेण वा, **श्रवणभृतः** श्रवणेन धृतः त्वत्कथाश्रवणादिभिस्त्वमेव स्मृतः ततः पूर्वोक्तसुखदुःखादिकं न स्मरतीति भावः । "नैषाऽतिदुस्सहा क्षुन्मां त्यक्तोदमपि बाधते । पिबन्तं त्वन्मुखाम्भोजात् च्युतं हरिकथामृतम् ॥" इति भगवत्कथाश्रवणस्य विषयान्तरास्मरणहेतुत्वानुभवोक्तेरिति भावः ॥४१॥

श्लो— त्वदनुभवसमुत्का न स्मरन्ति क्षुदादीन्
चपलमनुजवल्लप्तस्तोत्रनिन्दादिकं च ।
अनुकलमनुवलं मोक्षहेतुस्त्वमेव
प्रगुण नुतिसुधाभिः पूर्णकर्णैर्धृतो यैः ॥ २७ ॥

इत्थं प्रलयकालस्थं भगवन्तं, सृष्टिपूर्वकवेदप्रवर्तनप्रभृत्याचार्यावतारपर्यन्तजगदुज्जीवनाय यतस्वेति प्रार्थनामुखेन संस्कु(स्तु?)त्य त्वदीयकारुण्यादिव्यापाराणामनन्तत्वाद् वक्तुं न शक्नुम इति विरम्य सूक्ष्मचेतनाचेतनाभावनिरासमुखेन तत्सद्भावमुपदिश्य "सदेव" इत्यादिवाक्यानां भगवति निश्वसितमयतया निलीनत्वं प्रतिपाद्य "कथं चरन्ति श्रुतयः" इत्याक्षेपं परिहरन्त्य उपसंहरन्ति—

(मूलम्)

द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयः
त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥४२॥

**द्युपतय इति।** नन्तु भगवन् **द्युपतयः** स्वर्गादिपतयः इन्द्रब्रह्मादय **एव ते अन्तं** स्वरूपस्वभावपारं **न ययुः** न जानीयुः, किं बहुना, **त्वमपि न यासि।** कुतः? **अनन्ततया**—स्वरूपादेः अपरिच्छिन्नतया। यद्वा, ते **द्युपतय एव अनन्ततया** अपरिच्छिन्न-स्वरूपगुणकतया **अन्तं** स्वरूपगुणावधिं **न ययुः** न जानीयुः, नतु त्वत्सङ्कल्पात्मिका वयमित्यर्थः, त्वं तु यास्येवेत्यर्थः। कथम्भूतम्? इत्यत्राहुः—**अन्तराः** आवरणसप्तकान्तर्वर्तिनः, **अण्डनिचयाः** इति यत् तादृशमन्तमित्यर्थः। **सावरणाः** आवरणसप्तकसहिताः सन्तः **खे** आकाशे **रजांसि वयसा** पक्षिणा **सह** एव **वान्ति** सूक्ष्मतया सञ्चरन्ति(न्ते?)। त्वया सह वान्तीति विपरिणामेन सम्बन्धः। अनेन दृष्टान्तेन चेतना-चेतनात्मकप्रपञ्चस्य सूक्ष्मतया तदानीं सद्भावो भगवतस्तदन्तर्यामितया अवस्थानं सर्वव्यापित्वं च उक्तं भवतीति प्रश्नान्तर्गतनिर्गुणत्वं ब्रह्मणः परिहृतं भवति। अनन्ताण्डानां सूक्ष्माकाराणामन्तरात्मतया नियन्तृत्व-कथनेन अनन्तस्वरूपगुणत्वं च फलितम्। अथ, गुणवृत्तयः श्रुतयः अनिर्देश्ये कथं साक्षात् प्रत्यक्षतया प्रवर्तन्ते? इत्याक्षेपं परिहरन्ति - **यच्छ्रुतय इति। श्रुतयः** "सदेव सोम्येदमग्र आसीत्" इत्यादयः **भवति** जगत्कारणभूते त्वयि **निधनं** लयः यासां तादृशः सत्यः, त्वयि निलीनाः सत्य इति यावत्। **अतन्निरसनेन** तेषामण्डा-नामभावः **अतत्**, अर्थाभावेऽव्ययीभावः, तस्य **निरसनेन** 'इदं सदेव' **इति** सामानाधिकरण्यनिर्देशेन जगतस्तदानीमपि बोधनद्वारा निवर्तनेन **त्वयि फलन्ति हि** त्वदीयसद्भावबोधने पर्यवस्यन्ति हीति



यत् तादृशमित्यर्थः। त्वदीयनिःश्वासात्मकसंकल्परूपास्त्वयि निलीनाः श्रुतयो जगदसद्भावनिरसनमुखेन त्वदीयसद्भावं ज्ञात्वा "सदेव सोम्ये-दमग्र आसीत्," "असद्वा इदमग्र आसीत्" इत्यादिरूपेण प्रवर्तन्त इति भावः। अनेन तदानीं श्रुतीनां प्राकृतसृष्ट्यनन्तरभाविशब्द-रूपत्वं परिहृतं भवतीति भगवत्सङ्कल्पायत्तस्थितिकस्वरूपाभिः ताभिः सूक्ष्मप्रपञ्चविशिष्टब्रह्मसद्भावज्ञानस्य शक्यत्वेन अनिर्देश्ये सदसतः परे साक्षात् कथं प्रवर्तन्ते? इत्याक्षेपः परिहृत इति बोध्यम्। एवंविधानन्त-श्रुतिप्रवर्तनानुगुणविचित्रशक्तिकथनेन अपरिच्छिन्नस्वरूपगुणत्वं च प्रकृतं समर्थितमिति सिद्धम् ॥ ४२ ॥

श्लो.— विधिशिवसनकाद्या एव नेयुस्तवान्तं
त्वमपि न तु यदण्डान्याप्तसप्तावराणि।
ख इव शकुनियुक्ता वान्ति भौमाः परागाः
सदिदमभवदित्थं सन्मय त्र्यय्य आहुः ॥ २८ ॥

इत्थं किङ्गृहवासिभिर्बुधवरैर्ब्रह्मात्मधीलिप्सुभिः
श्रीमद्भागवते क्वचिच्छ्रुतिमयीं गीतां विजिज्ञासुभिः।
पृष्टो वीररघूद्वहादिशठजिद्भिक्षुः सतां प्रीतये
तां व्याचष्ट यथामति श्रुतिशिरस्सूरेर्दयाप्रेरितः ॥

श्रीवण्शठकोप श्रीवीरराघवशठकोपयतीन्द्रमहादेशिककृतिषु
श्रीश्रुतिगीताव्याख्या सम्पूर्णा

श्रीमल्लक्ष्मीनृहरेश्चरणयुगाम्भोजलोलम्बैः ।
श्रुत्यन्तकुहरकण्डूनोदनचतुरैः सुधीमान्यैः ॥

स्मितशोभिसन्मुखाब्जैः श्रुतिमन्त्रार्थैः सुशोभिहृदयाब्जैः।
विगतधनगेहमोहैः विश्रुतशान्त्यादिसद्गुणैकान्तैः ॥

श्रीमद्वीररघूद्वहशठजित्सम्यम्यधीश्वरै रचिता ।
ललिता श्रुतिगीताया व्याख्या लिखिता तदीयेन ॥

अज्ञानध्वान्तभानुर्यतिपतिपरवागब्धिचन्द्रो यतीन्द्रः
स्थानं सन्मङ्गलानां सकलबुधगणश्लाघितानां गुणानाम् ।
प्रज्ञावज्ञातवाचस्पतिरमलगुणैरुल्लसत्स्वीयकाव्यः
श्रीमान् यो वीररघ्वीट्छठमथनगुरुः सुस्थिरश्रेयसे
स्या(स्ता?)त् ॥

योऽसौ श्रीमान् गुरुर्मे ज्ञपितचररहस्तत्त्वसच्छास्त्रजातो
जातां कण्डूं हरन् द्राक् कृतमतिपरिषत्सार्वभौमो बभू(भा?)से।
गार्हस्थ्येऽप्याश्रमे श्रीश्रुतिशिखरगुरुर्यद्वद् अद्य प्रणेता
श्रीभाष्यस्येव वादे विदलितकथको भासते हासशून्यः ॥

श्रीमते श्रीवण्शठकोप श्रीवीरराघवशठकोपयतीन्द्र-
महादेशिकाय नमः ॥

---

श्रीरस्तु

श्रीवण्शठकोप श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकविरचितम्

# श्रीमच्छारीरकसुप्रभातम्

हे देवाधिप हे दयेश्वर विभो वेधोऽश्वमेधावधे
हे योगीन्द्रशठारिमोहनतनो गोपाल रक्षामनो ।
काञ्चीपूर्णमनोऽमृतायितवचोमोचारसापूरित
श्रीरामानुजसूक्तिदुग्धजलधेरुत्तिष्ठ सुष्ठूदितम् ॥ १

हस्त्यद्रीश त्वयेदं जगदखिलमभूत् सत् पुरा येन भूयो
भूयः स्याम् इत्यवेक्ष्य प्रचुरमिदमभूर्यस्त्वमात्माऽखिलस्य ।
तादक्षत्वद्धियेदं सकलमिह यथा मृद्धिया मृन्मयं स्याद्
विज्ञानं हीति वेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ २

आप्नोति ब्रह्मवित् तत् परमथ गगनाद्यात्मनो भूतमात्मा
देहप्राणात्मभिन्नः प्रमदमय इहास्यैष आत्मा न चान्यः ।
सैष त्विच्छन् बहु स्याम् इति जगदसृजत् सोऽपरिच्छिन्नमोदो
हीत्यत्रानन्दवल्ल्यां सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ ३

आदित्येऽन्तर्नखान्तं कनकमयतनुस्तादृशश्मश्रुकेशः
कप्यासाम्भोरुहाक्षो दुरितत उदितो दृश्यते दिव्यरूपः ।
योऽसावक्ष्णीक्ष्यतेऽन्तः श्रुतिमयपुरुषो ब्रह्म तत् तस्य रूपं
तत् पद्मचस्येति वेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥४

आकाशात् सर्वभूतान्यजनिषत पुराऽऽकाशमेवापियन्ति
ज्यायान् आकाश एभ्यः परमयनमपि ह्येष आकाश एव ।
इत्थं देदीप्यमानाकृतिरखिलजगत्कारणं मोक्षदाता
प्राप्यश्चेत्यर्थवेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ ५

प्राणं सर्वाणि भूतान्यभिसमुपविशन्त्यैनमभ्युज्जिहीते
सर्वं प्रस्तावमेषा ह्यनुसरति परा देवतेत्यत्र वेदे ।
प्राणाधीनस्थितित्वेऽप्यखिलचिदचितां काष्ठलोष्टेष्वभावात्
त्वद्भूमैकान्तभावे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ ६

यज्ज्योतिर्दीप्यते द्योः परमिह पुरुषेऽन्तः स्थितज्योतिरेतद्
इत्युक्तासीमदीप्तिः परमपुरुष एवेति निर्णीतिदक्षे ।
पादो विश्वानि भूतान्यमृतमिह दिवीतोऽवशिष्टत्रिपादे-
त्यर्थे च्छन्दोगवेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ ७

प्राणः प्रज्ञात्मभूतस्तमिममममृतमायुश्च मामित्युपास्स्वे-
त्युक्तः प्राणेन्द्ररूपः परमपुरुष एवेति निर्णीतिदक्षे ।
सैष प्राणः प्रजानन् अमृतमजर आनन्द इत्यन्तरात्मा
साधारण्यार्थवेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ ८

सर्वं ब्रह्मेदमेतज्जनिलयभृतिकृद्धीत्युपासीत शान्तो
ब्रह्मैतत् प्राणदेहं हृदयमयमथाकाशरूपादिभूमा ।
इत्थं सर्वत्र लोके तनुभृदवगतं ब्रह्म लक्ष्मीश एवे-
त्येतां शाण्डिल्यविद्यामधिशयित रमाश्लिष्ट सुष्ठु प्रभातम् ९



ब्रह्मक्षत्रौदनोक्त्या निखिलविलयकृन्मृष्टमृत्यूपदंशो
दुर्दर्शो गूढहार्दः स्वविषयरुचिदः शोकहत्यै ह्युपास्यः ।
यष्टृणां सेतुरेषो भयमिह भविनामध्वपारस्वधामा
विष्णुर्ह्येवेति वेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ १०

अक्ष्याधारो य ईक्ष्यः पुरुष इह स आत्मेति होवाच चैतद्
ब्रह्मेत्याकारवेदेऽमृतमभयमयं वामनीर्भामनीश्च ।
संयद्वामश्च चक्षुस्स्थितिनियमनवान् ब्रह्म कं ब्रह्म खं चे-
त्युक्त्या त्वय्येव सक्ते सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥

पृथ्व्यां तिष्ठन् य एषोऽन्तर इह यमयत्येनमेषो न वेदे-
त्यन्तर्यामी त एषोऽमृत इति निगमे काण्वपाठक्रमेण ।
यस्तिष्ठन् सर्वलोकेष्वखिलनिगमयज्ञात्मनां सोऽन्तरात्मा
तेऽन्तर्यामीति माध्यन्दिननिगमशयोत्तिष्ठ सुष्ठु प्रभातम् ॥

योऽदृश्यत्वादिभूमा विभुरखिलगतं भूतयोन्यक्षरं तत्
पश्यन्ति ध्यानिनोऽमी इति निगमशिरोवेद्य सार्वज्ञ्यभूमे ।
दिव्योऽमूर्तः सबाह्यान्तर इह पुरुषोऽजोऽक्षराद् यः परः स्यात्
तस्मादुत्कृष्ट इत्युत्तरनिगमशयोत्तिष्ठ सुष्ठु प्रभातम् ॥ १३

आत्मानं त्वेव वैश्वानरमिममधुनाऽध्येषि नो ब्रूहि तर्ही-
त्यारभ्यात्मानमेवं प्रमितमभिविमानं च वैश्वानरं तम् ।
यस्तूपास्ते स सर्वेष्विति निगमसमुत्थापके को न आत्मा
किं ब्रह्मेत्यत्र वेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ १४

यस्मिन् ओतं द्युपृथ्व्याद्यखिलमपि मनःप्राणयुक्तं तमेकं
जानीथात्मानमन्या विसृजथ गिर एकोऽमृतस्यैष सेतुः ।
इत्यत्राथर्ववेदे त्वदनुगुणगुणैर्दृश्यताऽभावमुख्यैः
पूर्वं निर्णीतभावे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ १५

यत्रान्यन्नेक्षतेऽन्यन्न निशमयति नान्यद् विजानाति भूमा
सेति च्छन्दोगवेदे तरति शुचमिमामात्मविद्धीति पृष्टः ।
आचार्यः प्राह नामाद्यसुमदवधिकां ब्रह्मदृष्टिं विधाय
प्राणात् सत्यज्ञमात्मज्ञमिति बहुसुखोत्तिष्ठ सुष्ठु प्रभातम् ॥

एतद्वा अक्षरं तद्ध्यभिदधति बुधा गार्ग्यनण्वह्रसीयो-
ऽस्थूलादीर्घादिरूपं गगनमुखजगच्छासकं तद्विधर्तृ ।
इत्थं गार्गिश्रुतिस्थाक्षरपदगमितं द्रष्टृ दृष्टं परैरि-
त्यस्य व्यावृत्तभूमन् सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥

यस्तु ध्यायेत् त्रिमात्रं प्रणवमभिदधत् पूरुषं तं प्रकृष्टं
सूर्ये सम्पन्न एष क्षपितदुरित उन्नीयते ब्रह्मलोकम् ।
सैतस्माज्जीवपुञ्जात् परतरपुरुषं पश्यतीत्यत्र वेदे
वेधोमेधाकरं त्वां वदति सुखशयोतिष्ठ सुष्ठु प्रभातम् ॥ १८

यत् त्वस्यां ब्रह्मपुर्यामिदमथ दहरं पुण्डरीकं हि वेश्म
यस्तत्राकाश एषोऽन्तर इह दहरो यत् तदन्तस्तदेष्यम् ।
जिज्ञास्यं चेति वेदे ह्युपहतदुरितत्वादिभिस्त्वामुपास्यं
प्राप्तुः सत्येच्छभावं वदति सुखशयोत्तिष्ठ सुष्ठु प्रभातम् ॥



तिष्ठत्यङ्गुष्ठमात्रः पुरुष इह तथाऽङ्गुष्ठमात्रोऽन्तरात्मा
लोकानां सन्निविष्टो हृदय इह सदा भूतभव्येशितेति ।
इत्थं वेदे मनुष्यैर्हृदयपरिमितं त्वामुपास्यं मनुष्यान्
शास्त्रे शक्तांश्च वक्त्यतिसुखशयितोत्तिष्ठ सुष्ठु प्रभातम् ॥

जीवेनानुप्रविश्य स्थिरचरजगतां नामरूपप्रकाशं
कुर्वन् देवादिकानां त्वदधिजिगमिषां साधयन् हस्तिनाथ ! ।
ब्रह्माणं ब्रह्मविद्यां प्रति समुपगतौ देवराड्दैत्यराजा-
वित्यत्रेन्द्रोपदेशे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥ २१

वस्वादित्यादितासेरुपरि परपदाप्त्यर्थविद्यासु शक्तिः
वस्वादीनामपीति ध्वनयति निगमे ब्रह्मविद्यात्ववादे ।
नैवोदेताऽस्तमेतैकल इति विलयावस्थतद्ध्यानसिद्ध्या
कल्पेऽन्यस्मिंस्तदासिं फलयति शयितोत्तिष्ठ सुष्ठु प्रभातम् ॥

रैक्को जानश्रुतिं प्रत्युपदिशति परं ब्रह्म शूद्रेति हूत्वा
'ह्यब्रह्मज्ञाननिन्दाजनितशुचमिमां ख्यापयन् शूद्रशब्दः ।
विद्यानर्हं हि शूद्रं वदति तदपि स ब्राह्मणो वेत्तुमर्हेद्
इत्थं विद्योपदेशे द्रढयति शयितोत्तिष्ठ सुष्ठु प्रभातम् ॥ २३

आकाशो नामरूपे विदधदपि हितेत्यन्तरायत्तमेतद्
ब्रह्मेत्युक्तो न मुक्तो भवति न हि तयोरेष निर्वाहकः स्यात् ।
जीवेनोपास्य एष प्रकृतगदहराकाश एवात्र सेव्यो
व्याकर्ता नामरूपे इति निगमशयोतिष्ठ सुष्ठु प्रभातम् ॥ २४

खादिभ्योऽर्थाधिकानां नियमनविषये यः प्रकर्षस्तदुक्तौ
अव्यक्तोक्तं शरीरं न कपिलमतमित्यञ्जयन् ऊर्ध्ववेदे ।
ज्ञानं यच्छेन्महत्यात्मनि निजवशयेच्छान्त आत्मन्यमुं चेद्
आत्मादेर्वश्यतोक्तौ सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम्॥२५

एकाजां रक्तशुक्लासितभृतमखिलास्तत्सरूपाः सृजन्ती -
मेको जुष्टोऽनुशेते ह्यज इतर इमां भुक्तभोगां जहाति ।
इत्थं श्वेताश्वतर्यामुपनिषदि तथा तैत्तिरीयश्रुतौ च
ब्रह्मात्माजैककण्ठ्यां सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥

यस्मिन् पञ्चेन्द्रियाणि स्थितमपि गगनं तं तथैवात्ममानी
विद्वान् ब्रह्मामृतः स्यादमृतमिति पदे काण्ववाज्युक्तवेदे ।
एकाक्षे पञ्चजन्यव्यवहृतिघटकाकाशवागत्रवाक्यशेष -
व्यत्यासात् काण्ववेदे सुखशयित समुत्तिष्ठ सुष्ठु प्रभातम् ॥

तद्धेदं तर्ह्यव्याकृतमभवदिति प्रोक्तवेदाद् असद्वा
अग्रेऽभूदेतदित्यप्यसदिति वचसाऽव्यक्तहेतुत्ववादे ।
आकाशादौ य आत्मा जननकृदुदितः सोऽविभक्ताह्वयाङ्गः
सत्त्वेनोक्तस्त्वमेवेत्यवसित शयितोत्तिष्ठ सुष्ठु प्रभातम् ॥ २८

यो वै बालाक एषां जनक इह नृणां यस्य कर्मैतदेष
ध्येयः कौषीतकिश्रुत्युदित इति चितः कर्मणः कारणत्वे ।
प्राप्ते ब्रह्म ब्रवाणीत्यविदितपरमब्रह्म कर्ताऽयमादेः
कृत्स्नस्यैतस्य चेति त्ववसित शयितोत्तिष्ठ सुष्ठु प्रभातम् ॥



द्रष्टव्यः श्राव्य आत्मा मननपदमुपास्योऽर इत्यत्र वाक्ये
जायापत्यादियोगात् पुरुष उदित इत्यत्र बोध्ये मुमुक्षोः ।
मैत्रेयीं याज्ञवल्क्यप्रतिवचनगिराऽनुत्तमानन्दरूपात्
त्वत्तो जायाधनादीत्यवसित शयितोत्तिष्ठ सुष्ठु प्रभातम् ॥

इत्थं शारीरकाब्धौ शयितमुभयथा हेतुमस्यागमान्तैः
सर्वैर्वाक्यैः प्रतीतं वरदमुरुदयं यष्टुमुद्बोधयित्वा ।
[1]उद्बुद्ध्वा वीररघ्वीश्वरशठरिपुणा भिक्षुणा हेमलम्बि-
न्यब्देऽस्मिन् चापमासे दिनगणगणिताः स्रग्धराः सर्वधार्याः ॥

योऽसौ मेधाश्रुताद्यैर्दुरधिगमतयाऽऽम्नायशास्त्रैकयोनिः
यद्वाग्मूलि त्रयीयं परनिरसनतो नेति नेत्याह चैनम् ।
वेधोलब्धाश्वमेधः करिगिरिशिखरे वीक्ष्य हृष्टो यदक्षे
सञ्जातं देवराजं वरदमिममहं तत्र हस्ते समीक्षे ॥ ३२

इति श्रीवीरराघवशठकोपसंयमिसार्वभौममहादेशिकेन्द्रानुगृहीतं
श्रीमच्छारीरकसुप्रभातं सम्पूर्णम् ।

श्रीमते श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवक श्रीवण्शठकोप

श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकाय नमः ।

---

1. उत्पूर्वकस्य बुधधातोरत्र ल्यप् न्याय्यः ।

श्रियै नमः

श्रीवीरराघवशठकोपयतीन्द्रविरचिता

# वादतरङ्गिणी

वन्दे लक्ष्मीनृसिंहस्य चरणाम्बुजतल्लजम् ।
तन्निष्यन्दिमधुस्यन्दसदास्वादांश्च सद्गुरून् ॥ १ ॥

शठमथनशठारिलक्ष्मणार्यौ यतिवरदेशिकसत्तमौ स्वदेताम् ।
यतिपतिनिगमान्तसूरिसूक्ती यदभिगमेन हृदे मम स्वदेते ॥२॥

'सर्वनाम्नो वृत्तिमात्रे पुंवत्त्वम्' इति यद् वचः ।
वेदान्तगुरुमोदाय तस्य वादमुदीरये ॥ ३ ॥

तत्र तावत् 'दिङ्नामान्यन्तराले' (2-2-26) इति सूत्रभाष्ये 'दक्षिणपूर्वा' इत्यादौ अन्तराले विहितबहुव्रीहावपि अन्तरालस्य उभयसामीप्यादुभयरूपतया दक्षिणादेः सामानाधिकरण्य-सम्भवेऽपि भाषितपुंस्कत्वाभावात् पुंवत्त्वाप्राप्तेस्तुल्यतया तस्मिन् अन्यपदार्थे 'अनेकम्—' (2-2-24) इत्यनेन बहुव्रीहौ सिद्धे सूत्रवैयर्थ्यमाशङ्कमानेन भगवता भाष्यकृता पुंवत्त्वसिद्ध्यै 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इत्युपन्यस्तम् । तच्च 'दक्षिणोत्तरपूर्वाणाम्' इत्येवमर्थमावश्यकमिति च स्थितम् । एवम्, 'दक्षिणोत्तराभ्यामतसुच्'

(5-3-28) इति सूत्रभाष्ये अतसुचि अकारप्रत्याख्याने 'दक्षिणतः' इत्यादौ 'तसिलादिषु—' (6-3-35) इत्यनेन पुंवत्त्वस्याभाषितपुंस्कत्वादप्राप्तिमाशङ्क्य 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः' इति परिहृतम्। तत्र 'सर्वनाम्नः' इति वचने 'वृत्तिमात्रे' इत्यनेन किं विवक्षितम्? मात्रपदं च किमर्थम्? इति विवेचनीयम्। यदि तदवधारणार्थकम्—तर्हि तस्य विधेयभूतपुंवत्त्वान्वये वृत्तावेव पुंवत्त्वम्, नान्यत्र—इत्युक्तं स्यात्। तथा च नियमार्थत्वपर्यवसानात् तस्य प्राप्तिपूर्वकत्वात् अत्र तदभावस्य उक्तभाष्यद्वये स्पष्टत्वात् तदर्थत्वासम्भवेन वृत्तेरन्यत्र तत्प्रसक्तेरसम्भवेन व्यवच्छेद्याभावेन च मात्रपदवैयर्थ्यमेव स्यात्। 'सर्वनाम्नः' इत्यनेनान्वये तु—वृत्तावेव सर्वनाम्नः पुंवत्त्वम्-इत्युक्तं स्यात्। तथा च दक्षिणादिदिक्छब्दानां "दक्षिणापूर्वेति दिक्छब्दौ, दक्षिणः पूर्व इति व्यवस्थाशब्दौ" इति 'दिङ्नामानि—' (2-2-26) इति सूत्रभाष्योक्त्या, 'दक्षिणोत्तरेति दिक्छब्दौ, दक्षिण उत्तर इति व्यवस्थाशब्दौ' इति 'दक्षिणोत्तराभ्याम्—' (5-3-28) इति सूत्रभाष्योक्त्या च व्यवस्थाशब्दत्वाभावलाभेन सर्वनामत्वाप्राप्त्या 'विभाषा दिक्—' (1-1-28) इत्यनेन समासे तस्य विकल्पेन विधानात् वृत्तावेव तत्त्वाभ्युपगमेन तत्र पुंवत्त्वार्थतया सार्थक्येऽपि तेषां वाक्येऽपि पुंवत्त्वापत्तिः। भाष्ये वृत्तौ पुंवत्त्वाश्रयणसामर्थ्येन प्रत्यासत्त्या पुंवत्त्वस्य वृत्तावेव विधानाभ्युपगमेन वाक्ये तद्वारणेऽपि, 'सर्वकभार्यः, सर्वस्या आगतः सर्वमयः, सर्वामात्मन इच्छति सर्वकाम्यति' इत्यादौ पुंवत्त्वासिद्धिः। तत्र सर्व-



शब्दस्य सर्वस्यै, सर्वासामित्यादौ वाक्येऽपि सर्वनामत्वदर्शनात्। तथा च 'णेरणौ—'(1-3-67) इति सूत्रभाष्यप्रयोगे 'प्रथमद्वितीयकक्ष्ययोः' इत्यत्र पुंवत्त्वासिद्धिः। अतो मात्रशब्दो नावधारणार्थः। उपोद्घातः।

तस्य कात्स्न्र्यपरत्वे तु तस्य पुंवत्त्वरूपविधेयान्वये सर्वनाम्नः कृत्स्नवृत्तौ पुंवत्त्वमित्यर्थे सर्वनामत्वावच्छिन्नस्य वृत्तित्वव्यापकं पुंवत्त्वमित्युक्तं स्यात्। तथा सति 'सर्विका' इत्यादितद्धितवृत्तौ, 'सर्वे, सर्वाः' इत्याद्येकशेषवृत्तौ च पुंवत्त्वापत्तिः दुर्वारा। 'परमसर्वस्यै' इत्यादौ उत्तरपदभूतसर्वनाम्नः पुंवत्त्ववारणाय 'भस्त्रैषाऽजा—' (7-3-47) इति लिङ्गेन वृत्तिघटकपूर्वपदभूतसर्वनाम्न एव वृत्तित्वावच्छेदेन पुंवत्त्वम्—इत्यर्थस्वीकारेण तद्वारणेऽपि, वृत्तौ पुंवत्त्वम् इत्युक्तावपि अविशेषाद् वृत्तित्वावच्छेदेन पुंवत्त्वम्—इत्यर्थसिद्ध्या मात्रपदवैयर्थ्यं तदवस्थम्। पृथग् वचनबलादेव कर्मधारयादिवत् पर्युदासविषये निषेधविषये च प्रवृत्तिसिद्धेः। एतद्वचने भाषितपुंस्कपदान्वये मानाभावेन तद्विषयनिषेधादेः एतद्विषयेऽप्रवृत्तेश्च। वृत्तिमात्रशब्दस्य 'सर्वनाम्न' इत्यनेनान्वये तु वृत्तित्वावच्छेदेन सर्वनामत्वविशिष्टस्य पुंवत्त्वम्—इत्यर्थलाभेन राजपुरुषादौ सर्वनाम्नोऽसम्भवेन तदवच्छेदेन सर्वनाम्नोऽप्रसिद्ध्या वचनस्यैवासङ्गतिः। वृत्तित्वावच्छेदेनेत्यस्य वृत्तिविभाजकसमासत्वावच्छेदेन—इत्यर्थविवक्षायामपि तद्दोषतादवस्थ्यम्।

(1) वृत्तौ स्वविशिष्टत्वविशेषणदानेन सर्वनामघटितवृत्तित्वावच्छेदेन सर्वनामत्ववतः पुंवत्त्वम्—इत्युक्तौ तु सर्विकादिव्यावृत्त्यर्थं पूर्वघटकभूतस्यैव परिग्रहाय किञ्चिद्विशेषणदानस्यावश्यकत्वेन तस्य च वृत्तिपदार्थान्वितस्वपूर्वावयवकत्वरूपविशेषणतयैव आश्रयणेन स्वपूर्वावयवकवृत्तित्वावच्छेदेन सर्वनाम्नः पुंवत्त्वम् - इत्यर्थप्रतिपादने पृथग् विशेषणान्तरानुपादानेन गौरवाभावेऽपि 'दिङ्नामानि—' (2-3-26) इति सूत्रभाष्योदाहृतदक्षिणपूर्वादेः 'विभाषा दिक्-समासे—' (1-1-28) इत्यनेन तस्य विकल्पेन विधानात् पक्षे तदभावादुक्तविशेषणालाभेन 'दक्षिणपूर्वस्यै दक्षिणपूर्वायै' इत्यादौ तदनापत्त्या भाष्यासङ्गतिः। 'दक्षिणपूर्वायै' इत्यादौ पुंवत्त्वासिद्धिश्च। 'प्रथमद्वितीयकक्ष्ययोः' इति 'णेरणौ—' (1 - 3 - 67) इति सूत्रभाष्यप्रयोगासिद्धिश्च। प्रथमादिशब्दस्य जसादिविभक्तावेव सर्वनामत्वविधानेन वृत्तौ तद्दौर्लभ्यात्।

(2) 'सर्वनाम्नः' इत्यस्योपलक्षणपरतया सर्वनामत्वोपलक्षितस्य वृत्तौ पुंवत्त्वम् - इत्युक्तौ तु मात्रपदवैयर्थ्यतादवस्थ्यम्। 'सर्वनाम्नः' इत्यस्योपलक्षणपरत्वसिद्ध्यर्थमेव तत् - इत्युक्तौ वृत्तावित्यस्य सतिसप्तमीत्वाश्रयणेन सर्वनामसंज्ञावतो वृत्तौ सत्यां पुंवत्त्वम् - इत्यर्थलाभे. प्राक् सर्वनाम्नो वृत्त्यनन्तरं पुंवत्त्वम् - इत्यस्य पर्यवसितत्वेन उपलक्षणत्वसिद्ध्या तद्वैयर्थ्यमेव।



(3) वृत्तेः प्राक् सर्वनामत्वस्य 'सर्वाम्' इत्यादौ द्वितीयान्तस्याभावेन तथा उपलक्षणत्वाश्रयणेऽपि, 'सर्वकाम्यति' इत्यादौ पुंवत्त्वासिद्ध्या तत्सिद्धये, यत्रक्वचित् सर्वनामत्वेन दृष्टस्य वृत्तौ पुंवत्त्वम् - इत्यर्थलाभाय मात्रग्रहणमिति समासप्रकरणशेखरोक्तरीत्याश्रयणे तु स्वाश्रयनिरूपितपूर्वावयवत्वसम्बन्धेन वृत्तित्वावच्छेदेन पुंवत्त्वं यत्रक्वचित् सर्वनामत्वेन दृष्टस्य विधीयत इत्यर्थसिद्ध्या मात्रपदलभ्यावच्छेदस्य उक्तरीत्या स्वान्वितवृत्तित्वप्रतियोगिकपुंवत्त्वप्राप्तिसामानाधिकरण्यव्यवच्छेदार्थत्वसम्भवेऽपि विधेयप्रत्यासन्नोद्देश्यतावच्छेदकसर्वनामत्वांशे किञ्चित्प्रतियोगिकसामानाधिकरण्यार्थत्वस्वीकारेण मात्रपदसार्थक्यसम्भवेऽपि सामानाधिकरण्यप्रतियोगिविशेषाकाङ्क्षायाः नियततया 'येन यदाक्षिप्तम्'—इति न्यायेन मात्रपदार्थावच्छेदान्वितवृत्तित्वस्यैव तद्गृहीतसामानाधिकरण्यप्रतियोगितयाऽन्वयस्य स्वरसतः सम्भवेन वृत्तित्वसामानाधिकरण्येन सर्वनामत्वोपलक्षितस्य निरुक्तसम्बन्धेन वृत्तित्वावच्छेदेन पुंवत्त्वम्—इत्यर्थस्यैव वाच्यत्वेन, तथा सति 'सर्वत्र' इत्यादौ 'किंसर्वनामबहुभ्यः—' (5 - 3 - 2) इत्यनेन विहितत्रलाद्यर्थतया 'सर्वनामत्वोपलक्षितस्य ततोऽन्यत्रापि वृत्तौ पुंवत्त्वम्—इत्यर्थपर्यवसानात् 'सर्वकभार्यः, सर्वमयः, सर्वकाम्यति, दक्षिणपूर्वा, दक्षिणतः, उत्तरतः', इत्यादिवृत्तौ तस्य पुंवत्त्वसिद्धावपि, प्रथमद्वितीयादिपदानां जसादिमात्रे सर्वनामत्वेन दृष्टत्वात्, वृत्तौ कश्चिदपि तत्त्वालाभेन पुंवत्त्वानापत्तौ 'प्रथमद्वितीयकक्ष्ययोः' इति भाष्यप्रयोगानुपपत्तिस्तदवस्था।

(4) तत्प्रयोगबलादेव सामानाधिकरण्यप्रतियोगिविशेषान्वयः— इत्युक्तौ तु मात्रपदार्थान्वितवृत्तित्वस्य स्वाश्रयनिरूपितपूर्वावयवत्वसम्बन्धे पूर्वत्वांशं परिहाय स्वाश्रयावयवत्वसम्बन्धेनैव सामानाधिकरण्यप्रतियोगितास्वीकारेण 'प्रथमे' इत्येकशेषवृत्तौ सर्वनामभूतप्रथमशब्दस्य तद्धितवृत्तिरूपद्वितीयशब्दस्य व्यपदेशिवद्भावेन स्वाश्रयावयवत्वसत्त्वेन 'द्वितीयस्मै' इत्यादिकमादाय तद्धितवृत्तौ सर्वनामभूतस्य वृत्त्यन्तरे पुंवत्त्वसिद्ध्या भाष्यप्रयोगानुपपत्तिपरिहारेण तद्बलेन प्रतियोगिविशेषान्वयस्य सर्वथा बाधायोगेन तत्स्वीकारावश्यकत्वे 'सर्विका, सर्वासाम्' इत्यादावपि पुंवत्त्वापत्तिः ॥

(5) 'विभाषा द्वितीयातृतीयाभ्याम्' (7-3-115) इत्यनेन तस्या विकल्पविधिना द्वितीयशब्दस्य व्यपदेशिवद्भावेन स्वाश्रयावयवत्वसम्बन्धेन वृत्तित्वसमानाधिकरणस्य वृत्तित्वमात्रेण पुंवत्त्वे आबन्ततादौर्लभ्येन स्याड्विधिवैयर्थ्यात्। तद्बलेन स्वाश्रयनिरूपितस्वाभाविकावयवत्वसम्बन्धेन वृत्तित्वसामानाधिकरण्यस्य विवक्षायां तु 'सर्विका' इत्यादौ पुंवत्त्वाप्राप्तिसिद्धावपि 'परमसर्वस्यै' इत्यादौ उत्तरपदभूतसर्वादेः पुंवत्त्वापत्तिः, 'प्रथमद्वितीयकक्ष्ययोः' इत्यत्र तदनापत्तिश्च दुर्वारा। निरुक्तसम्बन्धेन वृत्तित्वावच्छेदस्य सर्वाशब्दभूतोत्तरपदे निर्बाधत्वात्, अन्त्ये स्वाश्रयावयवत्वसम्बन्धेन वृत्तित्वसामानाधिकरण्येन सर्वनामत्वस्य दौर्लभ्याच्च। स्वाश्रयनिरूपितस्वाभाविकपूर्वावयवत्वविवक्षायां तु—'परमसर्वस्यै' इत्यादौ उत्तरपदभूतसर्वादेः



तदलाभात् पुंवत्त्ववारणेऽपि 'प्रथमद्वितीयकक्ष्ययोः' इत्यत्रानुपपत्तिरेव। सम्बन्धे स्वाभाविकत्वनिवेशेन प्रथमादिशब्दे तेन सम्बन्धेन वृत्तित्वसामानाधिकरण्येन सर्वनामत्वदौर्लभ्यात् ॥

(6) तत्प्रयोगबलात् प्रतियोगिविशेषान्वयस्य सर्वथा बाधायोगेऽपि तत्र पुंवत्त्वनिमित्तकोटौ परं निरुक्तसम्बन्धनिवेशेन तेन सम्बन्धेन वृत्तित्वावच्छेदे न पुंवत्त्वम्। सामान्यतः वृत्तित्वसामानाधिकरण्येन सर्वनामत्ववतः—इति विवक्षायामपि, 'परमसर्वस्यै, सर्विका, सर्वे' इत्याद्यर्थं सर्वनामत्वान्वयिसामानाधिकरण्ये वृत्तित्वस्य विफलपूर्वत्वांशघटितस्य स्वाभाविकातिदेशिकसाधारणस्वाश्रयावयवत्वसम्बन्धस्यैव घटनेन तेन सम्बन्धेन सर्वनामत्वस्यैव उपलक्षणत्वविवक्षया प्रथमादिशब्दस्य तत्त्वाबाधेन निरुक्तप्रयोगसिद्धावपि मात्रपदेन गृहीतसामानाधिकरण्यस्य प्रतियोगिविशेषाकाङ्क्षया उपस्थितवृत्तित्वस्यैव तत्त्वेनान्वयवद् उपलक्षणतया विवक्षितसर्वनामत्वस्य प्रकृतपुंवत्त्वार्थत्वासम्भवेन संज्ञाशास्त्रलभ्यस्य तस्य कार्यार्थतयैव उक्तिसम्भवेन तद्विशेषाकाङ्क्षाया नियततया उपस्थितवृत्तित्वस्यैव तत्त्वेनान्वये 'सर्वत्र' इत्यादिकमादाय वृत्तिविशेषफलकत्वस्य तत्र लाभेन स्वावच्छिन्नफलकत्वनिरुक्तसम्बन्धघटितस्वसामानाधिकरण्योभयसम्बन्धेन वृत्तित्वविशिष्टसर्वनामत्वस्यैव उपलक्षणत्वलाभे प्रथमादिशब्दस्य अकजादिकमादायापि स्वावच्छिन्नफलकसर्वनामत्वस्य असम्भवेन तद्दोषतादवस्थ्यम् ॥

(7) सर्वनामत्वस्य सर्वादिशब्दमादाय वृत्तित्वावच्छिन्नफलकत्वस्याबाधात् तस्यैव प्रथमादिशब्दे सत्त्वेन दोषवारणे तु—स्वाश्रयनिरूपितोद्देश्यतावच्छेदकत्वस्य स्वावच्छिन्नफलकत्वपर्यवसानभूमितया सिद्ध्या तस्याव्यावर्तकतया आकाङ्क्षितस्यापि फलाभावेनानिवेशापत्त्या तत्सार्थक्याय स्वाश्रयावयवपूर्वत्वसम्बन्धावच्छिन्नोद्देश्यतावच्छेदकत्वरूपतया स्वावच्छिन्नफलकत्वस्य पर्यवसाने विवक्षिते तादृशवृत्तेः त्रलादिरूपाया एव सम्भवेन तेन सम्बन्धेन तद्विशिष्टसर्वनामत्वस्योपलक्षणतया ग्रहणे द्व्यादिभिन्नस्यैव तत्रोद्देश्यतया तादृशसर्वनामत्वस्य उद्देश्यतावच्छेदकत्वविवक्षायां तद्व्यावर्तकतया सार्थक्योपपादनसम्भवेऽपि—'भवत्या आगतो भवन्मयः' इत्यादौ पुंवत्त्वानापत्तिः ॥

(8) ईदृशविवक्षायां गौरवेण आकाङ्क्षितस्यापि फलविशेषस्यानन्वयेन स्वाश्रयावयवत्वसम्बन्धेन वृत्तित्वसामानाधिकरण्येन सर्वनामत्ववतः स्वाश्रयाव्यवहितपूर्वत्वसम्बन्धेन वृत्तित्वावच्छेदेन पुंवत्त्वम् - इत्येव विवक्ष्यत इति सर्वातिप्रसङ्गाभावः, इत्युक्तौ तु 'सर्वस्याइव' इत्यादौ—

"इदाहिव उपस्तुतिमिदा वामस्य भक्तये ।
उप वो विश्व वेदसो नमस्युराँ असृक्ष्यन्यामिव ।"

(ऋक् 6 - 2 - 33 - 1) इति बाह्वृचश्रुतिप्रयोगे 'अन्यामिव' इत्यादाविव इवेन समासे विभक्त्यलोपे पुंवत्त्वनिमित्तवृत्तित्वावच्छेदप्रतियोगितावच्छेदकत्वाश्रयपूर्वावयवत्वाक्षतेः तेन सम्बन्धेन वृत्तित्वावच्छेदसत्त्वात्



पुंवत्त्वं दुर्वारम् । 'षष्ठ्या आक्रोशे' (6 - 3 - 21) इति अलुकि, 'शयवास—' (6 - 3 - 14) इत्यलुकि च 'सर्वस्याःपतिः' सर्वस्यांशयः' इत्यादिसमासेऽप्येवम् ॥

(9) लुग्विषयविभक्तिकत्वस्यावयवविशेषणतया सम्बन्धघटकत्वस्वीकारेण उक्तस्थले सर्वनाम्नस्तत्त्वालाभेन पुंवत्त्ववारणे तु—'विभाषा द्वितीया—' (7 - 3 - 115) इति सूत्रारम्भसामर्थ्येन उक्तविशेषणस्वीकारसम्भवेऽपि 'द्वितीयस्यै' इत्यादौ तावतैव पुंवत्त्वाभावसिद्ध्या 'विभाषा द्वितीया—' (7 - 3 - 115) इति सूत्रसार्थक्येन स्वाभाविकपूर्वत्वस्य अवयवविशेषणत्वालाभे 'सर्विका' इत्यादौ अकचि 'सर्वा' इत्याद्येकशेषे च लुगविषये पुंवत्त्वाभावेऽपि 'परमसर्वस्यै' इत्यादौ उत्तरपदस्य पुंवत्त्वं दुर्वारम्, पूर्वपदस्येव उत्तरपदस्यापि लुग्विषयविभक्तिकत्वस्य वृत्त्यवयवत्वस्य च अबाधात् उक्तसम्बन्धेन वृत्तित्वावच्छेदसत्त्वात् ॥

(10) स्वाश्रयनिरूपितलुगविषयसुब्विभक्त्यव्यवहितपूर्वत्वतावयवसम्बन्धेन वृत्तित्वावच्छेदविवक्षया तत्र पुंवत्त्ववारणे तु - तादृशगुरुभूतविशेषणापेक्षया स्वाश्रयावयवलुग्विषयसुबन्तत्वसम्बन्धेन वृत्तितावच्छेदविवक्षयैव 'सर्वस्याःपतिः, द्वितीयस्यै, सर्विका' इत्यादौ

सिद्धे 'विभाषा द्वितीया—' (1-3-115) इति सूत्रसार्थक्ये नञ्द्वयघटितगुरुभूतसम्बन्धनिवेशे मानाभावेन तदलाभे 'परमसर्वस्यै' इत्यादौ पुंवत्त्वं दुर्वारमेव। 'बहुसर्वस्यै' इत्यादौ 'बहुपटव:' इत्यादिवदर्थवत्त्वेन प्रातिपदिकत्वात् विभक्तिलुकि समुदायात् स्वादिष्वपि अन्तर्वर्तिसुपा स्वाश्रयावयवलुग्विषयसुप्कत्वाबाधेन पुंवत्त्वापत्तिश्च ॥

(11) उभयत्रावयवस्य सत्यपि पुंवत्त्वे पुनः समुदायात् सुप इव टापोऽपि प्रवृत्त्या विशिष्टस्य सर्वाद्यन्तत्वेन सर्वनामत्वेऽपि पुंवत्त्वविध्यन्वयबलात् स्त्रीप्रत्ययान्तस्यैव तस्य निरुक्तसम्बन्धेन वृत्तित्वावच्छेदस्य पुंवत्त्वनिमित्ततायाः वाच्यतया, तस्य च प्रकृते पूर्वान्तवत्त्वेनापि सर्वशब्दातिरिक्ते तदन्ते आस्थितस्य स्वाश्रयावयवप्रकृतित्वरूपतत्सम्बन्धस्य टाबेकादेशघटितसमुदाये दौर्लभ्येन तेन सम्बन्धेन वृत्तित्वावच्छेदानुपपत्त्या पुंवत्त्ववारणे तु 'बहुसर्विका' इत्यादौ अवयवस्योक्तरीत्या पुंवत्त्वानन्तरं टापि समुदायस्य पुंवत्त्वाप्राप्तावपि प्राक्प्रवृत्तपुंवत्त्वेन निवृत्तस्य इत्वस्य पुनः प्राप्तेः वाच्यतया टापः अन्तर्वर्तिसुपा सुपः परत्वेन 'बहुपरिव्राजका' इत्यादौ इव तस्याप्राप्त्या 'बहुसर्वका' इत्यादि दुर्वारम्। प्रागेव पुंवत्त्वाप्राप्तौ तु इत्वानिवृत्त्या 'बहुसर्विका' इत्यादिसिद्धिः स्पष्टैव। 'बहुपटवः' इत्यादौ प्रातिपदिकसंज्ञायाः चित्स्वरस्य विभक्त्यक्षरे प्राप्त्यभावार्थत्वस्यैव 'अर्थवत्—' सूत्रभाष्योक्तत्वेन तद्विरोधादिह रूपभेदे इष्टापत्त्ययोगात् ॥



(12) स्वाश्रयावयवाव्यवहितपूर्वपदत्वसम्बन्धेन वृत्तित्वावच्छेदेन पुंवत्त्वस्य स्वाश्रयावयवत्वसम्बन्धेन वृत्तित्वसामानाधिकरण्येन सर्वनामत्ववदुद्देशेन विधेयत्वस्वीकारेण 'सर्विका, सर्वे, द्वितीयस्यै, बहुसर्वस्यै, बहुसर्विका' इत्यादौ 'हल्ङ्या—' दिलोपादिना पदत्वेऽपि स्त्रीप्रत्ययान्तस्य व्यपदेशिवद्भावेन स्वाश्रयपूर्वावयवत्वपर्यवसिताव्यवहितपूर्वत्वस्यालाभेन पुंवत्त्ववारणे तु 'दक्षिणपूर्वस्यै' इत्यादौ सर्वनामत्वार्थमारब्ध –'विभाषा दिक्समास—' (1-1-28) सूत्रानुरोधेन स्वाश्रयपूर्वपदत्वविवक्षया तत्र पूर्वावयवत्वस्य आतिदेशिकसाधारणतया ग्रहणे 'एषिका' इत्यादौ व्यपदेशिवद्भावेन स्वाश्रयनिरूपितपूर्वत्वस्य 'हल्ङ्या—' (6-1-68) दिलोपस्य प्रत्ययलक्षणेन पदत्वस्य च सत्त्वेन पुंवत्त्वापत्तौ टाप्परकत्वाभावेन इत्वाप्राप्त्या 'भस्त्रैषा—' (7-3-47) इति सूत्रे एषाग्रहणवैयर्थ्येन तत्सामर्थ्यात् पूर्वत्वस्य स्वाभाविकतयैव ग्रहणसम्भवेन च दर्शितसम्बन्धविशेषनिवेशलाभेन दर्शितस्थलेषु दोषाभावेऽपि 'सर्वस्याःपतिः' इत्यादौ 'स्वादिषु—' (1-4-17) इत्यनेन स्याडादिकमादाय पदत्वेऽपि तदादाय पुंवत्त्वस्य, 'सन्निपात—' परिभाषया प्राप्त्यभावेन दोषाभावेऽपि च 'सर्वासांपतिः, सर्वासामिव' इत्यादौ समासे 'स्वादिषु—' (1-4-17) इत्यनेन सर्वा इत्यस्य पदत्वात् तत्समासपूर्वावयवत्वाच्च स्याडादेरिव पुंवत्त्वेन सुटो निवृत्त्यभावेन 'सन्निपात—' परिभाषया तद्वारणासम्भवेन पुंवत्त्वं दुर्वारमेव ॥

(13) 'दक्षिणपूर्वस्यै' इत्यादावपि 'उत्तरपदत्वे च' इति प्रत्ययलक्षणप्रतिषेधेन उत्तरखण्डस्य पदत्वाभावेन पुंवत्त्वाभावसिद्ध्या स्वाच्छिन्नप्रयुक्तपदत्वविवक्षयैव 'विभाषा दिग्' इत्यादिचारितार्थ्येन सर्विकेत्यादौ हल्ङ्यादिलोपादेः ङ्याबन्तत्वप्रयुक्ततया तन्निमित्तपदत्वस्य वृत्तित्वावच्छिन्नप्रयुक्तत्वाभावेन सर्वासांपतिरित्यादौ 'स्वादिषु' इत्यनेन पदत्वस्य वृत्तित्वावच्छिन्नप्रयुक्तत्वाभावेन च निरुक्तसम्बन्धेन वृत्तित्वावच्छेदालाभेन उक्तस्थलेषु पुंवत्त्ववारणे तु 'सर्वकभार्यः, सर्वकाम्यति, सर्वमयः, दक्षिणपूर्वस्यै, दक्षिणतः, उत्तरतः, प्रथमद्वितीयकक्ष्ययोः' इत्यादौ सर्वत्र समास-सनाद्यन्त-तद्धितान्तत्वादिप्रयुक्तसुब्लुकः प्रत्ययलक्षणेन पदत्वस्य स्त्रीप्रत्ययान्ते सर्वनामनि समासादिचरमावयवभिन्ने लुका लुप्तसुब्विभक्तिक एव सम्भवेन पुंवत्त्वस्य उक्तस्थलेषु यथेष्टं प्रवृत्तिसम्भवेऽपि 'उत्तरपदत्वे च' इति प्रत्ययलक्षणप्रतिषेधवार्त्तिके बहुसेचावित्यादौ कुत्वषत्ववारणाय 'बहुच्पूर्वस्यापदादिविधौ न' इति वचनान्तरस्यापि स्वीकर्तव्यत्वस्य शब्दरत्नादौ स्पष्टत्वेन बहुसर्विकेत्यादौ बहुच्पूर्वकेऽपि प्रत्ययलक्षणाभावेन सर्विकेत्यस्य पदत्वाभावेन दर्शितसंबन्धेन वृत्तित्वावच्छेदविरहेण पुंवत्त्ववारणेऽपि च 'उत्तरपदत्वे च' इत्यस्य माषकुम्भवापेनेत्याद्यर्थं पदादिविधिभिन्ने पदान्तत्वप्रयुक्तविधावेव प्रवृत्त्यङ्गीकारेण पुंवत्त्वस्य तत्त्वभावेन तत्र तन्निषेधाभावे 'परमसर्वस्यै' इत्यादौ उत्तरपदेऽपि पदत्वेन उक्तसम्बन्धविशेषाबाधेन पुंवत्त्वापत्तिस्तदवस्थैव ; दक्षिणपूर्वस्यै इत्याद्यर्थस्य 'विभाषा दिग्' इत्यस्य वैयर्थ्यापत्तिश्च ॥



(14) पचाद्यजन्ताट्टशब्देन परमशब्दस्य समासे ततः 'तत् करोति' इति णिचि ततः संज्ञायां क्विचि टिलोपणिलोपयो.परमाट्टिः इत्यत्र 'न पदान्तात्' इति ष्टुत्वनिषेधार्थं प्रत्ययलक्षणावश्यकत्वेन वार्त्तिकस्य—उत्तरपदस्य यत्र कार्यित्वं तत्रैव प्रवृत्तिः—इत्याश्रयणीयतया तेनैव माषकुम्भवापेन त्रिगवायन इत्यादौ 'पदव्यवायेऽपि' इति निषेधसिद्ध्या तस्य पदान्तत्वप्रयुक्तविधिविषयत्वकल्पनानुपयोगेन परमसर्वस्यै इत्यादौ उत्तरपदस्य पुंवत्त्वं प्रति कार्यित्वाबाधेन तस्योक्तरीत्या पदत्वप्रयुक्तत्वे प्रत्ययलक्षणप्रतिषेधेन पदत्वाभावेन तद्घटितोक्तसम्बन्धेन वृत्तित्वावच्छेदलाभेन पुंवत्त्ववारणे तु आर्द्रगोमयेणेत्यादौ गोशब्दस्य कार्यित्वाभावेन तन्निषेधाभावे प्रत्ययलक्षणेन पदत्वात् 'पदव्यवायेऽपि' इति निषेधप्राप्त्या तद्वारणाय 'अतद्धिते' इति वार्त्तिकस्य, पदे व्यवाये नेति सप्तमीसमासस्य वा भाष्योक्तस्य आश्रयणेन दोषाभावेऽपि, पूर्वो दण्डी प्रियो यस्य इति त्रिपदबहुव्रीहौ 'तद्धितार्थ—' इति पूर्वयोस्तत्पुरुषे दण्डिन्नित्यादेः पदत्वाय वार्त्तिके उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तस्यैव ग्रहणावश्यकत्वेन परमसर्विकस्याः पुत्र इति विग्रहे परमसर्वकपुत्र इति समासे सर्विकाशब्दस्य मध्यमत्वेन प्रत्ययलक्षणनिषेधाभावे प्रत्ययलक्षणेन पदत्वात् निरुक्तसंबन्धेन वृत्तित्वाबाधेन पुंवत्त्वसिद्धावपि परमसर्विकस्याःपतिरिति 'षष्ठ्या आक्रोशे' इत्यलुकि, परमसर्विकस्यांशय इत्यत्र 'शयवासवासिषु' इत्यलुकि च सर्विकाशब्दस्य मध्यमत्वेन उक्तरीत्या प्रत्ययलक्षणप्रतिषेधाभावे पदत्वेन पुंवत्त्वापत्तिः दुर्वारा ॥

(15) 'यचि भम्' इत्यत्र 'सुप्तिङन्तम्' इत्यतः सुबिति अनुवर्त्य, यजादावसर्वनामस्थाने पूर्वं भं, मध्ये चेत् सुबन्तं तदपि भं इति व्याख्याय, सुवाचेत्यादौ कुत्वाद्यभावं 'स्वादिषु' इति योगं विभज्य सुबित्यनुवर्त्य स्वादिप्रकृतेः मध्ये सुबन्तस्य च पदत्वं विधाय 'सर्वनामस्थाने अयचि' इति च्छित्त्वा सर्वनामस्थाने चेद् यजादिभिन्न एव पूर्वं पदं नान्यत्र मध्ये सुबन्तं चे(दि)ति व्याख्याय सौ श्रूयमाणे पदत्वे इष्टापत्तिं कृत्वा सुवाचावित्यादौ कुत्वाद्यभावं चाश्रित्य तद्वार्त्तिकप्रत्याख्यानपरभाष्यरीत्या दधिसेचिशय इत्यादौ सप्तम्या अलुकि भत्वेन पदत्वबाधेन कुत्वाद्यभावप्राप्त्या तदैकरूप्याय वार्त्तिकारम्भे उत्तरशब्दस्य समासचरमावयवपरत्वे चरमत्वस्य तदवयवीभूतयत्किञ्चिदवधिकपूर्वत्वाभावे सति तदवयवीभूतयत्किञ्चिदवधिकोत्तरत्वरूपतायाः भाष्यादिसिद्धतया प्रकृते यत्समासावयवोत्तरत्वं तत्समासीयावयवनिरूपितपूर्वत्वाभावस्यैव प्रत्यासत्त्या तद्रूपत्वविवक्षासम्भवेऽपि लक्ष्यानुरोधेन तां परित्यज्य समासमात्रावयवपूर्वत्वाभावे सति यत्किञ्चित्समासावयवनिरूपितोत्तरत्वरूपतया विवक्षायां तादृशावयवस्य समासत्वप्रयोजकभूतस्य पूर्वत्वस्य च अव्यवहितरूपस्य तच्छब्दमर्यादया ग्रहणे स्वावच्छिन्नप्रयोजकप्रातिपदिकाव्यवहितपूर्वत्वाभाव-स्वावच्छिन्नावयवोत्तरोत्वोभयसम्बन्धेन समानत्वविशिष्टशब्दस्य पदत्वप्रयुक्ते कार्ये प्रत्ययलक्षणप्रतिषेध इत्यर्थपर्यवसानस्य वाच्यतया मध्यमत्वानाक्रान्तत्वरूपापूर्वविशेषणदानकृतगौरवशङ्काभावेन तत्र प्रथमसम्बन्धनिवेशेन पूर्वदण्डिप्रिय इत्यादौ तन्निषेधाभावस्य तत्र पूर्वत्वस्याव्यवहितरूपतया



ग्रहणेन दधिसेचिशय इत्यादौ तन्निषेधस्य च सिद्ध्या दोषाभावोपपादनावश्यकत्वेन तद्रीत्या परमसर्विकभाःपतिरित्याद्यलुक्समासे सर्विकाशब्दस्य प्रथमसम्बन्धलाभेन तन्निषेधलाभेन पदत्वाभावात् पुंवत्त्ववारणे तु त्रिगवायन इत्यादौ गोशब्दस्य निरुक्तसम्बन्धेन समासत्वविशिष्टत्वात् प्रत्ययलक्षणनिषेधेन पदत्वाभावात् 'एङः पदान्तादति' इति पूर्वरूपवलोपादिवारणेऽपि 'पूर्वपदात्' इत्यनेन प्राप्तणत्वस्य 'पदव्यवाये' इति निषेधसिद्धावपि आर्द्रगोमयेनेत्यादौ गोशब्दस्योक्तरीत्या समासत्वविशिष्टत्वेऽपि णत्वं प्रत्युद्देश्यत्वाभावादेव तन्निषेधाभावे प्रत्ययलक्षणेन पदत्वात् 'पदव्यवाये' इति निषेधप्राप्तौ तद्वारणाय 'अतद्धिते' इति वार्त्तिकस्य पदे परतः प्रत्यासत्त्या पदेन व्यवाय इति भाष्यसिद्धार्थस्य च सार्थक्यसम्भवेऽपि त्रिगवायनादौ तद्रीत्या णत्वापत्तेर्वार्त्तिकैकवाक्यतायै पदपरकत्वाभावान्निषेधाभावे इष्टापत्त्या रघुनाथादिवद्वा परिहारेऽपि 'ङमो ह्रस्वात्' इत्यस्य ङमन्तपदावयवस्य ह्रस्वात् परस्य ङमो ङमुडजादौ पद इति भाष्यसम्मतेऽर्थे परमदण्डिनावित्यादौ दण्डिन्नित्यस्य ङमुट् उत्तरपदकार्यत्वात् निरुक्तोभयसम्बन्धेन समासत्वविशिष्टत्वात् प्रत्ययलक्षणनिषेधात् अजादेः पदस्येत्यर्थेऽपि विभक्तेः पदत्वाभावाच्च ङमुडभावसिद्धावपि 'अणादिसंज्ञार्थानि' इत्यादौ अणित्यस्यानुकरणत्वेन अनुकार्यस्वरूपभेदशङ्कावारणाय ङमुडकरणेन दोषाभावेऽपि 'उणादयः' इत्याद्यनुरोधेन 'सुगणीश' इति समासे सिद्धस्य ङमुडभावस्य वार्त्तिकारम्भे सिद्ध्या प्रत्याख्याने 'स्वादिषु' इति पदत्वेन तदसिद्ध्या फलभेदे

प्रत्याख्यानायोगेन तत्सिद्धयोगविभागस्य इष्टसिद्ध्यर्थतया यत्र उत्तरपदस्य कार्यित्वं तद्विषय एव पदान्तत्वप्रयुक्तविधावेव च प्रवृत्त्यङ्गीकारेण तयोरेकवाक्यप्रतिपादनसंभवेऽपि तत्र द्वितीयसम्बन्धे स्वावच्छिन्नावयवत्वानिवेशेनैव इष्टसिद्ध्या उत्तरत्वपर्यन्ततायाः अनुपयोगेन तत्त्यागेन बहुसेचावित्याद्यर्थं 'बहुच्पूर्वस्य पदादिविधौ न' इति वचनारम्भे बहुसेक्प्रिय इत्यादावपि तेन प्रत्ययलक्षणनिषेधापत्त्या समासानवयवत्वनिवेशे बहुसेच्शिशय इत्याद्यसिद्ध्या तदलाभे तत्रोक्तसम्बन्धेन समासत्वविशिष्टत्वात् 'उत्तरपदत्वे च' इत्यनेनैव इष्टसिद्धिप्रतिपादनसम्भवेऽपि तद्रीत्याऽपि बहुसर्विकेत्यादौ अन्तर्वर्तिसुपा पदत्वाभावात् स्वावच्छिन्नप्रयुक्तपदत्वसम्बन्धेन वृत्तित्वस्य सर्विकाशब्दे अभावेन दोषाभावेऽपि भवत्याः छात्राः भावत्का भवदीया इत्यत्र 'भवतष्ठक्छसौ' इत्यनेन ठक्छसोः कृतयोः भवच्छब्दांशस्य पदत्वाप्राप्तावपि वृत्तित्वसामानाधिकरण्येन सर्वनामत्वोपलक्षितस्य स्त्रीप्रत्ययान्तस्यैव पूर्वोक्तसम्बन्धेन वृत्तित्वावच्छेदेन पुंवत्त्वमित्यर्थस्य वाच्यतया तादृशस्य भवतीशब्दस्य प्रत्ययलक्षणेन 'स्वादिषु' इत्यनेन च छसि 'सिति च' इत्यनेन च पदत्वाबाधेन पुंवत्त्वसिद्धौ 'ठक्छसोश्च' इति वचनवैयर्थ्यं दुर्वारम् ॥

(16) 'एक तद्धिते च' इति सूत्रवदिदमपि व्यर्थमेवेति कौमुद्युक्तरीत्याश्रयणे तु 'सर्वनाम्नः' इत्यस्य भाष्यकारेष्टत्वाश्रयणेन सूत्रवार्त्तिककाराभ्यां तदनपेक्षासम्भवेन उक्तसूत्रवार्त्तिकयोः प्रवृत्तत्वसम्भवेऽपि 'यथोत्तरं मुनीनां प्रामाण्य' श्रयणेन सर्वतस्सिद्धान्तभूत-



भाष्यरीत्या तयोरनावश्यकतया तद्रीत्युक्तिसम्भवेऽपि, उभयोरपि भाष्ये व्याख्यातत्वेन अप्रत्याख्यातत्वेन च 'दक्षिणोत्तराभ्याम् अतसुच्' इत्यत्र अतसुच्यकारमात्रप्रत्याख्यानाय उक्तवचनावलम्बने भाष्यदर्शिते महत्तरैतत्सूत्रवार्तिकप्रत्याख्यानाय तद्वचनास्मरणकल्पनायाः भगवति भाष्यकृति असंभवेन स्थलद्वये प्रत्याख्यानपरभाष्यग्रन्थपाठभ्रंशकल्पनाया एव शरणत्वेऽतिगौरवापत्तिः। 'एक तद्धिते च' इत्यस्य एकिकत्वम् इत्यादौ 'पुंवद्भावान्नदीह्रस्वत्वं खिद्वादिकेषु विप्रतिषेधेन' इति भाष्यरीत्या पुंवत्त्वं बाधित्वा विप्रतिषेधेन ह्रस्वत्वप्रापकतया चारितार्थ्येन तदंशे प्रत्याख्यानासम्भवे कौमुदीग्रन्थासङ्गतिश्च ॥

(17) 'एक तद्धिते च' इत्यत्र भाष्ये एकत्वमित्यादौ 'त्वतलोर्गुणवचनस्य' इत्यनेन पुंवत्त्वस्य एकशब्दस्य संख्याशब्दत्वेन समासत्वेन च 'आकडार' सूत्रे 'अर्थवत्' सूत्रान्तरं 'गुणवचनं च' इति न्यासकरणेन प्रातिपदिकसंज्ञया सह गुणवचनसंज्ञां विधाय समस्तकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्याशब्देषु तत्तत्संज्ञानां विशिष्य विधानेन ताभिस्तस्या बाध इत्येवंपरभाष्यरीत्या गुणवचनत्वाभावेन अप्राप्तौ विध्यर्थं तत्सूत्रम् इत्युक्ततया तस्य 'सर्वनाम्नः' इति वचनास्मरणेन प्रवृत्तत्वस्य स्पष्टतया तस्यैकदेशयुक्तित्वावश्यकतया सिद्धान्ते तदनावश्यकतायाः तेन भाष्येण उक्तप्रायतया तद्विषयग्रन्थपाठभ्रंशकल्पनानवकाश इत्युक्तौ तु—एकिकत्वमित्यादेः भाष्ये फलत्वाकथनेन अनभिधानकल्पनया तदर्थतया सूत्रसार्थक्याभावस्य वक्तुं

शक्यत्वेऽपि 'सर्वनाम्नः' इति वचनस्य सूत्रमते असत्त्वेन तद्रीत्या एकिकत्वमित्यादौ तद्वचनप्राप्तपुंवत्त्वबाधेन ह्रस्वार्थतायाः सिद्धान्तरीत्या अपि दुर्वचत्वेन तद्दशायां किं फलमपेक्ष्य सूत्रं प्रवृत्तमित्याशङ्कानिरासाय तद्रीत्याऽपि तस्य सूत्रस्य उक्तिसम्भवपरतया भाष्यस्य सामञ्जस्येन एकदेशयुक्तित्वासम्भवेन अनभिधानासम्भवेन च तत्सूत्रसार्थक्ये प्रत्याख्यानाकरणस्य सौष्ठवेन तस्यैव तदभिमतत्वे कण्ठोक्तेरावश्यकत्वेन तदभावात् तद्ग्रन्थपाठांशकल्पनायां गौरवापत्तिस्तदवस्थैव ॥

(18) उक्तरीत्या तस्य प्रत्याख्यानसम्भवेऽपि 'ठक्छसोश्च' इत्यस्य 'सर्वनाम्न' इत्यनेन गतार्थतायाः दुर्वारत्वेन तद्विषये कौमुद्युक्तरीतिरेव शरणमित्युक्तौ तु तद्वचनस्य भाष्ये व्याख्यानस्य वार्तिककारेण परिज्ञातसूत्ररीत्या उक्तिसम्भवपरतया प्रत्याख्यानाकरणस्य स्पष्टार्थविषयकण्ठोक्त्यनावश्यकत्वपरतया च साङ्गत्येऽपि तत्रत्यठग्रहणस्य भाष्ये इकादेशे 'भस्याढे' इत्यनेन गतार्थत्वशङ्काया मातिथिकादिवत् कादेशानपत्त्याभावात् कासिद्धिप्रदर्शनेन परिहारकरणेन तद्वत् पदत्वप्रयुक्तप्रकृतपुंवत्त्ववचनस्य इकादेशे भत्वादप्राप्तिशङ्कासमाधानाकरणेन च तद्वचनस्य तत्र प्रवृत्त्यभावसूचनेन 'ठक्छसोश्च' इत्यस्यावश्यकत्वबोधनेन तदनावश्यकत्वे कण्ठोक्तेरावश्यकतया तद्विषयभाष्यग्रन्थपाठांशकल्पनापत्तिस्तदवस्थैव ॥

(19) 'आयनेयीनी' इति सूत्रे 'घच्छौ च' इत्यादौ घकादेः चित्त्वेन आयन्नादीनां उपदेशावस्थायामेव प्रवृत्तिज्ञापनेन प्रत्ययसंज्ञा-



सन्नियोगेन विहिताद्युदात्तत्वसाधनेन 'आयन्नादिषु उपदेशिवद्वचनम्' इति वार्तिकप्रत्याख्यानस्य भाष्ये स्पष्टत्वेन तद्रीत्या ठजादौ चित्त्वेन 'ठस्येकः' इत्यस्योपदेशावस्थायामेव प्रवृत्त्या भवतीशब्दस्य भत्वेन पदत्वाभावेन पुंवत्त्वाप्राप्त्या तत्प्राप्त्यर्थं तदावश्यकत्वाभिप्रायेण भाष्ये गतार्थत्वशङ्काद्यकरणेन दोषाभाव इत्युक्तौ तु - पूर्वमिकादेशे अनेन पुंवत्त्वेऽपि 'यस्येति' लोपाविशेषेण माथितिकादिवत् भावतिकापत्त्या भावत्कासिद्ध्या तत्सिद्धये 'ठक्छसोः' इत्यारम्भसामर्थ्येन तस्य विषयसप्तमीत्वाश्रयणेन प्रागेव पुंवत्त्वे अपवाद - कादेशेन बाधात् इकादेशाभावेन भावत्कसिद्धिरिति प्रतिपादनसम्भवेऽपि, छसि सित्त्वेन सर्वदा पदत्वेन पुंवत्त्वसिद्ध्या तद्ग्रहणवैयर्थ्यस्य दुर्वारत्वेन तदंशे शङ्काद्यकरणेन प्रत्याख्यानस्येष्टत्वे तस्य कण्ठोक्त्यावश्यकतया उक्तभाष्यग्रन्थपाठांशकल्पनापत्तिरस्त्येव ॥

(20) बृहत्या तरतीत्यर्थे बार्हतिक इत्यादौ 'तरति' इति ठकि इकादेशे 'भस्याढे' इत्यनेन 'यस्येति' लोपावशिष्टे पुंवत्त्वे बार्हतिक इत्यस्य सिद्ध्या इह छस्ग्रहणाभावे तत्रानेन पुंवत्त्वे भावत्कवत् बार्हत्कापत्त्या तद्वारणाय साहचर्याश्रयणसिद्धये इह छस्ग्रहणस्याप्यावश्यकत्वेन 'सर्वनाम्न' इत्यनेनान्यथासिद्ध्यनुल्लेखस्य भाष्ये सौष्ठवेन प्रत्याख्यानग्रन्थपाठांशकल्पनापत्त्यभावः—इत्युक्तौ तु - कौमुदीग्रन्थस्य यथाश्रुतविषयतया निष्कर्षपरत्वाभावेन दोषाभाव इत्युक्तिसम्भवेऽपि 'भवतष्ठक्छसौ' इत्यत्र ठकारान्तरं टकारं वा प्रश्लिष्य पुंवत्त्वविधौ तथैव

द्विठकारतया गृहीत्वा एतद्ग्रहणार्थतया तत्र विशेषार्थठकारस्य इत्संज्ञादिना बार्हतिकादौ एतद्वारणसम्भवे पृथक् छस्ग्रहणे गौरवेण तस्य पुंवत्त्वार्थताया एव वाच्यत्वेन तस्य वैयर्थ्यशङ्कादेः भाष्ये कर्तव्यत्वेन तदकरणेन पाठअंशकल्पना तदवस्थैव । एवं 'सर्वादि' सूत्रे भाष्ये भवतः सर्वनामत्वे प्रसिद्धविभक्तिकार्याभावात् तस्य सर्वादिपाठे प्रयोजनाल्पत्वशङ्कया कानि योजनानि? इत्याशङ्क्य 'त्रलादिविधौ अद्यादिभ्यः' इत्युक्त्या तस्य तत्फलत्वाभावेऽपि अकज् आत्वविध्युपात्तसर्वनामशब्दद्वयेन तस्य ग्रहणार्थतया एकशेषविधौ त्यदादिग्रहणेन तस्य ग्रहणार्थतया च तस्य पाठसाफल्यस्य 'अकच्छेषात्वानि' इति ग्रन्थेन उक्तौ एकशेषग्रहणस्य 'त्यदादीनि च' इति वृद्धसंज्ञाविध्युपात्तत्यदादिशब्देन भवन्मय इत्यादौ 'नित्यं वृद्ध' इति मयडाद्यर्थं भवच्छब्दस्य ग्रहणावश्यकतया उदाहरणपरत्वावश्यकत्वेऽपि सर्वनामशब्देन तद्ग्रहणस्य अद्र्यादेशविधौ आत्वविध्युपात्तसर्वनामपदस्यैवानुवृत्त्या, भवद्र्यङ् इत्याद्यर्थं तेन भवच्छब्दग्रहणावश्यकत्वेऽपि तस्य उपात्तसर्वनामशब्दद्वयान्तर्भावेण तस्य सर्वनामसंज्ञाकार्यांशे सूत्रद्वयोपात्तसर्वनामशब्दद्वयविषयत्वरूपपरिगणनपरत्वस्य संभवमभिप्रेत्य, किमिदं परिगणनं ? उत उदाहरणमात्रं? इत्याशंक्य, भवता हेतुना वसति, भवतो हेतोरित्यादौ 'सर्वनाम्नस्तृतीया च' इत्यस्य प्रवृत्त्यर्थं सर्वनामसंज्ञाकार्यांशे सूत्ररीत्या अप्युदाहरणपरत्वे उक्ते, **कैयटेन** तस्यापि 'निमित्तकारणहेतुषु' इति वार्तिकेन गतार्थतया सर्वनामकार्यत्वस्य सिद्धान्ते अलाभात् परिगणनत्वं अनुमन्तव्यं स्याद् इत्यभिप्रेत्य, 'तृतीयादयोऽपि' इति भाष्यप्रतीकमुपादाय



'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इत्यनपेक्ष्य इदम्, इत्युक्त्वा 'इदं तु प्रयोजनम्' इत्युपक्रम्य भावतायनिः भवद्र्यङ् भवन्मयः; पूर्वनिपातश्च भवन्मित्रः 'भवतष्ठक्छसौ' इति वृद्धत्वात् ठक्छसौ गुणवचनसंज्ञाबाधनं च भवतो भावत्यमिति मा भूत्, इत्युपसंहारेण सर्वनामशब्दविषयेऽपि सिद्धान्ते परिगणनत्वस्याशक्यत्वात्, तच्छङ्कायाः यथाश्रुतसूत्ररीत्या प्रवृत्तत्वबोधनेऽपि बहूनां फलानां अन्वेषणपूर्वकमुपन्यासे भवच्छब्दस्य 'सर्वनाम्न' इति पुंवत्त्वविषयत्वे तदनुपन्यासेन तस्य न्यूनतापत्तिश्च ; वार्तिकसिद्धफलानां बहूनामुपन्यासेन 'भवतष्ठक्छसौ' इति वृद्धलक्षणठगादिफलस्य उपादाने तत्र भवतीशब्दात् तद्विवक्षायां, 'सर्वनाम्नः' इति पुंवत्त्वस्यैव सिद्धान्तिसंमतत्वे तत्स्मरणस्य दुस्त्यजत्वेन च तस्य तत्फलत्वेनावश्यमुपन्यसनीयत्वात् ॥

(21) 'सर्वनाम्नः' इत्यस्य उक्तरीत्या वृत्तित्वसामानाधिकरण्येन सर्वनामत्वोपलक्षितस्य वृत्तित्वावच्छेदेन पुंवत्त्वमित्यर्थात् यत्रक्वचित् सर्वनामत्वमात्रेण प्रकृते सर्वनामत्वाभावेऽपि पुंवत्त्वप्रवृत्तिलाभेन तस्य सर्वनामत्वानिमित्तकत्वेन अजाद्यर्थत्वप्रदर्शनेनार्थसिद्धत्वेन च तस्य भवच्छब्दपाठस्य पुंवत्त्वार्थतया **भाष्ये कैयटेन** च अनुपन्यास इत्युक्तौ तु - स्वाश्रयावयवत्वसम्बन्धेन वृत्तित्वसामानाधिकरण्यस्यैव उपलक्षणतावच्छेदकत्वोक्त्या भवादृश इत्यादिसमासे आत्वार्थतया सर्वनामत्वेन तस्य दृष्टत्वेन तावतैव पुंवत्त्वप्राप्त्या आत्वेन तस्यार्थसिद्धत्वोक्तिसम्भवेऽपि 'सर्वनाम्न' इति वचनगतापूर्वसर्वनामशब्देन

भवच्छब्दग्रहणस्य वाच्यतया पुंवत्त्वस्य दर्शितकार्यभिन्नकार्यतया
च परिगणनत्वशङ्कानिरासकत्वसंभवेन तद्ग्रहणावश्यकतया न्यूनता
दुष्परिहरैव ; अद्र्यादेशविधौ 'आ सर्वनाम्नः' इत्यात्वविधिस्थ-
सर्वनामपदस्यैवानुवृत्त्या एकशब्दस्य प्रत्यभिज्ञानेन तत्रार्थसिद्धत्व-
सम्भवेऽपि पुंवत्त्वविध्युपात्तशब्देऽन्तर्भावाभावेनार्थसिद्धत्वस्य दुर्वचत्वात् ।

(22) अविशेषेण 'सर्वनाम्नो वृत्तिमात्रे पुंवत्' इति वचन-
व्यक्तावपि 'दिङ्नामान्यन्तराले' इति सूत्रे 'दक्षिणोत्तराभ्यामतसुच्' इति
सूत्रे च भाष्ये तद्वचनस्य आवश्यकत्वकथनाय दक्षिणोत्तरपूर्वाणा-
मित्येवमर्थमित्येवोक्तत्वात् अभाषितपुंस्कदिक्छब्दपूर्वादिशब्दविषय
एव तत्प्रवृत्तिरिति प्रतीत्या भवच्छब्दस्य तदविषयत्वेन
भवत्याः छात्रा भावत्का भवदीयाः इत्यादौ तेन वचनेन पुंवत्त्वा-
प्रसक्त्या 'ठक्छसोश्च' इत्यादौ भाष्ये तदनुपन्यास इत्युक्तौ तु - भवदीय
इत्याद्यर्थं तत्र छस्ग्रहणसार्थक्यस्य सर्वादिसूत्रकैयटस्य न्यूनता-
परिहारस्य च सम्भवेऽपि सर्वमयः सर्वकाम्यतीत्यादौ कौमुद्युदाहृते
'प्रथमद्वितीयकक्ष्ययोः' इति 'णेरणौ' इति सूत्रभाष्यप्रयोगे च पुंवत्त्वा-
सिद्ध्या तद्विरोधापत्तिर्दुर्वारा ॥

(23) उक्तभाष्यद्वयस्वारस्येन यथाकथञ्चित् भाषित-
पुंस्कत्वादिकमादाय सूत्ररीत्या यस्य पुंवत्त्वसम्भावना तस्यैव किञ्चि-
न्निमित्तवैकल्येऽपि 'सर्वनाम्न' इति वचनेन पुंवत्त्वविधानलाभेन दि-
क्छब्दानां देशपरपूर्वादिकमादाय दिग्विषयतामाश्रित्य समानायामा-



कृतौ भाषितपुंस्कत्वात् दक्षिणपूर्वा दक्षिणत इत्यादौ सूत्रेण
अन्यथासिद्धत्वाशङ्कायाः भाष्य एव कृतत्वेन तत्र तत्सम्भावनायाम-
विवादेन दक्षिणोत्तरपूर्वाणामित्यादावपि 'सरूप' सूत्रभाष्यरीत्या युगप-
दधिकरणवचनतायां द्वन्द्वावयवानां प्रत्येकमेकार्थत्वेन सामानाधिकरण्य-
सम्भवेन तत्सिद्धिसम्भावनायाः अक्षतत्वेन तथैव 'प्रथमद्वितीय-
कक्ष्ययोः' इति प्रयोगेऽपि तस्या उपपन्नत्वेन च ईदृशेषु तद्वचन-
प्रवृत्त्या इष्टसिद्धौ सर्वमयः सर्वकाम्यति इत्यादौ तत्प्रवृत्तौ माना-
भावात् तदभाव इष्ट एवेत्युक्तौ तु - 'ठक्छसोश्च' इति वार्तिक-
सार्थक्यस्य उक्तकैयटन्यूनतापरिहारस्य च आपाततः सम्भवेऽपि
'तसिलादिषु' इति सूत्रे, 'इह केचित्, तसिलादय आकृत्वसुचः
पठ्यन्ते । तेषु पुंवद्भावो नेष्यते । केचिच्चान्यत्र पठ्यन्ते येषु
पुंवद्भाव इष्यते ; तत्र किं न्याय्यम् ?' इति संशय्य, 'परिगणनं कर्तव्यम्'
इति भाष्योक्त्या परिगणनप्रतिकोटिभूतस्य उदाहरणपरत्वस्यैव संशय-
कोट्यन्तररूपतया वक्तव्यत्वेन तस्य च 'शस्प्रभृतिषु' इत्यादौ दृष्टप्रकार-
परप्रभृतिशब्दग्रहणरीत्यैव 'तसिलादि' इत्यादिशब्दस्य प्रकारपरत्वस्वी-
कारेण तसिल्प्रकारप्रत्ययमात्रे पुंवत्त्वमिति तदर्थाश्रयणसम्भवेन तथात्वे
त्यजादिष्वित्यनुक्त्वा 'तसिलादि' इति उक्तिसामर्थ्येन तसिल्योग्य-
सर्वनाम्नः तत्प्रकारप्रत्यये पुंवत्त्वमित्यर्थसम्भवेन सर्वमयः सर्वकाम्यति
इत्यादौ सूत्ररीत्या पुंवत्त्वसम्भावनायाः भाष्यसिद्धत्वस्याक्षतत्वेन
परिगणनपरसिद्धान्तरीत्याऽपि तद्वचनेन पुंवत्त्वसिद्ध्या अविशेषात्
ठक्छसोरपि तदापत्तौ तद्वैयर्थ्यापत्तिर्दुर्वारैव ; उक्तकैयटन्यूनतापत्तिश्च ॥

(24) 'क्यङ्मानिनोश्च' इति क्यङ्ग्रहणाकरणलाघवेन 'तसिलादिषु' इत्यस्य तसिल्प्रकारत्वेन प्रत्ययमात्रग्रहणे सर्वकभार्य इत्यादौ सूत्ररीत्या तत्सम्भावनायाः अलाभेन पुंवत्त्वासिद्ध्या वृत्त्यवयवे परे पदानां पुंवत्त्वमित्यर्थस्यावश्यकत्वेन परमसर्विकस्याः पतिरित्यादौ सर्विकेत्यादेः प्रत्ययलक्षणनिषेधाङ्गीकारेण पदत्वाभावेन दोषाभावेऽपि, बह्वीषु बहुत्र इत्यादौ पुंवत्त्वाय वचनान्तरकरणे गौरवेण तसिल्प्रकारे पूर्वमात्रस्य पुंवत्त्वे अविशेषादसर्वनाम्नोऽपि पुंवत्त्वापत्तौ 'स्त्रियाः पुंवत्' इत्यादेः वैयर्थ्यापत्त्या च परिगणनस्यैवावश्यकत्वेऽपि तस्य सूत्राक्षरानुरोधेन तसिल्ग्रहणेनोपस्थितसर्वनाम्नः तसिल्प्रकारे वृत्त्यवयवमात्रे परे इतरस्यापरिगणिततसिल्प्रकारे इत्यर्थस्य स्वारसिकतया लाभेन मात्रपदस्य च सर्वनामेतरस्य सामानाधिकरण्येन पुंवत्त्वग्राहकत्वप्रतीतिस्वारस्यनिर्वाहेण च तथैव वाक्यार्थसिद्धौ पुंवत्त्वनिमित्तसर्वनामत्वस्य तसिल्योग्यत्वेनैव ग्रहणे तसिलादिविधौ द्व्यादिपर्युदासेन भवच्छब्दस्य तदयोग्यतया तेन वचनेन पुंवत्त्वाप्राप्त्या 'ठक्छसोः' इत्यस्य सार्थक्यं कैयटन्यूनतापरिहारश्चेत्युक्तौ तु - तसिल्योग्यत्वस्य तसिलिविध्युद्देश्यतावच्छेदकत्वरूपस्य सर्वनामत्वोपलक्ष्यतावच्छेदकत्वेन प्रथमादिशब्दानामपि क्वचित् सर्वनाम्नां सर्वादिविषये तसिलुद्देश्यतावच्छेदकत्वेन दृष्टं यत् सर्वनामत्वं तद्वत्तस्याबाधेन 'प्रथमद्वितीयकक्ष्ययोः' इत्यादौ पुंवत्त्वसिद्धावपि उद्देश्यतावच्छेदकत्वस्य तदनतिरिक्तवृत्तित्वरूपतया तत्पर्याप्त्यधिकरणत्वपर्यन्ततया वा विवक्षणे द्व्यादिभिन्नसर्वनाम्न एव तत्त्वसम्भवेन भवच्छब्दे



क्वापि तद्बाधेन तद्व्यावृत्त्या तसिल्योग्यत्वग्रहणचारितार्थ्येऽपि 'तसिलादिषु' इत्यत्र 'भाषितपुंस्कादनूङ्' इत्यस्य अनुवृत्त्या तादृशस्य तसिल्प्रकारे त्रतसावित्यादिपरिगणिते पुंवत्त्वं ; सर्वनाम्नस्तु वृत्तिमात्रे पुंवत्त्वमित्यर्थलाभे भाषितपुंस्कपदस्य सर्वनामांशेऽनन्वयलाभेन दिक्छब्दानामपि तद्विषयत्वसिद्ध्या दर्शितभाष्यद्वये 'दक्षिणोत्तरपूर्वाणाम्' इत्युदाहरणस्य तत्सूचनार्थतया सामञ्जस्यसिद्धावपि — एवं सूत्रसिद्धस्यापि वचनस्य सूत्रतो विशिष्य तद्वचनार्थस्य स्पष्टतया अलाभेन प्रकारपरतसादिशब्दस्य विषयव्यवस्थापनायाः वक्तव्यत्वेन एतद्वचनस्यैव तद्रूपत्वे परिगणनविशेषत्वापत्तौ इष्टापत्तिकरणे दोषाभावेऽपि 'भस्याढे' इत्यादेरपि परिगणनविशेषत्वस्यैव सम्भवे वार्तिकरूपत्वानङ्गीकारे 'भस्याढे' इत्यादौ भाष्ये 'पुंवद्भावो वक्तव्य' इति ग्रन्थस्य 'भस्य' इत्यादिप्रकृतिविशेषगणनस्य सूत्राक्षरेण लेशतोऽप्यलाभेन तदंशे वचनावश्यकतया तादृशत्ववचनेन प्रकृतिप्रत्ययोभयांशे परिगणनपरत्वबोधनार्थतया सामञ्जस्यवर्णनस्य 'न कोपधायाः' इति सूत्रभाष्ये, किमिदमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये ? आहोस्वित् पुंवत्त्वमात्रस्य ? इत्याशङ्क्य, आद्ये विलेपिकाया धर्म्यं वैलेपिकमित्यत्र 'भस्याढे' इति पुंवत्त्वस्य निषेधानापत्त्या, द्वितीये हस्तिनीनां समूहो हास्तिकमित्यादौ तस्य 'जातेश्च' इत्यनेन निषेधापत्त्या च 'न कोपधायाः' इत्यस्य पुंवत्त्वमात्रविषयत्वं तत उत्तरस्य प्रतिषेधस्याद्ययोगविषयत्वमित्युक्तव्यवस्थापने आद्यशब्दस्य पाणिनिपठितसूत्रत्रयग्रहणपरत्वेन पुंवत्त्वमात्रशब्दस्यौपसंख्यानिकसाधारणपरत्वेन च कैयटो-

क्तस्य क्लिष्टव्याख्यानस्यानाश्रयणेऽपि 'भस्याढे' इत्यस्य 'तसिलादि'-सूत्रसिद्धत्वादाद्ययोगशब्देन 'स्त्रियाः पुंवत्' इत्यस्य ग्रहणे बाधकाभावेन तद्भाष्यस्वारस्यसाधकत्वेऽपि 'पुंवत्कर्मधारय' इति सूत्रे जातीयदेशीयग्रहणेन प्रतिषेधसूत्रबाधनार्थेन प्रत्ययमात्रपरिगणनविषये सूत्रतो विशिष्य सामान्यतो वा सिद्धनिमित्तपरिगणनविषये वा प्रतिषेधसूत्र (मात्र) प्रवृत्तिबोधनेन लक्ष्यविरोधपरिहारेऽपि 'वृत्तिमात्रे' इत्यस्य तसिलप्रकारत्वेनैवार्थ-बोधकत्वे वृत्तिशब्दस्य अवयवपरत्वपर्यवसानलाभेन वृत्त्यवयवमात्रे परे प्रत्यासत्त्या तद्वृत्तिप्रयुक्तसुबन्तस्य तादृशपदस्य वा तसिल्परत्व-योग्यस्य ग्रहणेन एकशेषाकजादिव्यावृत्त्या प्रागुक्तज्ञापकाद्याश्रयण-क्लेशाभावेन लाघवेऽपि, किमत्र न्याय्यमिति शङ्काया उदाहरण-परत्वकोटिकायाः प्रकारपरादिशब्दपरत्वे उद्देश्यविशेषनिमित्तविशेषानु-पादाने अतिप्रसङ्गपरिहारस्य लक्ष्यानुसारिव्याख्यानेनानभिधानादि-कल्पनया सम्भवेन उत्थापकासम्भवे शङ्काभावेन सुलभत्वेऽपि लक्षणैक-चक्षुषां तथा व्यवस्थितज्ञानस्य परिगणनमन्तरा अशक्यत्वाभिप्रायेण तस्यैव न्याय्यत्वसमर्थनस्य सामञ्जस्येऽपि च 'भस्याढ' इत्यादिवचनवत् 'सर्वनाम्न' इति वचनस्य 'तसिलादि' सूत्रे भाष्ये वक्तव्यत्वेन तदनुल्लेखेन तद्विषयभाष्यग्रन्थपाठभ्रंशकल्पनापत्तौ गौरवापत्तिर्दुर्वारा ॥

(25) 'कृन्मेजन्तः' इति सूत्रभाष्ये 'सन्निपात' परिभाषादोष-परिगणनावसरे 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्। दाक्षिः प्लाक्षिः' इत्याद्युपक्रम्य दोषान् परिगणय्य 'दोषाः खल्वपि साकल्येन



परिगणिताः, प्रयोजनानामुदाहरणमात्रम्' इत्युपसंहारेण तत्परिभाषा-दोषाणां परिगणितत्वसिद्ध्या 'कष्टाय क्रमणे' इति निर्देशसिद्ध्यै 'यादेशो दीर्घत्वस्य' इति दोषगणनस्यावश्यकताया लाभेन 'प्रतिविधेयं दोषेषु' इति भाष्योक्तप्रतिविधानविवरणपरकैयटे 'कष्टाय' इति निर्देशात् यशब्दो दीर्घस्य निमित्तं भवतीत्युक्त्या च 'यादेशो दीर्घत्वस्य' इति वाक्यस्य भाष्ये पाठभ्रंशादर्शनेऽपि पाठः कल्प्य इति विवरणोक्तरीत्या भाष्यग्रन्थे कतिपयवाक्यपाठभ्रंशसद्भावलाभेन प्रकरणान्तरे स्पष्टमुक्तस्यास्य वचनस्य सूत्राक्षरलब्धोपस्थितिकसर्वनाम-शब्दघटितस्य वृत्तित्वसामानाधिकरण्येन पुंवत्त्वप्रसक्तिव्यवच्छेदस्वरस-मात्रशब्दघटितस्य 'भस्याढे' इत्याद्यनेकपुंवत्त्ववचनोपन्याससहभावेन 'तसिलादिषु' इति सूत्रे पाठसद्भावानुमानसिद्ध्या आधुनिकभाष्यग्रन्थे तदनुपलम्भेऽपि युक्तिबलात् तद्भ्रंशानुमानसिद्धिरित्युक्तौ तु - 'ठक्छसोश्च' इति वार्तिकप्रत्याख्यानविषयभाष्यग्रन्थस्यापरिज्ञातानुपूर्वीविशेषस्य उक्त-रीत्या भवच्छब्दे 'सर्वनाम्न' इत्यस्याप्राप्तिसिद्ध्या तदुल्लेखनपरसम्भाव-नया निरन्तप्रत्याख्यानबीजतद्वचनकृत्यान्यथासिद्धिग्रन्थस्यान्ततस्तद्वचना-वश्यंभावसहस्य कल्पनायां कौमुदीदर्शितायामप्रामाणिक्यां कल्पना-गौरवदोषभूमवत् एतद्वचनस्य प्रतीतानुपूर्वीविशेषस्य पाठयोग्यस्थल-विशेषान्वेषणैकावशेषस्य प्राप्तयुक्तस्थलविशेषस्य स्थलविशेषावच्छिन्नत्व-मात्रकल्पनायां गौरवदोषाभावेऽपि 'ठक्छसोश्च' इति वचनस्य ठांशेऽप्य-न्यथासिद्धिपरकौमुदीग्रन्थस्यापातविषयत्वावश्यंभावेनैव तद्विरोधोद्भाव-

नाया अलाभेऽपि भाष्ये 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य' इति वचनव्यक्तेः आपाततस्तद्देश एव अपूर्वतयोल्लिखितत्वबोधिकाया अभाषितपुंस्कविषयतया अवश्यवक्तव्यतापरत्वस्य प्रथमं 'दिङ्नामानि' इति सूत्रे दर्शितानुपूर्वीविशेषरूपेणैव पुनः 'दक्षिणोत्तराभ्याम्' इत्यत्र तद्वचनोल्लेखेन अपूर्ववक्तव्यतापरत्वासिद्ध्या संभाविततत्कृतान्यथासिद्धिदोषस्य वक्ष्यमाणपरवक्तव्यपदेन स्वानुरूपप्रकरणे भावित्वसूचकत्वस्य च सिद्ध्या सामञ्जस्येऽपि तेन वचनेन द्व्यादिभिन्नानामेव पुंवत्त्वाङ्गीकारे द्वके इव द्विके इव इत्यादौ तदप्राप्तेः सर्विकेवेत्यादिवद् यथाश्रुतमतेऽपि सिद्धतया तद्विषये अतिप्रसङ्गशङ्काभावेऽपि 'प्रातिपदिकग्रहणे' इति परिभाषायाः 'प्रत्ययग्रहण' परिभाषावत् ग्रहणपदस्वारस्येन प्रातिपदिकत्वतद्व्याप्यधर्मावच्छिन्नबोधकशब्दग्रह एव प्रवृत्त्या प्रकृतवचने 'सर्वनाम्न' इत्यस्य उपलक्षणपरतायाः सर्वसम्मततया विशेषतः प्रातिपदिकत्वविशिष्टबोधकत्व एव तद्व्याप्यधर्मावच्छिन्नबोधकत्वस्य उक्तिसम्भवेन उक्तरीत्या अस्य विभक्तिकार्यत्वेन च तत्र तस्या अप्राप्त्या अन्यत्र सर्वनामतया दृष्टं यत् तस्य स्त्रीप्रत्ययान्तस्यैव पुंवत्त्वमित्यर्थलाभेन तादृशत्वस्य सर्वादिशब्दे टाबन्ते पूर्वान्तवत्त्वेन सुलभत्वेन तत्रानेन पुंवत्त्वसिद्धावपि भवतीशब्दस्य 'लिङ्गविशिष्ट' परिभाषयैव तत्त्वस्य वाच्यतया उक्तरीत्या तदलाभे तत्त्वाभावेन पुंवत्त्वाप्राप्त्या तत्प्राप्तये 'ठक्छसोश्च' इत्यस्य सार्थक्यस्य भवत्या आगतः भवतीमयः 'भवतीमाद्रियते भवत्यधीनैः' 'भवतीपाद' 'भवतीसम्बन्धदृष्ट्या' इत्यादि-



प्रयोगेषु 'भवति! भवत्वसुहृज्जनस्सकाम' इत्यादिषु दृष्टसुभगाद्यर्थकस्य संबुद्ध्यर्थस्यापि एकादिशब्दवत् त्यदादिपठितभवच्छब्देन देवताविशेषपरविश्वावसुशब्दस्य विश्वादिशब्दपाठेनैव ग्रहणस्य दुर्वारत्वेन पूज्याद्यर्थकभवच्छब्दमादायापि पुंवत्त्ववचनस्य दुर्वारप्रवृत्तिकेषु वेणीसंहारचतुर्थाङ्के 'एकोऽहं भवतीसुतक्षयकरः' इत्यादिस्थभवतीशब्दवत् पुंवत्त्वाभावसाधुत्वस्य च यथाश्रुतरीत्याऽपि सम्भवेन विरोधाभावेऽपि 'पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति' इत्यादौ 'शरदः कृतार्थता' इत्यादिवत् लिङ्गसर्वनामनपुंसकताश्रयेण पुंवत्त्वशङ्कानिरासेऽपि भवतीमञ्चति भवतीवत् दृश्यत इत्यादिविवक्षायां 'ऋत्विग्' इत्यादिना 'त्यदादिषु' इत्यनेन च सुबन्तादौ उपपदे क्विन्कञोर्विधानस्य द्विषतीतापम् इत्यादौ 'द्विषत्परयोः' इत्याद्युपपदविधेरिव ङ्याप्सूत्रभाष्यरीत्या तत्परिभाषादोषगणनविषयतया तदप्राप्त्यवश्यंभावितया कर्मण्यण एव प्राप्त्या भवत्यश्वः भवतीदर्श इत्याद्येवेति भवतद्र्यङ् इत्याद्यनिष्टापत्त्यभावेऽपि 'दक्षिणापश्चात्—' इति सूत्रे आजन्तदक्षिणाशब्दग्रहणे टाबन्तात् ततः प्रत्ययान्तरेण रूपान्तरापत्तिमाशङ्क्य अनव्ययस्य ग्रहणे दाक्षिणात्य इत्यादौ 'सर्वनाम्नः' इत्यनेन पुंवत्त्वशङ्कायां 'ठक्छसोश्च' इत्यारम्भेण भाष्येऽनेन वचनेन तदप्रत्याख्यानेन च 'सर्वनाम्न' इत्यस्यानित्यत्वज्ञापकात् तदभाव इति परिहारपरशब्देन्दुशेखरविरोधो दुर्वारः ; उक्तरीत्या तद्वचनसार्थक्यस्य तदप्रत्याख्यानसौष्ठवस्य च सिद्धत्वेन ताभ्यां तदनित्यत्वज्ञापनासम्भवात् ॥

(26) 'वनं पुरगामिश्रका' इत्यादौ अग्रे इत्यस्य एदन्तत्वनिपातनाङ्गीकारवत् देशपरदक्षिणशब्दसाधारणतया दक्षिणेति अदन्तत्वनिपातनपरतया देशपरादपि प्रत्ययान्तरव्यावृत्त्यर्थतया सिद्धौ दिक्परस्य तेन पुंवत्त्वेऽपि पश्चान्निपातनसिद्धस्य आदन्तत्वस्य प्रवृत्त्या सर्वेष्टसिद्धौ च तदनित्यत्वज्ञापनानुपयोगेन इत एवास्वरसात् तस्य शेखरग्रन्थे केचिदित्यादिना निबद्धत्वेन च तस्य स्वाभिप्रायसिद्धत्वाभावेन उक्तग्रन्थविरोधाभाव इत्युक्तौ तु—'दक्षिणापश्चात्' इति सूत्रप्रयोगे तेन वचनेन पुंवत्त्वापत्तेस्तथैव वारणीयत्वेन 'अष्टाभ्य' इत्यादौ उद्देश्यगताकारस्य यत्नसाध्यस्य विधेयसन्नियोगेन विवक्षार्थत्ववत् दक्षिणेत्याकारस्य तथा विवक्षार्थत्वस्य सौष्ठवेन च आजन्तदक्षिणाशब्दस्य 'अव्ययात् त्यपि' तथैव सम्भवेन 'अव्ययात् त्यप्' सूत्रभाष्ये 'अमेहक्वतसित्रेभ्य एव' इति परिगणनस्य औचराहौगरिष्टपारतानां अव्ययात् त्यबभावस्य प्रयोजनतया उपन्यासेन 'उत्तरादाहञ्' इत्यस्य उत्तरशब्दात् तद्घटितदिक्छब्दविहितप्रत्ययान्ताच्च प्रवृत्तिलाभेन सामान्यत एव तत्प्रकरणस्थप्रत्ययमात्रस्य दिक्छब्दाद् विहितस्य तद्घटितप्रत्ययान्ताव्ययादपि प्रवृत्त्याश्रयणेन आजन्त 'दक्षिणापश्चात्' इति त्यक्प्रवृत्त्या वा रूपान्तरापत्तिपरिहारेण च तदनित्यत्वस्य तद्ग्रन्थकृदनभिमतत्वावश्यकत्वेऽपि तसिलादिपरिगणने सर्वनामैकविषयाणां थमुदार्हिलामन्तर्भावस्य भाष्यस्थस्य त्रतसिलोरिव बहुशब्दार्थत्वासम्भवेऽप्युक्तसिद्धान्तरीत्या द्व्यादिभिन्नानामेव 'सर्वनाम्न' इति वचनविषयत्वलाभेन किंशब्दस्य अतथात्वेन तद्वचनाप्राप्तपुंवत्त्वप्रापकतया चारितार्थ्येन तेनापि तद्वचन-



सिद्धपुंवत्त्वानित्यत्वप्रत्याशानिरासेन तद्ग्रन्थस्य उक्ताभिप्रायैकशरणत्वेऽपि च थमुदार्हिलां तसिलाद्यन्तर्भावानावश्यकत्वपरार्वाचीनसर्वग्रन्थविरोधो दुर्वारः ॥

इति प्राप्ते ब्रूमः ।

(27) उक्तरीत्या तद्वचनस्य 'तसिलादि' सूत्रस्थत्वसिद्धावपि तसिल्प्रकारे वृत्तिघटकमात्रे परे तसिल्योग्यस्य सर्वनाम्नः पुंवत्त्वमित्यर्थस्य ततो लाभेऽपि च तत्त्वस्य द्व्यादिव्यावृत्ततया ग्रहणाय तसिल्विध्युद्देश्यतावच्छेदकत्वरूपस्य तद्योग्यत्वस्य तदनतिरिक्तवृत्तिस्वरूपतया तत्पर्याप्त्यधिकरणत्वपर्यन्ततया वा आश्रयणे गौरवेण प्रथमादिशब्दसाधारण्याय 'सर्वनाम्न' इत्यस्य उपलक्षणपरत्वाश्रयणावश्यकतया तत्त्वस्य भवदादावप्यबाधेन तत्र पुंवत्त्वस्य दुर्वारतया तद्वारणाय 'लिङ्गविशिष्ट' परिभाषाया विशेषणपरप्रातिपदिकग्रहणविषयायाः अप्राप्त्यैव भवतीशब्दे सर्वनामत्वाभावलाभस्य 'ठक्छसोश्च' इति वचनारम्भतदप्रत्याख्यानभाष्यावष्टब्धस्य आश्रयणीयतया तेनैव 'भवतीमयः, भवत्यधीनैः, भवतीपाद, भवतीसम्बन्धदृष्ट्या' इत्यादौ पुंवत्त्वाभावसिद्धौ तद्रीत्या किंशब्दादपि कया प्रकृत्या कथं कस्यां वेलायां कदा कर्हीत्यादौ च पुंवत्त्वसिद्धौ तसिलादिषु थमादीनां त्रयाणां परिगणनमावश्यकमिति ग्रन्थकृतामाशय इति । एवं स्थिते 'पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम्' इत्यादिकविकथकसिंहगुरुवरप्रयोगे 'सर्वनाम्न' इति पुंवत्त्वशङ्कया यदसाधुत्वमाशङ्कितं सुचिरारूढ-

कौमुदीग्रन्थपरिचयजनितापातशेमुषीमषीमलिनमामकीनमानसेन; तदिदमदयहृदयमदीयदुरितसमुदयसमुदितगुरुवरचरणारविन्दापचरणमतिक्षन्तव्योऽयं मन्तुरिति अगणितविभवान् अतिविदितपदवदान् मतिमहितगुरुजनान् सततं शतशोऽवनत्य बहुशः प्रार्थये ॥

परे तु 'सर्वनाम्न' इत्यस्य उपलक्षणपरत्वे तत्त्वेन प्रसिद्धपरत्वसिद्ध्या अप्रसिद्धेश्च रामादिशब्दवैलक्षण्यस्य सर्वादिशब्दे सर्वे इत्यादिविभक्तिप्रयोगावच्छेदेनैव दर्शनेन तदवच्छिन्नाया एव लाभेन तसिल्प्रकारपरवृत्तिमात्रशब्दार्थान्वयमहिम्ना तसिल्सदृशपरकत्वलाभेन उपलक्षणत्वमहिम्ना च अन्यत्र तत्त्वप्रसिद्धिलाभेन वृत्तेः तदनर्हत्वप्रतीतेस्तस्य च प्रसिद्धिभञ्जकविभक्तिलोपहेतुत्वरूपतया च श्रूयमाणविभक्तौ सर्वनामत्वेन प्रसिद्धस्य विभक्तिलोपहेतुभूतवृत्तिघटकमात्रे परे पुंवत्त्वमित्यर्थस्वीकारसिद्ध्या सर्विका सर्वे सर्विकस्यापतिः सर्विकेव परमसर्विकस्याः पतिः दक्षिणपूर्वस्यै दक्षिणतः दक्षिणोत्तरपूर्वाणाम्, इत्यादौ सर्वत्र पुंवत्त्ववारणेन तादृशसर्वनामत्वस्य सर्वादेरेकशब्दपर्यन्तादन्तस्यैव सम्भवेन तस्यैव पुंवत्त्वोद्देश्यतया भवच्छब्दस्यातथात्वेन तदप्राप्त्या 'ठक्छसोश्च' इति वचनारम्भः; तत्र मात्रपदस्य परिगणिततसिलादिविषयत्वव्यवच्छेदलाभपरत्वेऽपि यस्यां विभक्तौ सर्वनामत्वप्रसिद्धिः तद्विभक्तिलोपकवृत्तेरेव प्रत्यासत्त्या ग्रहणे 'प्रथमद्वितीयकक्ष्ययोः' इत्याद्यसिद्ध्या तद्बलेन विभक्तित्वावच्छिन्नलोपकवृत्तेर्ग्रहणपरत्वस्यापि स्वीकरणेन 'तसिलादिषु' इत्यस्य विभक्तित्वावच्छिन्नलोपनिमित्तत्वेन



तसिल्सदृशं यत् तत्परतया वृत्तिशब्दार्थे अन्वयस्वीकारेण वा तसिल्सदृशश्रूयमाणविभक्तौ सर्वनामत्वेन प्रसिद्धस्य स्त्रीप्रत्ययान्तस्य प्रसिद्ध्यवच्छेदकविभक्तिजातीयलोपहेतुभूतवृत्तिघटकमात्रे परे पुंवत्त्वम् इत्यर्थलाभः; वृत्तौ विभक्तिविशेषलोपहेतुत्वविवक्षणादेव सर्वाशब्दस्य इवेन समासेन सर्वेवेत्यादौ न पुंवत्त्वम् । हल्ङ्यादिलोपं प्रति वृत्तेस्तद्घटकस्य वा हेतुत्वाभावात् । अत एव परमसर्विकस्याः-पतिरित्यादौ तदभावः; तत्र पूर्वपदभूतकर्मधारयस्य वृत्तिशब्देन धरणे तद्धेतुसत्त्वेऽपि सर्विकाशब्दस्य तद्घटकपरत्वाभावात् तदप्राप्तेः पतिशब्दोत्तरकषष्ठीतत्पुरुषस्य वृत्तित्वेन धरणे तद्घटकपरकत्वसम्भवेऽपि तस्य निरुक्तविभक्तिविशेषलोपहेतुत्वाभावात् तदप्राप्तेः । एवं दक्षिणपूर्वस्यांशय इत्यादावपि बोध्यम् । तत्र 'भाषितपुंस्कात्' इत्यस्य असंबन्धेऽपि 'स्त्रियाः' इत्यस्य असम्बन्धे मानाभावेन, सर्वनामत्वेन प्रसिद्धं यत् स्त्रीप्रत्ययान्तं स्त्रीलिङ्गं वा तस्यैव पुंवत्त्वोद्देश्यतया प्रत्यासत्त्या तत्सम्बन्धिनी या विभक्तिः तल्लोपहेतुभूतवृत्तेरेव ग्रहणस्य वाच्यतया नोक्तस्थले उत्तरपदादिसम्बन्धिविभक्तिलोपकत्वमादाय पुंवत्त्वापत्तिः । अत एव यत्र तत्रेत्यादौ सुब्लुगुत्तरमेव त्यदाद्यत्वेन टाप्प्राप्त्या तदनन्तरमेव पुंवत्त्वप्राप्त्या च तद्दशायां तादृशसर्वनामसम्बन्धिविभक्तेरेव वा प्रसिद्ध्या तल्लोपकत्वस्य वृत्तौ बाधितत्वेन एतद्वचनाप्राप्त्या 'तसिलादिषु' इति सूत्रेऽत्र त्रतलावित्यादिपरिगणनस्य बहुशब्दैकविषयत्वासिद्ध्या तद्भाष्यस्वरससिद्ध-त्यदादिमात्रविषयत्वनिर्वाहः । एतेन, कया प्रकृत्या कथं यथा तथा तस्यां

वेलायां तदा, इत्यादौ पुंवत्त्वार्थं थमुथाल्दार्हिलां परिगणनमिति तत्सूत्रभाष्ये समर्थितम् । अनेन वचनेन तत्र पुंवत्त्वसिद्धिरिति शेखरोक्तिस्तु चिन्त्या । अयमेवार्थः सर्वनामसंज्ञासूत्रभाष्यकैयटसम्मतः । तर्हि भवच्छब्दस्य विभक्तिकार्ये सर्वनामत्वेन प्रसिद्ध्यलाभादेव 'भवतः सर्वनामत्वे कानि प्रयोजनानि?' इत्याशङ्कितम् । उक्तरीत्या पुंवत्त्वफलकत्वासम्भवाभिप्रायेण अकच्छेषात्वानामेव तत्प्रयोजनत्वमुक्तम् । पुंवत्त्वं तु तत्र कैयटेनापि न स्पृष्टम् । अत एव 'ङ्याप्' सूत्रे भाष्ये 'लिङ्गविशिष्ट'परिभाषाप्रयोजनकथनावसरे सर्वनामशब्दग्रहणे तत्परिभाषाप्रवृत्तिप्रदर्शनाय 'आमि सर्वनाम्नः सुट्' इत्यस्य सर्वासामित्यादौ तथा प्रवृत्तिमुक्त्वा 'अन्तवत्त्वेनाप्येतत् सिद्धम्' इत्युपक्षिप्य 'सर्वनाम्नस्तृतीया च' इत्यनेन भवत्या हेतुना वसतीत्यादौ तृतीयादिप्रवृत्तेस्तत्फलत्वं दर्शितम् । तस्य च 'निमित्तकारणहेतुषु' इति वचनेन गतार्थत्वेऽपि एतद्वचनप्रवृत्त्यर्थतया फलान्तरारोपलक्षणपरत्वं कैयटेनापि नोक्तम् । एवञ्च यथाश्रुतपक्षेऽपि 'सर्वनाम्नः' इत्यस्य मात्रग्रहणसाफल्याय वृत्तिघटकपरवृत्तिशब्दार्थलब्धार्थस्य सर्वनामत्वप्रसिद्धनिमित्तत्वाश्रयणौचित्येन विभक्तिरूपतासिद्ध्या तत्सामानाधिकरण्येन सर्वनामत्वेन प्रसिद्धस्य तदवच्छेदेन लोपनिमित्तभूते वृत्तिघटके यस्मिन् कस्मिंश्चित् परे पुंवत्त्वमित्यर्थलाभस्य वक्तव्यत्वेन तेनैव 'ठक्छसोश्च' इत्यस्य सार्थक्यसम्भवेन सर्वनामप्रकृतिकस्त्रीप्रत्ययान्तस्येति क्लिष्टव्याख्यानाश्रयणेऽपि भवतीशब्दस्य तद्विषयत्वाभावसिद्धिरित्याहुः ।



अत्रायं सङ्ग्रहः ।

तदेवं सर्वनाम्नो यः पुंवत्त्वविषये विधिः ।
तस्माद्व्यादौ तसिल्योग्ये सर्वनाम्नि प्रवर्तनात् ॥
किंशब्दे सिद्धये तस्य थमुदार्हिलगणनापरात् ।
तसादिपरिगण्यत्वपरभाष्यात् तदूहनात् ॥
'णेरणौ' इति सूत्रस्थं ग्रहीतुं प्रथमादिकम् ।
बहुच्पूर्वाद्धाद्यर्थं वृत्तिशब्देन तद्गताम् ॥
विभक्तिं परिगृह्यास्यां प्रसिद्धं सर्वनाम यत् ।
तस्य तल्लोपके वृत्ते परे वा पुंस्त्वशासनात् ॥
स्त्रीप्रत्ययान्ते तत्त्वस्य वैशिष्ट्यस्यावगाहनात् ।
विभक्तिलक्षणत्वाच्च लिङ्गनीतेरनुत्थितेः ॥
उपलक्ष्यत्वसिद्धौ च लक्षणस्थानमार्गणे ।
'सर्वादि' सूत्रभाष्येण विभक्तेस्तत्त्वनिश्चयात् ॥
तत्र तत्त्वेन दृष्टस्य तस्य पुंस्त्वमिति स्थितौ ।
सर्वनामप्रकृतिके तेन लक्ष्येऽप्यतत्त्वतः ॥
बहुधैवं भवच्छब्दे तदप्राप्तेः सुनिश्चये ।
ठक्छसोर्वचनापार्थ्यं निबध्नन्ति वृथा बुधाः ॥
'भवतीपाद'शब्दादौ पुंस्त्वशङ्कां तथा सुधा ।
अन्ववादमपीमं मे क्षमन्तां गुरवः सदा ॥ इति ।

अत्रेदं बोध्यम् ॥ वृत्तित्वसामानाधिकरण्येन सर्वनामत्वोपलक्षितस्य स्वावच्छिन्नप्रयुक्तपदत्वसम्बन्धेन वृत्तित्वावच्छेदेन पुंवत्त्वमित्युक्तप्रथमकल्पे, विभक्तिलोपकवृत्तिघटकमात्रे पर इत्युक्तद्वितीयकल्पे च सर्वेवेत्यादौ हल्ङ्यादिलोपस्य प्रत्ययलक्षणेन पदत्वेऽपि तस्य समासप्रयुक्तत्वाभावेन तल्लोपस्य सामासिकलुग्रूपत्वाभावेन च उक्तवचनाप्राप्त्या पुंवत्त्वाभावसिद्धावपि सर्वेवाचरति सर्वति परमसर्वेवाचरति परमसर्वतीत्यादौ प्रातिपदिकादाचारक्विपि सुपो भावेन द्वितीये विशिष्टस्य तदन्तत्वेन सर्वनामत्वेऽपि पदत्वाभावेन च तदनापत्तिः; उत्तरपदस्य तु 'उत्तरपदत्वे च' इति प्रत्ययलक्षणनिषेधेन तत्त्वाभावात् तल्लोपनिमित्तवृत्तिघटकपरत्वाभावाच्च तदनापत्तिरेव। न च 'स्वादिषु–' इति योगविभागादिकमाश्रित्य तत्प्रत्याख्यानरीत्या भत्वादिना पदत्वबाधाप्राप्त्या वार्त्तिकरीत्या च तत्प्राप्त्या फलभेदादीदृशानामनभिधानमावश्यकमिति वाच्यम् । सुबन्तस्य असर्वनामस्थानयजादिप्रत्ययमात्रे कप्रत्ययावधौ भमित्यर्थस्वीकारेण तद्रीत्याऽपि पदत्वबाधसिद्धौ अनभिधानकल्पने मानाभावात् ।

एतेन परमशम्भुरिवाचरति परमशंभवतीत्यादौ प्रत्याख्यानरीत्या पदत्वापत्त्या 'एङः पदान्तात्' इत्यस्य पदे अन्तादित्यर्थाश्रयणात् पूर्वरूपाभाव इत्यपास्तम् । एतेर्लङि तिपि ऐदिति, 'अतिङश्च' इति कुत्सार्थे अकचि अकैदित्यस्य, हरे इत्यादियोगे हरेकैदित्यादौ पूर्वरूपानापत्तेश्च । न च यजादिप्रत्ययमात्रभत्वे गव्यतीत्यादावपि भत्वेन पदत्वबाधे सिद्धे 'नः क्ये' इत्यस्य विध्यर्थतापत्तौ राजानमात्मन इच्छति



राजीयतीत्यादौ दोषाभावेऽपि पन्थानमात्मन इच्छति पथीयतीत्यादौ नान्तत्वेन पदत्वे लोपे च सति अनेन भत्वे 'भस्य टेर्लोपः' इति टिलोपापत्तिरिति वाच्यम्–नान्तप्रयुक्तपदसंज्ञायां 'एकदेशविकृत' न्यायेन ईकारान्ते सत्त्वेन एकसंज्ञाविकारात् भत्वाप्राप्तेः, आकडारीयभपदादिसंज्ञानां यथोद्देशत्वस्यैव सिद्धान्तितत्वात् । न चैवमपि पुरुशब्दात् 'जनपदशब्दात्' इत्यपवादभूते 'पूरोरण् वक्तव्यः' इत्यणि तस्य तद्राजत्वात् बहुत्वे लुकि पूरव इत्यादौ प्रत्ययलक्षणनिषेधाभावेन पदत्वेन प्रत्याख्यानरीत्या 'यचि भम्' इत्यत्र सुबित्यनुवृत्त्या सुबन्तस्यापि भत्वविधानेन पदत्वाभावेन फलभेदात् तदभावाय पदे अन्तादिति व्याख्यानाश्रयणेनैव पूर्वरूपं वारणीयमिति वाच्यम्। एतदर्थं प्रत्याख्यानैकवाक्यतया लाघवेन च 'उत्तरपदत्वे च' इति वार्त्तिकस्य स्वावच्छिन्नावयवत्वप्रातिपदिकाव्यवहितपूर्वत्वसम्बन्धेन समासत्वावच्छिन्नाभावविशिष्टस्य पदत्वे प्रत्यासत्त्या प्रातिपदिकावयवत्वप्रयुक्तलुकः प्रत्ययलक्षणं नेत्यर्थस्यैव स्वीकारेण सर्वातिप्रसङ्गपरिहारे प्रागुक्तसम्बन्धान्तरानिवेशेन वार्त्तिकरीत्याऽपि पदत्वालाभेन दोषाभावात् पदे अन्तादित्यस्य अनुपयोगात् ।

अत एव भाष्ये पदादिविधिपर्युदासे उत्तरपदादिविधिपर्युदासासिद्धौ नलोपादिप्लुतपर्यन्तविधिष्वेव तद्वचनप्रवृत्तिरित्युक्ते 'इकोऽसवर्णे' इत्यस्य असङ्ग्रहे राजकुमार्यावित्यत्र तदापत्तिमाशङ्क्य 'सिति न' इति निषेधस्य प्रत्ययमात्रविषयत्वं स्वीकृत्य समाहितम् । नहि तत्र

अनुवृत्त्यर्थस्य 'एङः पदान्तात्' इत्यत्रत्यपदान्तग्रहणस्य उक्तार्थकतया वार्तिकाभिमतत्वे दधि अधुनेत्यादिव्यावृत्त्यर्थं प्रत्यासत्त्या यः प्रत्ययो यस्माद्विहित इत्यर्थाश्रयणक्लेशावहप्रत्ययमात्रविषयनिषेधपरवचनस्वीकारप्रयासो भाष्यस्य सङ्गच्छते। न चैवं बहुच्पूर्वे बहुसेचावित्यादावपि निरुक्तसम्बन्धेन समासत्वत्वावच्छिन्नाभाववत्त्वस्य सेक्शब्दे सत्त्वात् तदुत्तरसुब्लुकः अर्थवत्सूत्रेण प्राप्तप्रातिपदिकसंज्ञाकसमुदायावयवत्वप्रयुक्तत्वाच्च प्रतिषेधसिद्धौ बहुच्पूर्वस्य पदादिविधावेवेति न्यासान्तरकरणं भाष्याद्युक्तं विरुध्येतेति वाच्यम्। बहुच इत्याद्यर्थं उत्तरपदत्वस्य समासावयववत् किञ्चिदव्यवहितपूर्वत्वाभावरूपत्वं परिहाय समासावयवप्रातिपदिकपूर्वत्वाभावरूपताया एव वक्तव्यत्वेन, तेनैव वाक्सक्त्वचमिति द्वन्द्वे त्वक्छब्दस्य तन्निषेधसिद्धौ तदर्थं 'द्वन्द्वे अन्त्यस्य प्रतिषेध' इति वचनस्यापि भाष्ये दर्शनेन तद्रीत्या अस्यापि सत्त्वात्। भाष्ये 'सुप्तिङन्तम्' इत्यतः सुबित्यस्य बहुसूत्रे एकदेशानुवृत्त्या सम्बन्धकल्पनापूर्वकं गुरुभूतयोगविभागवाक्यभेदान्वाचयशिष्टताद्याश्रयणेन अतिप्रयासेन वार्तिकप्रत्याख्याने एकदेशिना दर्शिते, पदादिविधिविषये दधिसेचावित्यादौ पदादादिरित्यर्थाश्रयणेन तत्साधनेऽपि बहुसेचावित्यादौ षत्वनिषेधासङ्ग्रहेण लक्ष्यासिद्ध्याऽपि प्रत्याख्यानस्यायुक्तत्वप्रदर्शनपूर्वकं सिद्धान्तिना वार्तिकानुसारिणा 'एवं तर्हि' इत्युपक्रम्य नञ्द्वयप्रसज्यप्रतिषेधाद्यनाश्रयणलाघवप्रदर्शनपूर्वकं 'उत्तरपदत्वे च अपदादिविधौ प्रत्ययलक्षणम्' इति विधिमुखेन पर्यवसितनियमं वचनमेव न्याय्यमिति प्रदर्शिते, तेन च उक्तरीत्या सर्वातिप्रसङ्गवारणे प्राग्दर्शितस्य उत्तरपदादिविध्य-



सङ्ग्रहदूषणस्यापि नियमलभ्यपर्युदासेन पदान्तविधावेव प्रत्ययलक्षणमित्याश्रयणात् स्पष्टं परिहारसम्भवेन च प्रत्याख्यानस्य सर्वथा अयुक्तत्वे बोधिते, तमाशयमजानता पूर्वेण एकदेशिना 'बहुच्पूर्वे कथम्?' इति प्रश्ने तदनुसार्येकदेशिना 'बहुच्पूर्वस्य पदादिविधावेव' इति 'द्वन्द्वेऽन्त्यस्य प्रतिषेधः' इति च वचनद्वययुक्तमिति स्पष्टं लाभेनादोषाच्च। नहि वार्तिकानुसारिणा बहुच्पूर्वे दोषे शङ्किते तदसङ्ग्राहकतया 'एवं तर्हि उत्तरपदत्वे च अपदादिविधौ' इति पुनरुक्तिः सिद्धान्तिनः स्यात्।

अत एव च 'उत्तरपदस्य च' इत्यनुक्तिः। तथा सति उत्तरस्य उत्तरखण्डमात्रस्य पदत्व इत्यर्थालाभात् तस्य समासावयवपरत्वात्। संसर्गविशेषावच्छिन्नसमासत्वाभावादिलाभस्तु पदादिविधावेव, प्रत्ययलक्षणमित्येतदुत्तरपदस्यैव पदत्वे इति नियमान्तरस्वीकारे तेन सजातीयपूर्वपदव्यवच्छेदे तस्य च समासावयवपूर्वस्यैव, 'पूर्वदण्डिप्रिय' इत्यादौ 'राजपुरुष' इत्यादौ च पदत्वाय प्रत्ययलक्षणप्रतिषेधव्यवच्छेद्यत्वसम्भवेन उत्तरस्यैवेत्यवधारणलब्धपूर्वस्य समासपूर्वावयवरूपत्वेनैव तत्त्वसिद्ध्या तद्भिन्नस्यापि तत्सदृशत्वेन तादृशस्यैव ग्रहणे बहुसेचावित्याद्यसङ्ग्रहेण तत्सङ्ग्रहाय तद्भिन्नमात्रस्य पदत्वे इत्यस्य पर्यवसानेन लुङ्मात्रस्य प्रत्ययलक्षणं नेत्यर्थे दधिसेगिति व्यस्ते, निरुपपदात् सिचेर्विचि सेगित्यस्य पदत्वे स्वमोर्लुकि तस्य प्रत्ययलक्षणनिषेधशङ्कासमाधानयोर्भाष्ये अकरणेन संसर्गबद्धिप्रयोगस्यापि अवत्सा धेनुरानीयताम् इत्यादिवत् विशेषावगतिहेतुत्वेन च पूर्वपदसम्ब-

न्धिपदत्वार्थप्रत्ययलक्षणार्हलुक एव ग्रहणेन तस्यैव एतद्वचन-
विषयत्वलाभे तादृशलुगन्वयानुरोधात् तदर्हत्वेन तेन न्यायेन च समा-
सावयवप्रातिपदिकाव्यवहितपूर्वस्यैव व्यवच्छेद्यत्वलाभेन च बोध्यः ।

न च तद्भाष्यस्य पदान्तविधावेव तन्निषेधाश्रयणपरत्वस्य स्पष्ट-
तया सिद्धान्त्युक्तित्वं न सम्भवति, परमगोदुहेत्यादौ पदान्तभिन्न-
वशुद्देश्यकभष्भावं प्रत्यपि तन्निषेधावश्यकत्वेन तदसङ्ग्रहापत्तेरिति
वाच्यम् । परमवृश्चावित्यादौ 'स्कोः' इति संयोगादिलोपादेरिव तस्य
पदान्तवृत्तिझषन्तोद्देश्यकविधित्वेन तत्प्रतिषेधप्रवृत्तेर्निर्बाधत्वेन तस्य
सिद्धान्त्युक्तित्वाक्षतेः । नह्यवयवस्य कार्यभाक्त्वमात्रेण दुहित्यादिसमु-
दायस्य विध्युद्देश्यत्वं विहन्यते ; 'तदोः सः सौ' इत्यादीनां त्यदादि-
कार्यत्वानापत्तेः । परमदुहावित्यादीनां दुहित्यस्य व्यपदेशिवद्भावेन
धात्ववयवत्ववत् पदान्तत्वाक्षतेः तत्र तस्य पदान्तविधित्वं सुवचम् ।
अत एव भाष्ये परमगोदुहौ इत्येव उदाहृतं ; न तु परमदुहाविति,
गोदुहावित्येव वा । तद्धि स्वतः पदान्तझषन्तोदाहरणलाभायेति
बोध्यम् । अत्र यस्य पदत्वं प्रत्ययलक्षणेनाश्रयणीयं तत्सम्बन्धि-
पदान्तत्वावच्छिन्नविधावित्यर्थात् माषकुम्भवापिनावित्यादौ 'पदव्य-
वायेऽपि' इति निषेधसिद्धिः ।

एतेन उत्तरस्य उत्तरपदस्य पदत्वव्यपदेशो कर्तव्य इति
कैयटग्रन्थो व्याख्यातः । पदान्तविधावित्यनेनैव माषकुम्भवापेने-
त्यादौ तदप्रवृत्तिसिद्ध्या पदत्वप्रयुक्तकार्यं इत्यर्थो नाश्रयणीय इति



तदाशयः । 'ङमुट्' सूत्रशेखरग्रन्थस्तु ङमन्तं यत् पदमिति व्याख्या-
नेऽपि तस्मात् परस्याजादेः पदस्येत्यर्थस्य भाष्यरीत्या राजनकैदित्यत्र
तद्वारणायावश्यकत्वपरः । भाष्यरीत्या ङमन्तपदावयवह्रस्वात् परस्य ङमो
ङमुडित्यर्थे तस्य पदान्तविधित्वेऽपि अचो ङमुडित्यर्थे तस्य तत्त्वाभावेन
परमदण्डिनावित्यादावपि तन्निषेधालाभापत्तिपरश्च । तत्र उत्तरपदस्य
कार्यित्वमित्यस्य पदान्तकार्यविध्युद्देश्यत्वमित्यर्थो वाऽस्तु । प्रकृतवार्त्तिक-
व्याख्यानपरशेखरग्रन्थस्तु 'बहुच्पूर्वस्य' इति वचनान्तरकर्तव्यतापरः,
उत्तरशब्दस्य समासचरमावयवपरत्वस्वारसिकत्वाभिमानेन प्रातिपदि-
कावयवत्वलक्षणलुक एव ग्रहणमित्यर्थानावश्यकत्वपरः । एवं तत्प्रत्या-
ख्याने बहुच्पूर्वस्य षत्वं नेति वचनं कार्यं ; वार्त्तिकारम्भे 'बहुच्पूर्वस्या-
पदादिविधौ' इति वचनवदिति शब्दरत्नग्रन्थोऽपि प्रत्याख्यानपरस्य
एकदेशिन आशयवर्णनपरः । तत्र प्रत्याख्यानप्रकारस्थयोगविभागस्य
इष्टसिद्ध्यर्थत्वाद् यत्र उत्तरपदस्य कार्यित्वं तद्विषय एव ; पदान्तत्वप्रयुक्त-
विधावेव च प्रवृत्तिरित्युक्तिस्तु कार्यित्वस्य पदान्तसम्बन्धिकार्योद्देश्यत्व-
रूपतयैव ग्रहणमिति बोधनाय । तच्च 'सुगण्णीश' इति समासे प्रत्याख्याने
'स्वादिषु' इति ईशशब्दस्य पदत्वेन वार्त्तिकमतेऽप्युक्तरीत्या पदान्त-
विधित्वाभावात् प्रत्ययलक्षणनिषेधाभावात् पदत्वेन च ङमुट्सिद्धावपि
सुगण्णीशौ सुगण्णीशेनेत्यादौ वार्त्तिकरीत्या ङमुट्सिद्धौ प्रत्याख्यानरीत्या
'स्वादिषु' इति विहितपदत्वस्य 'असर्वनामस्थानेऽयचि' इत्यनेन निषेधात्
यचीति योगविभागेन भत्वाच्च तदसिद्धौ फलभेदापत्त्या तद्वारणाय
वार्त्तिकेन सह प्रत्याख्यानस्य विरोधाभावलाभोपायपरम् । 'उणादयः'

इति निर्देशस्तु 'सनाद्यन्ताः' इत्यादौ आदिशब्दस्य मध्यमपदत्वेन यथाश्रुतशेखररीत्याऽपि पदत्वाबाधात् ङमुटो दुर्वारत्वेन तदभावाय 'अयस्मयादि'त्वेन भत्वात् नलोपाद्यभाववत् इह ङमुटोऽप्यभावाश्रयणादुपपन्नतरः ; एवं 'तङानावात्मनेपदम्'इत्यत्रापि ।

अत एव 'आयन्नादिषूपदेशिवद्वचनम्, उपदेशावस्थायामेवायन्नादयो भवन्ति' इति भाष्यप्रयोगः, सर्वस्य तुन्नन्तस्य तृशब्द आदेशः प्राप्नोतीति 'तृज्वत्' सूत्रभाष्यप्रयोगश्च सङ्गच्छते । अन्यथा पदात्रयबहुत्वात् परङमः परस्याजादेः पदस्य ङमुडित्यर्थस्यैव 'ङमुट्' सूत्रशेखरोक्तत्वेन तद्रीत्या यथाकथञ्चित् पदान्तत्वप्रयुक्तविधित्वनिवेशोऽपि तस्याप्यभावेन तत्र प्रत्ययलक्षणनिषेधाप्राप्त्या पदत्वेन तत्सिद्धिसम्भवेऽपि उत्तरपदस्य कार्यित्वमात्रनिवेशेन 'पदान्तविधौ' इत्यस्य त्यागे तदसङ्गतिः स्पष्टैव। सूत्राणामेव च्छन्दस्त्वादेशेन भाष्यप्रयोगस्य अतथात्वेन 'उभयसंज्ञान्यपि' इत्यनेनापि पदत्वाश्रयणप्रत्याशादौर्लभ्यात् । एवञ्च पूर्वं सुगण्णीश इत्यादौ बहुपदबहुव्रीहौ ङमन्तं यत् पदमिति व्याख्यानेऽपि ङमुट् भवत्येव। मध्यमपदत्वेन सुगणित्यस्य तन्निषेधाभावात्। पदावयवबहुत्वात् परङमो ङमुडजादौ पद इति भाष्यस्वरससिद्धेऽर्थेऽपि प्रत्ययलक्षणसाध्यपदत्वाश्रयचरमावयवविधित्वाभावात् तन्निषेधाप्राप्तेरेवेति ङमुट् निर्बाध एव। तत्र भाष्यप्रयोगे नलोपाद्यप्रवृत्तिस्तु 'प्रकृतिवदनुकरणम्' इति प्रत्ययत्वातिदेशात् प्रत्ययत्वेन व्यपदेशिवद्भावात् तदन्तत्वेन वा, 'अप्रत्ययः' इति पर्युदासेन अप्रातिपदिकत्वादनु-



कार्यस्वरूपभङ्गाद्वेति बोध्यम् । स्वादिविधिस्तु तदनित्यत्वात् 'क्षियः' इत्यादौ 'अधातुः' इति पर्युदासाभाववत् 'अप्रत्ययः' इति पर्युदासाभावस्य सत्त्वात् सिद्ध इति न दोषः । न चैवमपि यजादिप्रत्ययमात्रे भत्वस्वीकारेण परमशंभवतीत्यादौ पूर्वरूपवारणे राजेवाचरति राजानतीत्यादौ अल्लोपापत्तिः, 'अनुनासिकस्य क्वि–' इति दीर्घेऽपि 'एकदेशविकृत' न्यायेन अन्त्वादिति वाच्यम् । 'अल्लोपः' इति तपरकरणेन तदप्राप्तेः । न चैवमपि विश्वगा इवाचरतीत्यर्थे विश्वगातीत्यादौ 'आतो धातोः' इत्याल्लोपापत्तिः, एवं रङ्गभिक्षुरिवाचरतीत्यर्थे रङ्गभिक्षवतीति आचारक्विबन्तात् 'धातोः कर्मणस्समानकर्तृकात्' इत्यनेन इच्छार्थे सनि 'सन्यङोः' इति द्वित्वे 'सनि ग्रहगुहोश्च' इत्यत्र चेन 'उकः' इत्यनुवृत्त्या इण्निषेधे 'अज्झन-' इति दीर्घे षत्वे रिरङ्गभिक्षूषतीत्यादौ अजादिपरकत्वाभावात्, भत्वाप्राप्त्या 'दधिसेचौ' इत्यादौ उपपदसमासार्थं पदादादिरिति पञ्चमीसमासे वार्तिकरीत्या षत्वसिद्धावपि, प्रत्याख्यानरीत्या प्रत्ययलक्षणस्य दुर्वारत्वेन पदत्वेन 'सात्पदाद्योः' इति निषेधापत्तिश्चेति वाच्यम् । भाष्ये प्रत्याख्यानप्रकारस्य बहुसेचावित्यादिलक्ष्यसिद्ध्यैव दूषितत्वेन तस्यैतद्दूषणोपलक्षणपरत्वेन सिद्धान्ते यजादिप्रत्ययमात्रे भत्वाश्रयणस्य अनावश्यकत्वेन अभावेन दोषाभावात् । तत्र द्वितीये प्रत्याख्यानपक्षे दधिसेचावित्याद्यर्थं पञ्चमीसमासावश्यकत्वेन तद्रीत्या निषेधप्राप्त्या वार्तिकरीत्या षत्वप्राप्त्या च फलभेदे तदभावाय अनभिधानकल्पने बहुच्पूर्वस्यापि तत्त्वापत्त्या तदयोगेन सनः षत्वं वाच्यमिति वचनान्तरस्यैवाश्रयणापत्तौ प्रत्याख्यानगुरुतरत्वस्य स्पष्टत्वेन

तदसम्भवादेवादोषाच्च । एतेन पदान्तविधावेव तत्प्रवृत्तौ परमाट्तिरित्यादौ ष्टुत्वनिषेधाय कार्यित्वनिवेश आवश्यक इत्यपास्तम् । पञ्चजनान् आचष्टे पञ्चजनयतीत्यतः क्विपि 'अनुनासिकस्य क्वि-' इति दीर्घे नलोपस्य पदान्तविधित्वेन तन्निषेधेन पदत्वाभावात् तदभावे पञ्चजान्तिरिति भवत्येव, प्रत्याख्यानरीत्या पदत्वेन तत्प्राप्तावपि तस्य लक्ष्यासिद्ध्यैव निरस्तत्वेन तस्याकिञ्चित्करत्वात् । कार्यित्वनिवेशवादेऽपि एतदर्थमादृशरीतेरेवात्राश्रयणीयत्वादिति दिक् ।

'उत्तरपदत्वे च' इत्यस्य तु पूर्वपदभिन्नस्य पदत्वे सति यः पदान्तः तस्य यो विधिः तत्प्रयोजकं प्रत्ययलक्षणं प्रातिपदिकावयवलक्षणसुब्लुको न भवतीति फलितोऽर्थः । तत्र पूर्वपदत्वस्य समासावयवानुत्तरत्वे सति समासावयवपूर्वत्वरूपत्वेऽपि सत्यन्तस्य प्रकृतेऽनुपयोगात गौरवाच्च । पूर्वदण्डिप्रिय इत्याद्यसङ्ग्रहेण च तत्परिहाय लाघवेन विशेष्यमात्रं विवक्षितम् । 'पदान्त' इत्यनेन च पदावयवोत्तरत्वे सति पदावयवपूर्वत्वाभाववत्त्वस्य अन्तशब्दमर्यादया लाभेऽपि तथैव विशेष्यमात्रं विवक्षितं लाघवात् । तथा चायं निष्कर्षः— स्वावच्छिन्नावयवप्रातिपदिकाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नसमासत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावसमानाधिकरणा, या स्वावच्छिन्नावयवपूर्वत्वाभाववत्त्वसम्बन्धावच्छिन्नपदत्वपर्याप्तावच्छेदकताका उद्देश्यता, तन्निरूपकविधिप्रयोजकप्रत्ययलक्षणातिदेशः प्रातिपदिकावयवत्वलक्षणलुको नेति ।



यदि तु 'भ्राजभास—' इति सूत्रे ग्रावस्तु इति निर्देशात् ग्रावशब्दस्य स्तुधातुना समासे उक्तरीत्या पूर्वपदभिन्नत्वापत्त्या प्रत्ययलक्षणनिषेधेन पदत्वाभावेन लोपो दुर्लभ इत्युच्यते ? तर्हि स्वावच्छिन्नप्रयोजकं यत् सुब्भिन्नं तदव्यवहितपूर्वत्वाभावः सम्बन्धस्वरूपमिति बोध्यम् । राजपुरुषः पूर्वदण्डिप्रिय इत्यादौ राजदण्ड्यादिशब्दानां पदत्वे तन्निषेधवारणाय समानाधिकरणान्तं उद्देश्यताविशेषणम् । संसर्गतावच्छेदके प्रातिपदिकस्य सुब्भिन्नस्य वा निवेशेन दधिसेचिशय इत्यादौ पूर्वसमासोत्तरपदस्य वार्तिकविषयत्वलाभः । तत्र सुब्भिन्नस्य स्वावच्छिन्नावयवत्वं परिहाय स्वावच्छिन्नप्रयोजकत्वनिवेशात् पञ्चगवधन इत्यादौ गोशब्दस्य समासावयवटजव्यवहितपूर्वत्वेऽपि टचः समासानन्तरभावितया तत्प्रयोजकत्वाभावात् वार्तिकविषयत्वसिद्धिः । राजपुरुषः पूर्वदण्डिप्रिय इत्यादौ स्वपदेन बहुव्रीहित्वतत्पुरुषत्वयोः व्युत्क्रमेण धरणे उक्तसम्बन्धेन बहुव्रीहित्वाद्यभावस्य राजशब्द—दण्डिन्शब्दयोः सत्त्वात् वार्तिकविषयत्ववारणाय समासत्वपर्याप्तत्वमवच्छेदकताविशेषणम् । उद्देश्यतायामुक्तसम्बन्धेन पदत्वावच्छिन्नत्वनिवेशादेव पदादिविधेः उत्तरपदादिविधेः अजादिपदस्य ङमुड्विधेश्च एतद्वार्त्तिकविषयत्वव्युदासः । राजकाम्यतीत्यादौ धात्ववयवत्वलक्षणलुकः दधिसेगिति व्यस्ते 'स्वमोर्नपुंसकात्' इति लुकश्च एतद्विषयत्ववारणाय प्रातिपदिकावयवत्वलक्षणत्वं लुको विशेषणम् । उद्देश्यताख्यविषयताविशेषनिवेशनादेव

परमाट्तिरित्यादौ ष्टुत्वनिषेधस्य एतद्विषयत्वाभावात् ष्टुत्वनिषेधसिद्धिः । प्रथमोद्देश्यतायां स्वावच्छिन्नावयवोत्तरत्वस्य स्वावच्छिन्नावयवस्य वा सम्बन्धान्तरस्य प्रहाणादेव बहुसेचौ पूर्वदण्डिप्रियः इत्यादेः प्रातिपदिकावयवलुकः सङ्ग्रहः । एवमितराण्यपि विशेषणघटकप्रयोजनान्यूह्यानीति । तस्मात् सर्वति परमसर्वतीत्यादौ पुंवत्त्वानापत्तिर्दुर्वारैव । यद्यभिधानं स्यात्, 'ह्रस्वनद्याप' इति सूत्रे आम्ग्रहणेन 'कास्प्रत्ययात्' इत्यामोऽपि ग्रहणे 'गोपायाञ्चकार, कारयाञ्चकारे'त्यादौ नुटमाशङ्क्य, नित्यत्वादल्लोपायादेशयोः कृतयोर्नुडप्राप्त्या दोषाभाव इति भाष्यग्रन्थेन मालाञ्चकारेत्याद्यस्पर्शेन आबन्तेभ्य आचारक्विपोऽनभिधानलाभेन सर्वतीत्यादेरनभिधानात् अदोषः । न च इह पुंवत्त्वे कृते आबन्तत्वाभावात् न नुट्प्राप्तिरिति तदर्हाणामेव तेन भाष्येण अनभिधानसिद्ध्या ईदृशानामनभिधाने न मानमिति वाच्यम् । सर्वाशब्दात् क्विपि पुंवत्त्वे ततो लिटि अनेकाच्त्वाद्वा प्रत्ययान्तत्वाद्वा आमि, अतो लोपात् पूर्वं प्रतिपदोक्तत्वात् 'आमि सर्वनाम्नः' इत्यनेन सुडापत्तेस्तद्वारणाय तत्राम्ग्रहणेन तस्यामः अग्रहणस्य वाच्यतया अनभिधानस्यावश्यकत्वात्; ज्ञापकस्य सामान्यविषयत्वस्यैवौचित्येन सर्वनामन्याबन्ते तत्सङ्कोचे मानाभावाच्च । अन्यथा लिट्येवानभिधानकल्पनापत्तौ परिभाषेन्दुशेखरग्रन्थविरोधापत्तेः । तस्माद् यथोक्तपक्षद्वयं सुसाध्वेवेति सिद्धम् ।



अत्रेत्थं वृत्तिमात्रे वचननिगदिते सर्वनाम्नां तु पुंस्त्वे
सिद्धे स्पष्टव्यवस्थे विदितपदवदैः सर्वतन्त्रस्वतन्त्रैः ।
श्रीमद्वेदान्तसूरिप्रमुखगुरुवरैः सुप्रयुक्ते सुसाधौ
शङ्कापङ्कप्रदिग्धाशयविबुधजनश्रद्धया शुद्धिमेयात् ॥

गोनर्दीयः प्रनृत्यत्स्वपरनटवरो रङ्गदेशेऽन्तरास्ये
वाणीदोषप्रहाणी प्रथितपदवदो धूतपुंभावशङ्कः ।
इत्थं पुंस्त्वं ह्नुवानः सभिकसभसदामोदितस्वादुवादो
योऽदाद् वेदान्तविद्यागुरुहृदयसमुल्लासिधीलासिकां मे ॥

तुरङ्गवक्त्रविलसज्जिह्वारङ्गनिषङ्गिणी ।
वेदशृङ्गगुरूत्तुङ्गवादभङ्गी विराजताम् ॥

सर्वादिपुंवत्त्वविधिव्यवस्थासारोदरा वादतरङ्गिणीयम् ।
गोपालसूरिक्षितिभृत्समुत्था सुस्नापयेच्छ्रीनृहरेः पदाब्जम् ॥

वेदान्तसूरिवाणी निर्जरवेणी सुधोरणी जयति ।
पुंस्त्ववचनप्रहाणी पदे समस्ते भवत्यभिख्याते ॥

इति श्रीवीरराघवशठकोपयतीन्द्रविरचिता
वादतरङ्गिणी समाप्ता ॥

॥ हरिः ओम् ॥

श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकाय नमः

# ॥ तारार्थसारः ॥

श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीशठमथनरामानुजमहादेशिकाय नमः ।

तारार्थसारवक्तारौ 'व्यतिरेका'दिसूत्रतः ।
रामानुजागमान्तार्यौ सीमातीतदयौ भजे ॥ १ ॥

नृसिंहपादुकासेवी शठजिल्लक्ष्मणाभिधः ।
योगीशो हृदि मे नित्यं सन्निधत्तां समृद्धये ॥ २ ॥

अत्र श्रीसूक्तिगत् तत्क्रतुनयविषयायोगनिर्धूतिरुद्धं
ज्ञातृत्वादन्यरूपस्मरणनियतभाव्यस्तपाप्मत्वभाव्यम् ।
इत्येके संशयीरन् भवनियततया भाषितान् ज्ञातृतादीन्
अद्रष्टारो विरुद्धान् निजहृतदुरितत्वादिभिर्मुक्तिनित्यैः॥३॥

तत्र स्वर्ग्यादिवत् तत्क्रतुनयविरहे ज्ञातृतादिस्मृताव-
प्यस्तावत्वादिसिद्ध्या तनुसहजमियद् ध्येयमस्त्वित्यशङ्कि ।
ध्येयान्तर्भूतजीवाकृतिरपि नियता तत्क्रतुन्यायतोऽतो
मुक्त्यारुद्धज्ञतादिस्मृतिपरिहरणाऽऽभाषि तन्निर्णये तु ॥४॥

बन्धाकारान्तरेको मतिविषयतयाऽऽभाषि सूत्रे स्वशब्दात्
शुद्धो ब्रह्मोपलब्धौ स खलु विषय इत्यूर्ध्वभाष्येऽपि तस्य ।
दार्ढ्योक्त्या मुक्त्ययुक्ताकृतिमननिरासैदमर्थ्यं शरीरे
भावन्यायस्य सिद्धं न तु कथितनयानन्ययोगार्थलेशः ॥५॥



यद्वान्यद् वाच्यमत्र प्रकृतनयगिरोऽनन्ययोगार्थतायां
भोगे साम्याविशिष्टप्रमुखविहतिकोरसूत्रभाष्यादिहानम् ।
तन्नातीवोपयुक्तं प्रशिथिलविशयोल्लुञ्छनायारुभूम्ना
लब्धर्थक्लेशभूमा हसनपदमिव खुम्हो ह्यद्रिखानात् ॥६॥

शेषतैकरसशुद्धचिदाकृत्यात्मलाभजननैकसमुत्काः ।
व्यासलक्ष्मणमुनीन्द्रगिरो मे हृद्यतां दधतु देशिकसूक्त्या ॥७॥

जयति यतिराजसूक्तिर्निगमशिरस्सूरिदिव्यगीर्जयति ।
तदुभयहृदयाभिज्ञाः सार्थकजनुषो जयन्ति भुवि सन्तः ॥ ८ ॥

---

श्रीमते रामानुजाय नमः ।

श्रीमते श्रीलक्ष्मीनृसिंहपादुकासेवकशठकोप-
रामानुजयतीन्द्रमहादेशिकाय नमः ॥

---

श्रीवीरराघवशठकोपयतीन्द्रविरचिता

## ॥ तारार्थसारव्याख्या ॥

शरीरभावाधिकृतिं प्रणवार्थविशोधिनीम् ।
प्रत्यभिज्ञापयद् श्रीमान् भाष्यकारः प्रसीदतु ॥

नृसिंहपादुकासेवी शठजिल्लक्ष्मणाभिधः ।
योगीशो हृदि मे नित्यं सन्निधत्तां समृद्धये ॥

अत्र केचित्—शरीरेभावाधिकरणे सर्वासु परविद्यासु उपास्योपासनस्वरूपवदुपासकस्य प्रत्यगात्मनः स्वरूपस्यापि ज्ञातव्यत्वमुक्तमिति ज्ञातृत्वादिमात्राकारतया अनुसन्धाने प्रजापतिवाक्योदितापहतपाप्मत्वाद्याकारकस्य तत्क्रतुन्यायेन अप्राप्तिपरसिद्धान्तग्रन्थेन

"उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया ।

सा तत्क्रतुनयग्राह्या"

इति श्रीरहस्यत्रयसारश्रीसूक्तिसिद्धं तत्क्रतुन्यायायोगव्यवच्छेदपरत्वं विरुद्ध्यते । न हि तन्न्यायस्य तत्परत्वे तेन तदप्राप्तिपरसिद्धान्तग्रन्थोक्तिस्थितिर्घटते । ज्ञातृत्वाद्याकारानुसन्धानेऽपि अपहतपाप्मत्वादेरनिषेधेन तत्सिद्धेः निर्बाधत्वादिति निमील्य संशेरते ।

एतत्संशयं परिजिहीर्षवोऽपरे केचन तच्छङ्कानुवादपरिहाररूपं कथिताधिकरणार्थसङ्ग्रहरूपं च तारार्थसाराख्यं निबन्धं निर्बिभन्तस्तौ भक्तजननिरवधिकदयापर-श्रीभगवद्रामानुजनिगमान्तदेशिकयोः श्रीभाष्य-श्रीरहस्यत्रयसारश्रीसूक्तिभ्यामेव सुविमर्शाभ्यां उक्तशङ्कानुदयलाभात् तदुपकारविशेषाभिसन्धिना चिकीर्षितप्रकृतनिबन्धनिराबाधाचारार्थमङ्गलाभिसन्धिना च मिथोऽतिस्निग्धनिस्सन्दिग्धहृदयनिखिलनिजग्रन्थतया पारम्पर्यातिरेकेण साक्षादपि लब्धगुरुशिष्यभावानुभवौ तत एव नाथयामुनादिमौक्तिकमणिबहुलगुरुपङ्क्तिहारतरलायितगुरुमणियुगलभूतौ तावेव एकोक्त्या भजति—

तारार्थसारवक्तारौ व्यतिरेकादिसूत्रतः ।
रामानुजागमान्तार्यौ सीमातीतदयौ भजे ॥ १ ॥



तारः प्रणवः मूलमन्त्रादिघटकः, तदर्थाश्च उपायोपेयोपेतृरूपास्त्रयः। तत्र उपायः—उपासनभरन्यासरूपभक्तिप्रपत्त्योः करणभूतो वाचकरूपः प्रणवः शब्दस्वरूपपरसमुदायप्रतिपाद्योऽर्थः । उपेयस्तु तत्र प्रथमाक्षरभूताकारवाच्यः परमपुरुषः श्रियः पतिः । उपेता तु तृतीयाक्षरभूतमकारवाच्यः उपासकादिरूपो जीवः । तेषु परशेषतैकरसज्ञातृत्वाद्याकारतया विशेष्यतया प्रतिपाद्यत्वादुपेता सारभूतः । तस्य वक्तारौ उपायानुष्ठानदशायां परशेषतैकरसपरिशुद्धस्वरूपतया अनुसन्धेयत्वेनेति शेषः । व्यतिरेकादिसूत्रतः—'व्यतिरेकस्तद्भावभावित्वात्' इति सूत्रार्थविवरणपरश्रीभाष्यग्रन्थेन मूलमन्त्रार्थपरस्थेन "ज्ञानगुणகனென்னுமிடம் சொன்னால் मुन्दच्चியில் निरुपाधिकप्रसरणமாய் इत्यादिना व्यतिरेकस्तद्भावभावित्वात् என்கிற सूत्रத்திலும் सिद्धम्' इत्यन्तेन ग्रन्थेन च क्रमात् प्रतिपादयितारौ । सीमातीतदयौ भगवत्प्रसादलिप्सूत्कटकामनया उपसत्तिविशेषादिगुणपूर्तिविकलशिष्येष्वपि अध्यात्मसम्प्रदायमुखप्रदर्शनापायनिबन्धविशेषनिर्माणोन्नीतनिरवधिकभक्तजनवात्सल्यौ । रामानुजागमान्तार्यौ प्रसिद्धौ भजे—प्रपद्ये इत्यर्थः ।

इयमत्र श्रीभाष्यश्रीसूक्त्योः सुस्निग्धहृदयता । तथाहि श्रीभाष्ये "एक आत्मनः शरीरे भावात्" इति सूत्रप्रतीकमुपादाय "सर्वासु परविद्यासु उपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम् "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति । वक्ष्यति चास्य

प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानम्, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च इति' इति ग्रन्थेन वक्ष्यमाणोपोद्घातार्थसंक्षेपः सूक्तः। 'त्रयाणामेव च' इति सूत्रश्रीभाष्ये तु "अस्मिन् प्रकरणेऽप्युपायोपेयोपेतॄणां त्रयाणामेव च एवमुपन्यासः=ज्ञेयत्वेन उपन्यासः तद्विषयः प्रश्नश्च दृश्यते, नान्यस्याव्यक्तादेः" इत्यारभ्य प्रथमं प्रणवं प्रश्नस्य तद्वाच्यं प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन् प्रणवं तावदुपदिदेश।

"सर्वे वेदा यत् पदमामनन्ति, तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण ब्रवीमि ॥

'ओम्' इत्येतत्" इत्यन्तेन मुमुक्षोर्नचिकेतसो मृत्युनोपदिष्टं प्रणवस्योपायोपेयोपेतृत्रयपरत्वमनुगृहीतम्। तत्र "प्राप्यस्वरूपं च" इत्यंशं 'पदशब्दः पद्यत इति व्युत्पत्त्या प्राप्यवाचीति भावः' इति व्याख्याय, 'तदन्तर्गतं च' इत्यस्य "प्रणववाच्यान्तर्गतं प्रणववाच्यैकदेशं, प्रणवैकदेशवाच्यो हि उपेता जीवः। यद्वा, प्राप्ये=प्रणववाच्ये परमात्मनि प्रकारतयाऽन्तर्गतमित्यर्थः" इति श्रुतप्रकाशिकायां विवरणं कृतम्। "परिशुद्धजीवस्य प्राप्यान्तर्भावात् पदशब्दवाच्यान्तर्भूतत्वमिति भावः" इति च तत्रैव। यद्यपि 'सर्वे वेदाः' इत्यनेन मन्त्रेण पूर्वोत्तरभागावसेयतुल्यं परं ब्रह्मैव प्राप्यं प्रणववाच्यमुपदिष्टमिति प्रतीयते। तथापि

"अन्यत्र धर्मादन्यत्र अधर्मादन्यत्रास्मात् कृताकृतात्
अन्यत्र भूताद्भव्याच्च।"



इति प्रश्नपरमन्त्रस्य 'सकलेतरगतीतानागतवर्तमानसाध्यसाधनसाधकविलक्षणे त्रये पृष्टे' इति श्रीभाष्यग्रन्थेन उक्तत्रयविषयप्रश्नपरत्ववर्णनादुत्तरस्य प्रश्नानुगुणत्वावश्यम्भावात् "न जायते म्रियते वा विपश्चित्" इत्याद्युत्तरमन्त्रैरुपेतृजीवस्वरूपस्यापि शोधनाच्च सप्रकारब्रह्मध्यानोपायतया विहितप्रणवस्य प्राप्तृजीवपरत्वमप्यवश्याश्रयणीयमिति श्रीभाष्याद्याशयः। एवञ्चात्र पदशब्दवाच्यप्राप्यान्तर्भावात् प्राप्तुः प्रत्यगात्मनः परिशुद्धस्वरूपस्यैव उपायदशायां प्रणवानुसन्धेयत्वं स्पष्टं सिद्धम्। "आत्मेति तु उपगच्छन्ति ग्राहयन्ति च" इत्यत्र तु परमात्मनः प्रत्यगात्मशरीरत्वेनोपास्यत्वं निर्णीतमिति "तुल्यवित्ति"न्यायेन प्रणवार्थविशेषभूतजीवस्य परमात्मात्मत्वेन ध्येयत्वलाभात् "त्वं वा अहमस्मि" इतिवत् परमात्मशेषभूतोऽहमिति परशेषतैकरसस्वरूपविषयत्वं सिद्धम्। न हि तदात्मकत्वं तदेकशेषत्वादन्यत्; शेषत्वायोगव्यवच्छेदस्य शरीरलक्षणत्वात्। इत्थं परशेषतैकपरिशुद्धजीवस्वरूपस्य प्रणवानुसन्धेयत्वरूपमधिकरणान्तरार्थमुपजीव्य शरीरेभावाधिकरणं प्रवृत्तमिति वक्ष्यमाणोपोद्घातत्वमस्य सिद्धम्।

न च "இந்த परशेषतैकरसपरिशुद्धस्वरूपं मुमुक्षुदशैயில் अनुसन्धेयं என்னுமிடம் 'व्यतिरेकस्तद्भावभावित्वात्' என்கிற सूत्रத்தில் सिद्धम्" इति दर्शितश्रीसूक्त्या उक्तार्थस्य प्रकृताधिकरणसिद्धान्तसिद्धत्वप्रतिपादनादुपोद्घातग्रन्थरीत्या अधिकरणा-

न्तरसिद्धत्वलाभाच्च मिथोऽनयोर्विरोध एवेति कथमनयोः स्थिरग्रहणयता? प्रकृताधिकरणोत्थितिर्वा कथमिति वाच्यम्। "ओं इत्येवं ध्यायथ" इत्युपासनकरणतया प्रणवस्य विद्याविशेषे विधानेऽपि विद्यान्तरविधिप्रकरणपठितमन्त्रान्तराणामपि करणत्वस्यावर्जनीयत्वेन दहरादिविद्यासाधारणमुपासकस्वरूपानुसन्धानप्रकारं निर्णेतुं प्रणवेनापि परिशुद्धजीवस्य प्राप्यान्तर्भावमात्रेण परिशुद्धस्वरूपस्यैव उपासकस्य सर्वत्र ध्येयत्वमिति नियमः-इत्यत्र तन्निर्णेतुं च अधिकरणप्रवृत्तिरित्याशयात्। दहरविद्याप्रकरणस्य प्रजापतिवाक्योपात्तदेहात्मविवेकमात्रपर्यवसायिबन्धदशासिद्धचक्षुरादिकरणायत्तज्ञातृत्वादिमात्राकारतयाऽनुसन्धानेऽप्युपनिषत्कस्वर्गाद्यर्थकर्मन्यायेन फलसिद्धौ किं परिशुद्धदशासिद्धाकारानुसन्धाननियमेनेत्युत्थिताक्षेपेणाधिकरणोत्थानसौष्ठवाच्च। 'देहातिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्था' इति वक्ष्यमाणेन च इदं ध्वनितम्। तेन हि कर्माधिकारसिद्धये देहात्मविवेकमात्रस्य पर्याप्ततया तत्र तावतैव फलसिद्धावपि उपासनविधौ 'तत्क्रतु'न्यायेन बन्धदशासिद्धाकारानुसन्धाने तस्य फलदशायामवश्यम्भावप्रसङ्गेन निरुपाधिकप्रसरणनिस्सङ्कोचज्ञानगुणकत्वलक्षणमुक्तिदशया तस्य विरोधात् तदसिद्ध्यापत्त्या बद्धाकारपरित्यागेन यथावस्थितापहतपाप्मताद्याकार एवानुसन्धेय इति स्पष्टमुक्तमिति लभ्यते।

अत एव "तस्मात् प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः" इति सिद्धान्तग्रन्थस्थेन एवकारेण पूर्वपक्षदर्शितज्ञातृत्वादेः



अतथात्वबोधनं सङ्गच्छते। अनेन दहरविद्याप्रकरणपठितदेहात्मविवेकपरवाक्यविशेषोपात्तबन्धदशासिद्धज्ञातृत्वादेः पूर्वपक्षबीजस्य ग्रहणेन तदुपमर्दिसिद्धान्तसूत्रविषयस्य तत्प्रकरणस्थतद्विद्याशेषापहतपाप्मत्वादेः व्यतिरेकशब्दार्थतया व्याख्यानेऽपि प्रकृताधिकरणस्य सर्वमुमुक्षुसाधारणतया तत्तद्विद्याकरणमन्त्रोपात्तप्राप्तृस्वरूपस्य बन्धदशाव्यतिरिक्तपरिशुद्धाकारतयैवोपास्यत्वमिति नियम एवाभिनिवेशः, न तु अपहतपाप्मत्वाद्यष्टकरूपतयैवेत्यत्र तस्य दहरवाक्यशेषत्वात् तद्विद्यामात्रनियतत्वादिति सूचितं श्रीभाष्ये 'सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः' इति; अत्रादिशब्देन परिशुद्धाकारमात्रस्य विवक्षितः। तस्य उक्तार्थव्यतीकरणपरत्वमेव वेति बोध्यम्। अन्यथा प्रणवसाध्यनाचिकेताग्निविद्यादौ अपहतपाप्मत्वादेः अनुपात्तत्वेन दहरवाक्यस्थापहतपाप्मत्वादेः तत्रोपसंहारे विद्यैक्यस्य तत्र तदलाभे तद्विषयस्य "त्रयाणामेव चैवम्" इत्यादेः प्रणवार्थविषयस्य प्रकृताधिकरणार्थोपजीवकत्वपरश्रीभाष्येण प्रणवार्थस्याप्येतदधिकरणशोधनीयत्वलाभात्। तस्यात्रास्पर्शे च प्रकृतभाष्यविरोधो दुर्निरोधः स्यात्। पूर्वपक्षसिद्धान्तसूत्रयोर्विद्याविशेषोपस्थापकपदाग्रहणस्वरसभङ्गश्च।

वस्तुतस्तु अपहतपाप्मत्वस्य निर्मलस्वरूपतया सर्वविद्यासाधारणप्रत्यगात्मस्वरूपानुसन्धानपरस्य तद्वाक्यस्य "आनन्दादि"न्यायेन सर्वविद्याशेषत्वेऽप्यविरोध इति तत्त्वम्। एवं सर्वविद्यासाधारण्येक

भासा अहमर्थः प्रत्यगात्मा शरीरे वर्तमानदशाकारेणानुसन्धेयो वा? उत मुक्तिदशासिद्धाकारेण? इति विशये—स्वर्गाद्यर्थकर्मन्यायेन शरीरदशासिद्धाकारेणेति पूर्वपक्षे; 'तत्क्रतु'न्यायेन बद्धदशाकारस्य फलदशान्वयापत्त्या मुक्तिविरोधात् तदलाभापत्त्या मुक्तिदशासिद्धाकार एवानुसन्धेयः इति सिद्धान्तः, इति स्थितम्। तदेतत् सर्वं श्रीसूक्तौ परशेषतैकरसपरिशुद्धस्वरूपं मुमुक्षुदशायामनुसन्धेयमिति "व्यतिरेकस्तद्भावभावित्वात्" इति सूत्रे सिद्धमिति ग्रन्थेन क्रोडीकृतमिति। एवं प्रकृताधिकरणश्रीभाष्यग्रन्थ-मूलमन्त्राधिकारश्रीसूक्त्योः सुस्निग्धहृदयत्वसिद्धया 'तत्क्रतु' न्यायायोगव्यवच्छेदपरश्रीसूक्तिरप्यतिस्निग्धहृदया भवतीति विरोधाशङ्कालेशोऽपि नेति सिद्धम्॥

अथैकया स्रग्धरया तद्विरोधशङ्काया अतिशैथिल्यप्रदर्शनपूर्वकं तां अनुवदति—

अत्र श्रीसूक्तिगत् 'तत्क्रतु' नयविषया योगनिर्धूतिरुद्धं
ज्ञातृत्वाद्यन्यरूपस्मरणनियतभाव्यस्तपाप्मत्वभाष्यम्।
इत्येके संशयीरन् भवनियततया भाषितान् ज्ञातृतादीन्
अद्रष्टारो विरुद्धान् निजहतदुरितत्वादिभिर्मुक्तिनित्यैः॥१॥

अत्रेति। ज्ञातृत्वादिभ्यः 'ज्ञाता कर्ता भोक्ता इहामुत्रसञ्चारक्षमः' इत्युक्तेभ्यः अन्यो योऽपहतपाप्मत्वादिः तत्स्मरणस्य



तदुपासनस्यैव नियतभावि अवश्यम्भावि अस्तपाप्मत्वं-अपहतपाप्मत्वादिकं यस्मिन् श्रीभाष्ये बोध्यतया स्थितं तथाभूतं भाष्यं शरीरभावाधिकरणसिद्धान्तभाष्यं, कर्तृ, श्रीसूक्ति उपायविभागाधिकारगां गच्छतीति कर्मण्युपपदे गमेः कर्तरि क्विपि 'गमः क्वौ' इत्यनुनासिकलोपे 'ह्रस्वस्य पिति' इति तुक्। श्रीसूक्तिगत् प्रतिपाद्यतया तद्गामिनी या तत्क्रतुनयस्य फलतया विषयभूता अयोगनिर्धूतिः अयोगव्यवच्छेदः तया रुद्धं विरुद्धं, विधेयं भवतीति शेषः। इति-इत्थं एके-शरीरभावाधिकरणार्थत्वबुभुत्सवः भवनियततया बन्धदशासिद्धतया भाषितान् "शरीरे वर्तमानस्य तादृशमेव रूपम्" इति श्रीभाष्यग्रन्थेन दहरविद्यावाक्यविवरणपरेण "अथ यत्रैतदाकाशमनुनिषण्णं चक्षुः स चाक्षुषः पुरुषः" इत्यादिना चक्षुरादीनां करणत्वं, रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य, तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य" इत्यन्तेन प्रकरणान्तरगततद्ग्रन्थेन च प्रतिपादितान् मुक्तिनित्यैः मुक्त्येकभाविभिः निजैः स्वाभाविकैः हृतदुरितत्वादिभिरपहतपाप्मत्वादिभिः विरुद्धान् एकस्मिन् जीवे देशकालैक्यासहान् ज्ञातृतादीन् ज्ञातृत्वकर्तृत्वभोक्तृत्वलोकान्तरसञ्चारक्षमत्वानि अद्रष्टारः दर्शितप्रकारतया अनिरूपयन्तः सन्तः संशयीरन् शङ्केरन्। तयोः सुस्निग्धहृदयत्वस्य बहुभ्यः श्रुतत्वात् वस्तुनो नेदमित्थं स्यादिति कथमिदं पृच्छेमेति बिभ्यत एव केवलं निर्णिनीषया पृच्छेयुरित्यर्थः। तस्य च उक्तरीत्या तन्द्भाक्यैरेव तेषां बन्धदशासिद्धत्वस्वाभाविकत्वाभ्यां द्वैविध्यस्य सुमहतया यथावत्

श्रीभाष्यश्रवणेनैव शङ्कानुदयः फलतीति शङ्काया अतिशैथिल्यं सिद्धमिति भावः ॥ १ ॥

अथैवं तेषां द्वैविध्यविमर्शाभावे तदधिकरणपूर्वपक्षसिद्धान्तयोः स्वरूपभेददौर्घट्यमिति बोधयितुं तयोः स्वरूपं एकया निबध्नाति—

तत्र स्वर्गादिवत् 'तत्क्रतु' नयविरहे ज्ञातृतादिस्मृताव-
प्यस्ताघत्वादिसिद्ध्या तनुसहजमियद् ध्येयमस्त्वित्यशङ्कि ।
ध्येयान्तर्भूतजीवाकृतिरपि नियता 'तत्क्रतु' न्यायतोऽतो
मुक्त्या रुद्धज्ञतादिस्मृतिपरिहरणं भाषितं निर्णये तु ॥ २ ॥

तत्रेति । उक्ताधिकरणे स्वर्गे साधु स्वर्ग्यं=स्वर्गसाधनं ज्योतिष्टोमादि, 'तत्र साधुः' इति यत् । तदादिः यस्य तत् । आदिना चतुर्मुखपदविद्यादि । 'तत्रेव' इति सप्तम्यन्तादिवार्थे वतिः । तत्क्रतुनयस्य ब्रह्मोपासनविषयस्य विरहे अलाभे सति ज्ञातृतादेः बन्धाकारस्य स्मृतावपि अनुसन्धानेऽपि अस्ताघत्वादेः मुक्तिसिद्धाकारस्य सिद्ध्या स्वर्गादिफलवत् प्राप्त्या तनुसहजं—शरीरसंबन्धसिद्धं इयत्—ज्ञातृत्वाद्येव ध्येयम्—उपास्यं अस्तु इत्यशङ्कि—समशायि, पूर्वपक्ष इति यावत् । निर्णये—सिद्धान्ते तु ध्येयान्तर्भूतस्य—उपास्यभूतपरब्रह्मप्रकारभूतस्य जीवस्य आकृतिः—स्वरूपमपि तत्क्रतुन्यायतः तत्क्रतुन्यायेन नियता व्यवस्थिता । प्राप्याकाराविरुद्धाकारतयैवोपास्येति उपास्याकारस्य प्राप्यवश्यम्भावलक्षणनियमविशिष्टेति यावत् । भवतीति शेषः । प्राप्तुर्जीवस्य



उपास्यत्वे सिद्धे तस्य ब्रह्मात्मकतया उपास्यब्रह्मकोटिनिक्षिप्तत्वात् तत्क्रतुन्यायो न निवर्तेतेति भावः । एतेन विग्रहविभूत्यादेः सर्वस्य ब्रह्मप्रकारतया उपास्यब्रह्मकोटिनिक्षिप्तत्वात् यथावस्थिततत्तद्विशिष्टस्यैव उपास्यत्वापत्तिरिति निरस्तम् । उपासनविध्युपात्तानामेव गुणादीनामुपास्यत्वलाभात् । अन्यथा अशक्यविषयतया शास्त्रस्याननुष्ठापकतया अप्रामाण्यं स्यात् । तदेतदुत्तरत्र "यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया तथा आत्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषया" इति ग्रन्थेन विशदीकृतम् । तेन हि ब्रह्मोपासनं विधिसिद्धं, तत्र स्वाभाविकस्वरूपेणोपासनं कार्यमिति स्पष्टं लभ्यते इति बोध्यम् । अतः—तत्क्रतुनयावश्यम्भावाद्धेतो मुक्त्या मोक्षदशया रुद्धं विरुद्धं यत् ज्ञतादि उक्ताशुद्धज्ञातृत्वादि तस्य स्मृतेरनुसन्धानस्य परिहरणं निरासः भाषितम् । "तस्मात् प्रत्याकार एवानुसन्धेयः" इति वाक्येन एवकारप्रतिपन्नव्यवच्छेदमुखेन बोधितं, न तु तत्समुच्चयेन अपहतपाप्मत्वादेरनुसन्धानं भाषितम्, येन तत्क्रतुन्यायस्यान्ययोगव्यवच्छेदपरत्वालाभोऽनेन भाष्येण शङ्क्येतेति भावः ॥ २ ॥

अथ उक्तभाष्यस्यैवकारलब्धव्यवच्छेदः सूत्राक्षरार्थतया नान्यथा नेतुं शक्य इति बोधयितुं एकया उक्तार्थदार्ढ्यसिद्धिमाह—

बन्धाकारातिरेको मतिविषयतयाऽभावि सूत्रे स्वशब्दात्
शुद्धे ब्रह्मोपलब्धौ स खलु विषय इत्यूर्ध्वभाष्येऽपि तस्य ।
दार्ढ्योक्त्या मुक्त्ययुक्ताकृतिमननमिति सिद्धमर्थ्यं शरीरे-
भावन्यायस्य सिद्धं न तु कथितनयानन्ययोगार्थलेशः ॥ ३

बन्धाकारेति । बन्धाकारात् संसारदशासिद्धकरणायत्तज्ञातृत्वादिकात् अतिरेको वैलक्षण्यं सूत्रे 'व्यतिरेकस्तद्भावभावित्वात्' इति सूत्रे स्वशब्दात् उक्तवैलक्षण्यवाचकव्यतिरेकशब्दात्, समुपादायेति ल्यब्लोपे कर्मणि पञ्चमी । मतिविषयतया ध्यानविषयत्वेन अभाषि । "अस्यात्मनः संसारदशाया मोक्षदशायां यो व्यतिरेकः सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः" इति ग्रन्थेन व्यतिरेकशब्दव्याख्यामुखेन प्रत्यपादीत्यर्थः । ऊर्ध्वभागेऽपि ब्रह्मोपलब्धौ ब्रह्मोपासने शुद्धः यथाऽवस्थितः सः आकारो विषयः खलु तद्वत् आत्मोपलब्धिरपीति निर्णीयते । दार्ढ्योक्त्या सदृष्टान्तमुक्तार्थस्थिरीकरणोक्त्या शरीरेभावन्यायस्य शरीरेभावाधिकरणस्य मुक्त्या अयुक्ता असङ्गता आकृतिः अशुद्धाकारः तस्या मननस्यानुसन्धानस्य निरासः निषेधः तस्मिन् ऐदम्पर्यम् इदंपरत्वं शुद्धाकारैकमननविधिपरत्वमित्यर्थः । सिद्धं निष्पन्नम् । कथितनयस्य उक्ततत्क्रतुन्यायस्य । अन्ययोगस्याभावोऽनन्ययोगम् । अर्थाभावेऽव्ययीभावः । सोऽर्थः फलं यस्य तद्भावः आनन्ययोगार्थ्यम् । तस्य लेशस्तु न, नास्त्येवेति भावः । स्वाभाविकज्ञातृत्वादेः प्रकृताधिकरणपूर्वपक्षविषयत्वे तत्क्रतुन्यायान्ययोगव्यवच्छेदपरत्वे च अपहतपाप्मत्वाद्युपासनविधिलब्धान्ययोगव्यवच्छेदेन ज्ञातृत्वादिव्यवच्छेदलाभापत्त्या मुक्तेः पाषाणकल्पत्ववादप्रवेशप्रसङ्गो दुर्वारः । प्राप्तविषयसत्यसङ्कल्पत्वपरश्रुतिविरोधश्चेत्यपि बोध्यम् ॥ ३ ॥



अथैवं तत्क्रतुन्यायस्यायोगव्यवच्छेदपरत्वे शरीरेभावाधिकरणश्रीभाष्यविरोधशङ्काशैथिल्यमुपपाद्य, तस्य पराभिमतान्ययोगव्यवच्छेदपरत्वे सूत्रभाष्यादिविरोधरूपं बाधकमप्युपन्यसितुं निरालम्बेदृशशङ्कानिरासे क्लेशातिशयवैफल्यकृतानादरातिशयेन संक्षेपेण तमनुवदति—

यच्चान्यद्वाच्यमत्र प्रकृतनयगिरोऽनन्ययोगार्थतायां
भोगेसाम्याविशिष्ट्यप्रमुखविहननात् सूत्रभाष्यादिहानम् ।
तच्चातीवोपयुक्तं प्रशिथिलविशयोल्लुञ्चनायासभूम्ना
लब्धार्थक्लेशभूमा हसनपदमिवाखुग्रहो ह्यद्रिखानात् ॥ ४ ॥

यच्चान्यदिति । अत्र उक्तभाष्यविरोधगन्धाभावेन तस्यायोगव्यवच्छेदपरत्वे सिद्धे सतीत्यर्थः । प्रकृतनयगिरः प्रस्तुततत्क्रतुन्यायपरश्रुतिवाक्यस्य अनन्ययोगार्थतायां अन्ययोगाभावफलत्वे विषये = भोगेसाम्यं परब्रह्मयाथात्म्यानुभवरूपभोगे मुक्तस्य ब्रह्मसाम्यं, आविशिष्ट्यं फले अविशिष्टत्वं च 'विकल्पोऽविशिष्टफलत्वात्' इति सूत्रगृहीतं, ते उभे प्रमुखं येषां तेषां विहननात् हानेः । अत्र भोगे इति सप्तम्याः 'तत्पुरुषे कृति बहुलम्' इति बाहुलकादलुक् । साम्यादेः ससंबन्धिकतया सापेक्षत्वेऽपि समासोपपत्त्या भोग इत्युभयान्वयि, व्यस्तमिति वा बोध्यम् । साम्याविशिष्ट्ययोस्तु मुक्तगतत्वविद्यागतत्वाभ्यां भेदेन न पर्यायत्वमिति ध्येयम् । यत् सूत्रभाष्यादिहान 'भोगमात्रसाम्यलिङ्गाच्च'

इति, 'विकल्पोऽविशिष्टफलत्वात्' इति च सूत्रं तद्भाष्यं च; ते आदी येषां, तेषां हानं त्यागः, बाध इति यावत्। अत्रादिपदेन 'जगद्व्यापारवर्जम्' इत्यादिसूत्र-तद्भाष्यादि गृह्यते। वाच्यं— विप्रतिपत्तौ स्वानभिमतकोट्यन्तरबाधकोपन्यासस्य प्रसङ्गशैलीसिद्धतया यद्यपि वक्तव्यमेवेत्यर्थः। तच्च तत्तु; प्रशिथिलविशयस्य निर्मूल्यशङ्कायाः उल्लुञ्चनाय उन्मूलनाय च आयासभूमा तेन हेतुना तत्प्रसङ्गाद्धेतोरित्यर्थः। अतीव अत्यन्तं नोपयुक्तम्। तस्यान्ययोगव्यवच्छेदफलत्वे भोगसाम्यस्य ब्रह्मयाथात्म्यानुभवसाम्यरूपतया भाषितत्वात् श्रुतिप्रतिपन्नगुणादिषु कतिपययाथात्म्यरूपतायाः विद्याभेदेन दुर्वचतया स्थितस्य याथात्म्यस्य प्रकाशविरोधिनिखिलकर्मक्षयेणाप्रकाशवादस्याशक्यतया च उक्तसूत्रभाष्यविरोधः स्पष्टः। एवं 'विकल्पोऽविशिष्ट-' इति सूत्रभाष्ययोरपि एकस्मिन् पुरुषे फलभेदाभावेन विद्यानां स्वर्गाद्यर्थकर्मन्यायेन समुच्चयापत्त्यभावेन विकल्प एवेति नियमपरत्वात् तद्विद्याप्रतिनियतगुणभेदानामन्यव्यवच्छेदार्थत्वे तत्तल्लाभकामनायां विद्यान्तरसमुच्चयस्यावारणीयतया विकल्पनियमासिद्ध्या तद्विरोधश्च स्पष्टः। एवं 'जगद्व्यापारवर्जा'धिकरणाक्षेपानुत्थानादिकमूह्यम्। परमसाम्याद्यनुपपत्त्या हि मुक्तस्य जगद्व्यापारः शङ्कितः। तस्य उपास्यकोट्यनन्तर्भावेणैव प्राप्त्यभावात् तावतैव परमसाम्यादिसिद्धेश्च मुक्तस्य जगन्नियन्तृत्वादेरप्रसङ्गात्। न च सत्यसङ्कल्पत्वस्य उपास्यकोटिनिविष्टतया तद्विशेषभूतजगद्व्यापारस्यापि तत्कोटिप्रवेशान्न विरोध इति



वाच्यम्। भगवद्गतस्य जगद्व्यापारस्य 'न तस्येशे कश्चन' इत्यादिभिरनन्याधीनत्वलाभेन सत्यसङ्कल्पत्वविशेषरूपेऽपि जीवगतस्य तस्य भगवदधीनत्वेन कर्मणा तिरोधानार्हतया च जगद्व्यापारपर्यवसायित्वाभावात् तस्य तद्विशेषरूपत्वासिद्धेः उपास्यत्ववादासम्भवात् विशेषाकारेणानुपास्यत्वतादवस्थ्येन तत्प्राप्त्यप्रसङ्गाच्च। अन्यथा विशेषाकारानपेक्षायां अपहतपाप्मत्वादिषु प्रथमग्रहणेन सिद्धौ इतरेषां ग्रहणवैयर्थ्यापत्तेः। न च तस्य जगद्व्यापारस्य प्रकरणादिना भगवदसाधारणत्वकथनेन जीवासाधारणतया उपासनविध्यभावादेव मुक्तस्य तदभाव इत्येव तदधिकरणसिद्धान्ताशय इति शक्यं वक्तुम्। अनुशासनादित्येव सूत्रयितव्ये, बहुसूत्रप्रणयनवैयर्थ्यापत्तेरिति दिक्। एवमस्य तत्क्रतुनयस्य दुराग्रहान्ययोगव्यवच्छेदपरत्वनिरासाय एतावदुपन्यासस्यैव मन्दप्रयोजनत्वेन इतोऽपि विस्तरापेक्षा हास्यैवेति सदृष्टान्तमाह— लब्धेति। अल्पफलेत्यर्थः। अद्रेः खानः अवदारणं, 'खनो घ च' इति चाद्घञ्। आखाग्रहः ग्रहणम्, 'ग्रहवृदृनिश्चिगमश्च' इति ग्रहेर्भावे अप्प्रत्ययः। अद्रिखानादाखुग्रह इव हसनपदं हीत्यन्वयः॥ ४॥

एवं प्रकृताधिकरणसिद्धार्थस्य उपासनोपयोगित्वभाषणेऽपि प्रपदनाधिकारिष्वप्यात्मयाथात्म्यानुभवरूपफलानुसन्धानस्य फलापेक्षाहेतुत्वात् मुमुक्षुत्वरूपाधिकारसिद्ध्यर्थतया स्वाभाविकज्ञातृत्वादेरेवाहम्पदमुख्यार्थतया च प्रणवादिना प्रत्यगात्मानुसन्धानस्य यथावस्थितप्रकारत्वनियमपराणां प्रकृताधिकरणसिद्धान्तसूत्र-तद्भाष्य—श्रीरहस्य-

श्रयसारश्रीसूक्तीनां आत्मसत्तालाभापादकतया मूलमन्त्रवत् धारकत्वादसकृदनुसन्धेयत्वेन तदौपयिकं तासां प्रेरकत्वातिशयं 'निधिगर्भितक्षेत्र'न्यायेन भोग्यवस्तुसम्बन्धायत्तं प्रार्थ्यते—

शेषतैकरसशुद्धचिदाकृत्यात्मलाभजननैकसमुत्काः ।
व्यासलक्ष्मणमुनीन्द्रगिरो मे हृद्यतां दधतु देशिकसूक्त्या ॥

शेषतैकरसेति । परशेषतैकरसेत्यर्थः । शुद्धेति । स्वाभाविकेत्यर्थः । चिदाकृतिः प्रत्यगात्मस्वरूपं, तेन च आत्मलाभः तज्ज्ञानेन सत्तालाभः तज्जनने एकस्मिन् समुत्काः तत्पराः व्यासलक्ष्मणमुनीन्द्रयोर्गिरः प्रकृतसूत्र-तद्भाष्यरूपाः देशिकसूक्त्या—दर्शितमूलमन्त्राधिकारश्रीसूक्त्या तदेककण्ठया सह हृद्यतां हृदयप्रियतां दधतु इत्यर्थः ॥ ५ ॥

इत्थमेतदधिकरणसिद्धान्तस्थित्या निर्विशेषचिन्मात्रात्मवादागन्तुकचैतन्यगुणयोगिपाषाणकल्पजीववादादिकं सर्वं सुनिरस्तं भवतीति कुदृष्टिजयोऽप्यत्र फलतीति परपरिभवसमयविशेषलाभसम्भवहर्षप्रकर्षेण तत्परिवाहजयघोषं दर्शयितुं हनुमद्दर्शितजेतृतत्सहायतत्परिकरविषय—

'जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेनाभिपालितः ॥'

इत्युक्तजयघोषन्यायेन श्रीभगवद्रामानुजदर्शनस्य सपरिकरस्य तन्निबध्नाति—



'जयति यतिराजसूक्तिर्जयति निगमशिरस्सूरिदिव्यगीर्जयति
तदुभयहृदयाभिज्ञाः सार्थकजनुषो जयन्ति भुवि सन्तः ॥'

जयतीति । अत्र बन्धदशाकारातिरेकभूतापहतपाप्मत्वादेः जीवयाथात्म्यरूपतया उपास्यत्वस्थापनेन प्रणवघटकमकारस्य परिशुद्धज्ञातृत्वविशिष्टजीवपरत्वलाभेन 'ज्ञोऽत एव' इत्यधिकरणसिद्धान्तार्थप्रत्यभिज्ञापनात् ज्ञानमात्रस्वरूपात्मवादपाषाणकल्पात्मवादयोरपाकरणस्य फलितत्वात् कुदृष्टिजयसिद्धिः स्पष्टैवेति सिद्धम् ॥ ६ ॥

इत्थं स्निग्धमनस्कयोर्यतिवरश्रीवेदचूडार्ययोः
प्रेक्षालेशवशेन निस्समगिरोरीषन्मनीषाजुषा ।
श्रीरामानुजपादुकात्मकुटीलाभोज्झिते द्रश्रिया
गोपालाह्वयिना व्यतानि विदुषा तारार्थसारप्रभा ॥

शारीरकाब्धिरत्नाय शरीरे भावनीतये ।
शरीरभारलिप्सूनां शरणायास्तु मङ्गलम् ॥
श्रीशठारिशठारातिलक्ष्मणाख्ययतीन्द्रयोः ।
पादाब्जभृङ्गदासेन नृहरिः स्वमुदेऽतनोत् ॥

श्रीमते श्रीनिगमान्तमहागुरवे नमः ।

॥ तारार्थसारः सम्पूर्णः ॥

॥ हरिः ओम् ॥

श्रीवीरराघवशठकोपयतीन्द्रविरचितः

# स्थूणालिङ्गविनिर्णयः ।

रामानुजपदस्थूणानिखातविजयध्वजम् ।
प्रणम्य निगमान्तार्यं स्थूणालिङ्गं विनिर्णये ॥ १ ॥

स्थूणोर्णे पुंसि न स्तस्तदितरविधिकृल्लिङ्गशिष्टिप्रसक्त्याद्
वृत्तौ द्वन्द्वादिकार्यां परवदनुविधेस्ते भवेतां तथात्र ।
क्लीबे एव स्त एते गृहशशपरगे तद्व्यवस्थाविधानात्
तत्रान्तेयासमर्थः पदविधिरिति या नीतिरेषा समर्थैः ॥ १ ॥

इत्थं चाम्नायचूडागुरुकृतदशदिव्यावतारस्तुतिस्थ-
स्थूणाशब्दो गृहस्थोऽप्यसुरकलनया भिन्नवृत्तोत्तरोऽभूत् ।
तस्माल्लिङ्गव्यवस्थाविधिरिह न भवेत् किन्तु वाक्योपमं स्याद्
निर्बाधं लिङ्गयुग्मं स्तुतिगतपदगं सुष्ठु च स्त्रीत्वलिङ्गम् ॥ २ ॥

यद्यत्र स्यान्न नीतिः पदविधिविषया तर्हि वाक्येऽपि मा स्याद्
स्याच्चानिष्टोऽत्र काञ्च्यां पुरि वसति गृहस्थूणया शोभमाने ।
साक्षात् तत्त्वाग्रहेऽपि स्वत इह पदयोर्हेतुभावोपदेशाद्
उक्तक्लीबव्यवस्थाविधिरपि पदविध्यन्तरं सिद्धमर्थात् ॥ ३ ॥

यद्यप्युक्तप्रयोगे नियमविधिरयं नेति शक्यं हि वक्तुं
प्रत्यासत्त्या व्यपेक्षाविषयसमुदयापेक्षतापक्षसिद्धेः ।
तर्ह्यप्यत्रैव सा स्यात् प्रकटयति गृहे स्थूणया स्वं निलीनं
तन्वीत्येषा समासे स्वपृथगभिधया दुर्लभा निर्व्यपेक्षे ॥ ४ ॥



इष्टापत्तिस्तु नार्हा प्रथनकृतमतेर्व्याप्तिनीतेश्च भङ्गात्
सप्तम्यन्तत्वमात्रे गृहशशपदयोः स्थूणमूर्णं परं स्यात् ।
वृत्तौ तस्याः प्रवृत्ता त्वखिलवचनगाऽनन्तरत्वस्य लाभाद्
एकं लक्ष्यं हि योगं सफलयति गुरुं नेति नीतेर्न बाधः ॥ ५ ॥

यद्यप्युक्तं नवीनैः पदपदघरणं यत्र शास्त्रेऽत्र सैषा
नीतिः नान्यत्र वृत्ताङ्गुलिपरषविधौ हेतुतोक्तेः समासे ।
इत्थं चात्रोक्तनीतिः कथमपि न भवेत् तर्ह्यपि क्लीबशिष्टेः
षत्वावैशिष्ट्यलाभः परपदनुविधेस्तुल्यदेशत्वसिद्धेः ॥ ६ ॥

स्यादेतत् प्राक् प्रसक्तं नियमविधिरसौ लिङ्गयुग्मं निरस्येद्
नो पश्चाद् द्वन्द्वसंज्ञाद्युपधिकपरवल्लिङ्गभावातिदेशम् ।
तस्मात् तेनैकदेश्यं कथमिह घटते यौगपद्यासिद्धीनो-
ऽप्याप्स्यद्धेतोरपोधो निरवसरविधेरिड्विधेयद्वदानङ् ॥ ७ ॥

मैवं स्थूणादिशब्दे गृहशशपरता द्राक् स्फुरन्ती समस्ते
व्याप्तिन्यायाच्च वाक्ये क झटिति मतिगा साऽन्तवद्भावसाध्या ।
तस्मात् क्लीबव्यवस्थायुगपदुपनतं लिङ्गयुग्मातिदेशं
बाधित्वा लम्भितार्था न पुनरपवदेत् प्राग्भवं लिङ्गयुग्मम् ॥८॥

एवं चोत्सर्गदेशापवदनपरा हीति नीत्या व्यवस्था
सूत्रं लिङ्गातिदेशापवदननिपुणं स्याद्धि तत्तुल्यदेशम् ।
स स्याल्लुम्पद्विवादं पदविधिनयभाग्द्वन्द्वसंज्ञाद्यपेक्षः
सैषाऽपीदृक्षवृत्तिश्रितपदविषयाऽऽसीदिति न्यायसिद्धम् ॥ ९ ॥

यद्यत्र स्थूणया प्राग् गृहपदघटना स्यात् तदा क्लीबतैव
प्रागत्र स्वामिशब्दाम्बरपदघटितं प्राक्पुरं स्थूणयोगि ।
पश्चात् स्वाम्यन्वये तु प्रकृतगृहपदार्थान्वयः पाष्ठिकः स्यात्
स्थूणे साक्षाच्च पत्युर्न स भवति ततः सुष्ठु नः सर्वसिद्धिः ॥१०॥

इत्थं श्रीमदहीन्द्रनामनगरीनीराजनज्योतिषः
त्र्य्यन्तार्यगुरोर्वचोमृतरसास्वादैकधन्यैर्बुधैः ।
पृष्टः श्रीयतिराजदृष्टिविषयो गोपालनामा सुधीः
त्र्य्यन्तार्यगुरोर्मुदे व्यतनुत स्थूणोर्णलिङ्गकमम् ॥ ११ ॥

तस्य त्र्य्यन्तसूरेरमितविभवभाग् उत्सवो मे हृदि स्याद्
यावद् देवाधिनाथे चरणनखरुचिस्पर्शनिर्वेशमीशे ।
एवं तत्सूक्तिसारस्वतझरतरणे संवदद्भिर्वदद्भिः
सम्मोदव्यावादी विजितदिविषदामोदवर्गापवर्गा ॥ १२ ॥

अहिपतिनगरीनिवासधन्यैः
विबुधवरै रचितादरं नियुक्तः ।
विकृतिशरदि सन्नभस्यमासे
व्यतनुत गोपसुधीः प्रयोगभूषाम् ॥ १३ ॥

विद्योदन्वद्वेदचूडार्यसूक्तिः
हृद्योदन्तश्रीशदिव्योद्भवाढ्या ।
सद्यो भातावद्यगन्धाद्यमृष्टा
विद्योतेत स्थूणखातध्वजेव ॥ १४ ॥



जयति निगमान्तसूरिर्जयति दशश्रीशदिव्यजन्मनुतिः ।
जयति रमानरमृगराडसुरगृहथूणयाऽऽसजननीकः ॥ १५ ॥

श्रीदेवनाथविभवसर्वनिर्वाहशालिने ।
श्रीवेङ्कटेशघण्टांशवेदान्तार्याय मङ्गलम् ॥ १६ ॥

॥ श्रीमते वेदान्तगुरवे नमः ॥

इति श्रीवीरराघवशठकोपयतीन्द्रविरचितः
स्थूणालिङ्गविनिर्णयः

---

श्री :

श्रीमते श्रीवण्शठकोप श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकाय नमः ।

श्रीशठारिशठारातिरामानुजपदाश्रयम् ।
ख्यातं श्रीवीररघ्वीशशठारिमुनिमाश्रये ॥

। हरिः ओम् ।

। श्रीमते वेदान्तदेशिकाय नमः ।

## श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकविरचितम्

# न्यायसिद्धाञ्जनकारिकाविमर्शनम् ।

श्रीनृसिंहपदत्राणसेवैककुतुकी गुरुः ।
शठारिर्लक्ष्मणार्यो मे यतिवर्यो लसेद् हृदि ॥ १ ॥

सिद्धाञ्जनं जनौघानां जनुषाऽन्धदृशां भृशम् ।
श्रीवेङ्कटेशघण्टांशं श्रुत्यन्तगुरुमाश्रये ॥ २ ॥

भक्तितुल्यं प्रपत्तेः यदुपायत्वं समीहितम् ।
न्यायसिद्धाञ्जनग्रन्थसूक्त्या तत् प्रतिहन्यते ॥ ३ ॥

सूक्तिर्हि केवलश्रीशहेतुत्वप्रत्ययात्मधीः ।
स्वहेतुत्वधियं रुन्धे सहकारिषु किं पुनः? ॥ ४ ॥

इत्येषाऽन्त्यस्मृतेस्तत्त्वं प्रतिरोद्धुं प्रवर्तिता ।
तया प्रपत्त्यहेतुत्वं सूक्तमेवेति तु स्फुटम् ॥ ५ ॥

इति केषांचिदापातप्रतिपत्तिं व्यपोहितुम् ।
न्यायसिद्धाञ्जनग्रन्थगन्धमाघ्रापये बुधैः ॥ ६ ॥



'हेतुर्वैधे विमर्शे भजनवद्'इति हि स्पष्टसूक्त्या प्रपत्तौ
हेतुत्वे तत्प्रयोगेऽनितरसहकरापेक्षहेतुत्वयोगे ।
सिद्धे निर्बाधमेधैः मिथ इह विहतिः शङ्किता केति चेन्न
स्वोपायत्वप्रतीतं न्यसनमुपरुणद्धीति सूक्तेः स्फुटत्वात् ॥ ७ ॥

मैवं तत्रोपरोधो न हि विधिगमितोपायताबुद्धिबाधः
किन्तु स्वाकिञ्चनत्वोपहततदितरोपायभेदप्रवृत्तेः ।
पापत्वप्रापणाय न्यसनमुपरुणद्ध्यात्मनः कर्तृबुद्धिं
बुद्धेर्दौर्बल्यभाजामितरसहकरान्वेषसम्भावनोक्तेः ॥ ८ ॥

इत्थं चात्र स्वशब्दः परिमृशति पराधीनकर्तृप्रपन्नं
स्वाधीनश्रीशसाम्यासहमवधरणं तुल्यमेवोपरुन्ध्यात् ।
वैधी न्यासात्मधीस्तु स्वयतनविरतिप्रापिकेत्यब्रुवन् यत्
तद्रूपस्वोपरोधं वदति रुचिरयं धीर्हि सङ्कल्पगर्भा ॥ ९ ॥

हेतुं स्वान्यानपेक्षं विभुमिह वरये नान्यमिच्छामि हेतुं
न्यस्याम्यस्मिन् स्वभारं त्विति मतिरुपरि स्वोपरुद्धप्रवृत्तेः ।
पापत्वं प्रापयन्ती विहितविहतितो दत्तचौर्यादिवच्च
ज्ञातारं वारयन्ती चरममतिपरं किं स्वयत्नं न रुन्ध्यात्? ॥ १० ॥

एवंभावं हि सिद्धाञ्जनकृतिशकलं केवलोक्तिप्रधानं
न स्वस्योपायभावः स्वयमपवदितुं शक्यते न्यासबुद्ध्या ।
स्वानुष्ठानोपरोधात् स्वविधिपरवचस्स्तोममानत्वबाधात
नाहेतुः सत्त्वकार्यस्त्विति न नयविदां सन्निधौ वक्तुमर्हम् ॥ ११

यद्यप्याचार्यपादैः समकथि चरमश्लोकटीकाप्रघट्टे
तत्रत्यैकोक्तिगम्यं भगवदुपमया न्यासहेतुत्ववादः ।
ह्रासार्हो हीत्यथापि प्रतिहतिविधुरं व्याजमात्रत्वमत्र
स्वैरेव स्पष्टमुक्तं तत इह फलितो भक्तिसाम्यानपायः ॥ १२ ॥

अस्मिन् पक्षे त्विहस्यं स्वपदमुपमृशेत् न्यासमेवेति वादे
ऽप्यस्यैव व्याजभावे फलति सहकरेष्वन्त्यबुद्ध्यादिकेषु ।
यत्नापेक्षा कथं स्याद् न्यसनमयमतैर्नैरपेक्ष्यग्रहत्वाद्
इत्थं कैमुत्यनीतिः फलति रुधिरयं यत्नमात्रं हि रुन्धे ॥ १३ ॥

एवञ्चात्र प्रपत्तिः फलसमकरणं नापि तु व्याज इत्थं
श्रीशैकोपायमत्या फलति न हि ततः स्वानपेक्षत्वसिद्धिः ।
किन्तु स्वान्यानपेक्षा तत इह बहुधा बाधरीतिर्हि बोध्या
शब्दव्युत्पत्तिसिद्धं यदकथि विबुधैः बाध्यताद्येतदेवम् ॥ १४ ॥

अत्रेदं बोध्यम् आत्मा भगवदुपमया साधयेयं प्रपत्तिः
तद्वत् स्यात् मुक्तिसिद्धौ भजनमपि मया कार्यमिष्टस्य सिद्ध्यै ।
तस्याङ्गं वाऽऽश्रमाद्यौपयिकसुचरितं कार्यमिष्टान्तरार्थं
ज्योतिष्टोमाद्यशक्तौ प्रभुरिह फलदो नेति बाध्या धियः स्युः॥१५॥

एवं स्युर्बाधिका अप्यवधृतिफलिता श्रीश एवात्र हेतुः
स्यान्नाहं तत्समः स्वां स्वकृतिमपि वहेन्न्यासमात्रात् स एव ।
भक्त्या साध्यं विनैनां विभुरिह जनयेत् वर्णधर्मैः तथाऽङ्गैः
त्यक्तापेक्षः स एवाखिलफलजननेऽन्यानपेक्षः स हेतुः ॥ १६ ॥



एवं बाधप्रकारान् विमृशति चरमश्लोकटीकोपदिष्टान्
प्राज्ञे ह्यापातबुद्धिः कथमपि न लगेत् सद्मनि स्वैरिणीव ।
तस्मादाचार्यवीक्षावशसमधिगतं तन्निबन्धार्थमेतं
दासोऽलेखीदिहेति स्खलनपि बुधाः क्षन्तुमर्हा महार्हाः ॥१७॥

इत्थं भूतपुरीन्द्रलक्ष्मणमुनेर्वीक्षैकधन्यात्मना
गोपालाभिधसूरिणा गुरुकृते श्रीन्यायसिद्धाञ्जने ।
श्रीसूक्तेः शकलेन शङ्कितभरन्यासानुपायत्वधी-
र्व्याख्याता शठकोपलक्ष्मणमुनेः दृष्ट्योल्लसद्धीजुषा ॥ १८ ॥

न्यायसिद्धाञ्जनग्रन्थगन्धप्रापणकर्मणा ।
निजेनानेन नृहरिः श्रीमान् मे प्रीयतां प्रभुः ॥ १९ ॥

इति श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैः (पूर्वाश्रमे
'पिळ्ळैपाक्कम् इळैयविल्लि गोपालाचार्याः' इति प्रसिद्धैः)

विरचितं न्यायसिद्धाञ्जनकारिकाविमर्शनं समाप्तम् ।

---

श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैः (पूर्वाश्रमे 'पिळ्ळैपाक्कम् वालधन्वि गोपालाचार्याः' इति प्रसिद्धैः) अनुगृहीतः

## आदेशमणिः सव्याख्यः

वन्दे विज्ञानदानोत्कां विज्ञानघनदेवताम् ।
हयास्यां दयया यस्यास्तुषोऽपि धिषणायते ॥ १ ॥

कैश्चित् चम्पकारण्यवासिभिः भारद्वाजैः रङ्गाचार्यनामभिः छान्दोग्यस्थादेशशब्दमधिकृत्य रचित - आदेशकौमुद्याख्यनिबन्धविपुलविचारोद्धृतसारभूततत्पदव्युत्पत्तिप्रकाराणां पूर्वाचार्याभिमततन्निरसनप्रकाराणां च सङ्गृह्य बोधनाय गोपालनामा कश्चित् चिकीर्षितस्य आदेशशब्दमण्याख्यस्रग्धरावृत्तात्मकग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थं कविताकौशललाभार्थं च वागीशभूतपरदेवतानमस्काररूपं मङ्गलमाचरन् प्रचितप्रचारादिसिद्ध्यर्थं तद् ग्रन्थतो निबध्नाति—

वन्दे इति । स्पष्टम् ॥ १ ॥

अथ तदीयकरुणाधीनवाग्लाभफलोपधाननिदर्शनभूतां गुरुपरम्परां नमति—

तदीयचरणाम्भोजमाध्वीरसलसद्गिरम् ।
वदावदगजारिं तं वन्दे वेदान्तदेशिकम् ॥ २ ॥

अथ स्वस्य हरिभजनसमुत्कण्ठादिगुणसम्बन्धनिदानभूतमहागुरुं भवशतसञ्चितनिखिलकलुषनिश्शेषशोषणक्षमस्य कैमुतिकसिद्धविघ्नशमन-



पटिम्नः श्रीरामभद्रभजनस्य तन्त्रलाभाय भजति—

वीरराघवपादाब्जयुगलीमनिशं भजे ।
यदधीना हि मे सत्तास्थित्याद्या भवमोक्षयोः ॥ ३ ॥

अथ निखिलदुरितप्रशमनिपुणनिष्कृतिनिचयशिरोमणितया विहितकृष्णानुस्मरणतन्त्रलाभाय स्वस्य शब्दविद्याध्ययनापादानभूतं गुरुं स्मरन् चिकीर्षितं प्रतिजानीते—

श्रीकृष्णविबुधेशानचरणाब्जयुगं स्मरन् ।
गोपालशाब्दिकमणिः करोत्यादेशवाङ्मणिम् ॥ ४ ॥

श्रीकृष्णेति । विबुधेशानेति । विद्वदीश्वरेत्यर्थः । गुरुविशेषस्य तन्त्रचतुष्टयाकूपारपारीणत्वात् विद्वदीश्वरत्वं प्रसिद्धमिति भावः । ब्रह्मरुद्रादीनां विबुधानामीश इत्यप्यर्थः । तस्य तत्त्वं "तमीश्वराणां परमं महेश्वरम्" इत्यादिश्रुतिसिद्धमिति भावः ॥ ५ ॥

अथ स्वस्य एतद्ग्रन्थप्रवृत्तिप्रयोजनस्फुटकथनपूर्वकमनुबन्धिचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गं स्रग्धरया बोधयति—

सद्विद्या ब्रह्मविद्यावलिपरिगणिता पूर्णतात्पर्यलिङ्गा
तत्रत्यादेशशब्दो यदि विमतमतच्छायमेवान्वरोत्स्यत् ।
नासेत्स्यत् तर्हि सम्यङ्निपुणमतमतस्तस्य सिद्ध्यै यतेऽहं
यद्यप्याचार्यपादैरकथि तदपि तच्छङ्क्यते कैश्चिदेवम् ॥५

**सदिति**। यद्यपि प्रतिज्ञया विषयो दर्शितः, सम्बन्धश्चार्थः, तथाऽपि फलाधिकारिबोध एतच्छ्लोकाधीन इति भावः। **आदेश**शब्दस्य औपनिषदसत्यज्ञानादिशब्दतत्सामानाधिकरण्यादिविषयमतान्तरानुरोधि - शङ्कामपेक्ष्य अवश्यपरिहरणीयशङ्काबीजविषयमाह - **ब्रह्मविद्यावलीति**। **परिगणितेति** । तासु प्रथमगणितेत्यर्थः। शास्त्रारम्भे ईक्षत्यधिकरणविषयतया **सूत्रकृता** गृहीतत्वात्, "नाना शब्दादि-" इति सूत्रे **श्रीभाष्ये** तथा गणनाच्चेति भावः। तत्र युक्तिमप्याह—**पूर्णेति** । उपक्रमादिषड्विधतात्पर्यलिङ्गैर्निमित्तोपादानतया सर्वात्मभूतपरब्रह्मप्रतिपादनपरत्वस्य उपनिषन्मात्रसिद्धेरिति भावः। **तत्रत्येति**। तदुपक्रमछान्दोग्यस्थेत्यर्थः। **विमतमतेति**। आङ्पूर्वाद् दिशेः कर्मणि घञि उपदेशपरः स इति वादिनां मतेत्यर्थः। **अन्वरोत्स्यदिति**। करणघञन्तत्ववादिमते गौरवापत्त्या लाघवेन परमतमेवाश्रयितव्यं स्याच्चेदित्यर्थः। घञः करणे ल्युटा बाधात् प्राप्त्यभावात्, करणत्वस्य वैवक्षिकत्वाच्च तत्र गौरवं स्फुटमिति भावः। **निपुणमतमिति** । आपातधिया मुक्तगौरवशङ्कायामपि शब्दविद्यानिष्णातकरिष्यमाणविमर्शवतां लाघवं सुगमम्, विपरीतं तन्मत एव गौरवम्, प्रकृत्यर्थप्रशासनत्यागादिति वदतां मतमित्यर्थः। ब्रह्मनिर्विशेषत्वभ्रमनिरसनपूर्वं तत्सविशेषत्वनिर्णेतृत्वात् तेषां निपुणतेति बोध्यम्। ननु आचार्यैरेव "करणत्वस्य वैवक्षिकत्वं शाब्दिकाभीष्टम्" इति सिद्धान्तितया किमेतद्ग्रन्थप्रवृत्तिफलमिति आशङ्क्य परिहरति—**यद्यपीति** ।



**तदपीति**। तथाऽपीत्यर्थः। **शङ्क्यत इति** । तथा च तत्र सिद्धान्तितं शङ्कास्पदतया कर्मघञन्तत्ववादनिरसनक्षमं न स्यादिति शङ्क्यतेति भावः। एवञ्चाचार्यसिद्धान्तितकरणघञन्तत्वं परमतनिरसनक्षममेवेति निर्णयः एतद्ग्रन्थफलं, तदिच्छुश्चाधिकारीति फलितम् ॥ ५ ॥

अथ एवमुक्तकरणघञन्तत्वपराचार्यमतमेव सम्यगिति स्थापनाय, प्रकारान्तराणां कैश्चिदुपन्यस्तानां **गोमालायां** विस्तरेण निरस्तत्वेऽपि संक्षेपेण तन्निरसनप्रकारप्रदर्शनाय च अष्टत्रिंशता स्रग्धराभिस्तदनुवादनिरासरूपविचारात्मकं ग्रन्थमारभते—

**शास्त्यर्थादादिशेर्घञ् करण इति हि तैरुक्तमेवं सति स्यात्**
**शास्तौ कर्तृन्वबोधो न झटिति करणत्वस्य वैवक्षिकत्वात्।**
**तस्मात् कर्त्तर्यजेवास्त्वत इगुपधतालक्षणः कस्तु बाध्यः**
**पच्यादौ ज्ञापकादादिशिरुदित इति स्यादचाऽपोदित्वात् ॥६॥**

**शास्त्यर्थादिति**। करणघञन्तत्ववादे कर्तृबोधस्य विलम्बितत्वात् साक्षात्कर्तृत्वबोधाय पचाद्यजेव परमतनिरासाय स्वीकर्तुमुचित इति भावः। करणे घञो ल्युटि बाधशङ्कायां 'उपदेशेऽच्' इति सूत्रभाष्यानुज्ञातदिशिविषयल्युड्विकल्पाश्रयणेन वक्ष्यमाणेन परिहरिष्यमाणतया करणत्वस्य वैवक्षिकत्वाधीनकर्तृबोधविलम्बशङ्कैवावशिष्टेति सैवात्र निबद्धेति बोध्यम्। **कर्तर्यजेवेति**। पचादेराकृतिगणत्वात् तत्रादिशेः पाठकल्पनात् तत्प्राप्तिरिति भावः। **बाध्य इति**। अस्य स्यादित्यनेन सम्बन्धः। ननु पचादेराकृतिगणेऽपि प्रयोगबलेन

कल्प्यपाठस्य दिशेः क्लृप्तकप्रत्यय एवाचं बाधित्वा भवितुमर्हति "क्लृप्तकल्प्ययोः क्लृप्तेन कल्प्यस्य बाधः" इति न्यायादिति शङ्कायामाह—**पच्यादाविति**। पचिरादिर्यस्य तस्मिन् गण इत्यर्थः। **ज्ञापकादिति**। "आपं चैव हलन्तानां यथा वाचा निशा दिशा" इति श्लोके दिशाग्रहणात् परिगणनपूर्वादित्यर्थः। दिशेः पचादेराकृतिगणत्वमात्रान्नाचः प्राप्तिः कल्प्या। किन्तु तत्र विशिष्यैव स पठित इति ततोऽच् क्लृप्त एवेति कमेव स बाधत इति वक्तव्यम्; अन्यथा दिशेः कप्रत्यये अदन्तत्वात् लेभकात्(?)नित्यस्त्रीत्वाच्च टाप्सिद्धौ तद्वैयर्थ्यापत्तिरिति भावः। दिशेर्भिदादित्व (3-3-104) कल्पनया कर्मण्यङि टाप्सिद्धौ तद्वैयर्थ्यापत्तिरप्येवमेव वारणीयेति बोद्धव्यम्। एतेन "ऋत्विग्—" आदिसूत्रे कर्मणि क्विन्नन्ततया निपातितदिक्शब्दात् टाबन्तस्य कर्त्रर्थकप्रत्ययान्तशब्दसाधनेनान्यथासिद्धिकथनमसङ्गतम्; अवयवार्थविरोधात्—इत्यपास्तम्। **अचाऽपोदितत्वादिति**। दिशेर्विशिष्य अज्विधिना स्वविशेषविधिताप्रतिसम्बन्धिकृतत्वादित्यर्थः। बाध्य इत्यस्य 'तक्रकौण्डिन्य' न्यायेन सङ्कोचविशेषकल्पनाविषय इत्यर्थ इति न साध्याविशेषो हेतोरिति बोध्यम्॥ ६॥

उक्तशङ्कामेकया निरस्यति—

**मैवं स्याज्ज्ञापकं किं मतमिह यदिदं टाब्विधानं हलन्ताद्**
**नैतद् भाष्योदितं किं त्वतिकुपितमिदं ङ्याब्विवृत्यर्थभाष्यैः।**
**तत्र क्लुञ्चादितोऽजाद्यवयववचनं टाब्विधेर्यद्धलन्तात्**
**क्लुञ्चानित्यादिदृष्टेस्तदत इति हि टावित्यवार्यावसिद्ध्यै॥ ७॥**



**मैवमिति**। **ज्ञापकं किमिति**। क्षेपे किंशब्दः। तदेवोपपादयति—**यदिदमिति**। **भाष्योदितमिति**। "मणिवादीनां प्रतिषेधः" इत्यादेस्तदनुक्तत्वादेव हि "मणी वोष्ट्रस्य" इत्यादौ इवार्थे वशब्दाद्याश्रयणमिति भावः। न केवलं तदनुदितं, किन्तु तद्विरुद्धमपि इत्याह - **किं त्विति**। **ङ्याब्विवृत्यर्थेति**। 'ङ्याप्प्रातिपदिकात्' इति सूत्रविवरणपरभाष्यवाक्यैरित्यर्थः। तत्र किमुक्तम्? अत आह—**तत्रेति**। **अजाद्यवयवेति**। अजाद्यन्तर्गतवचनमित्यर्थः। "क्लुञ्चा उष्णिहा देवविशा" इति तत्र पाठादिति भावः। उक्तेभ्यस्त्रिभ्य एव हलन्तेभ्यष्टाबस्तीति वक्तव्यं; तत्र "क्लुञ्चानालभेत" "उष्णिहककुभौ" "देवविशम्" इति प्रयोगादेषामजन्तकान्तानामावश्यकत्वाददन्तादेव टापि तदेकादेशे पूर्वान्तवत्त्वेन प्रातिपदिकत्वात् सिद्धौ आब्ग्रहणं बहुराजेति डाबन्तार्थम्, इत्यर्थपरतद्भाष्यात् हलन्तमात्रात् टाबन्ताव-बोधनादिति भावः। **अवारि आबसिद्ध्यै** इति च्छेदः। हलन्तात् आपोऽसिद्धिं वक्तुं क्रुञ्चादितष्टाब्वचनं **अवारि** - निरासीत्यर्थः। एवञ्च, एतद्वचनसत्त्वेऽपि तन्निरसनीयमेव स्यादिति भावः। वाचेत्यस्याभावेऽपि दिशादेः कान्तात् टाबसाधने तत्तात्पर्यमितीत्येव कल्प्यमिति बोध्यम्। तद्वचनाभावादेव वाचाशब्दाभावः, अन्यथा "वाचो ग्मिनिः" इत्यनेन "लिङ्गविशिष्ट" परिभाषया ग्मिन्नापत्तौ वाचाग्मीत्यनिष्टापत्तेरिति **गोमालायां** विस्तरः॥ ७॥

नन्वेवं ज्ञापकासम्भवेऽपि पचादेराकृतिगणत्वादेव पच्प्रकारधातुमात्राद् विहितोऽच् कथं दिशेर्न स्यादिति; आह—

तत् स्यात् पच्यादिरस्याकृतिगण इति हि स्मर्यते यङ्लुगुक्ते-
र्निर्देशात् कर्मसूत्रे घट इति च दिशेरस्त्यपाठेऽप्यजाप्तिः ।
एवं स्याच्चेत् पचादौ कतिचन पठिताः सन्ति किं नैवमेतद्
बाधार्थाः केचिदत्र स्युरिह कतिचन स्युः प्रपञ्चार्थमेव ॥८॥

तत्स्यादिति । पचादेराकृतिगणत्वे मानमाह—यङ्लुगुक्तेरिति । 'यङश्च' इति सिद्धे "अचि" इत्युक्तेरित्यर्थः । तद्ज्ञापकात् 'पचादि' इत्यादिशब्दस्य प्रकारपरत्वकल्पनात्, प्रकारस्य च धातुत्वादिनाऽऽश्रयणाच्च अविशेषात् सर्वधातोरजाप्तिरस्ति इति भावः । नन्वेवं तत्र गणे केषांचित् विशिष्य पाठः किमर्थं इति शङ्कते एवं स्याच्चेदिति । परिहरति—नैवं इति । बाधार्था इति । बाधकघात्वर्था (बाधकबाधनार्थाः?) इत्यर्थः । केचिदत्रेति । देवडादयः अनुबन्धासङ्गार्था इत्यपि बोध्यम् । वच-वपादयस्तु किमर्था इत्यत आह-कतिचनेति । प्रपञ्चार्थमेवेति । देवडादीनां इगुपधकप्राप्त्या तद्-बाधार्थत्वसम्भवेऽपि पचादीनां तत्प्राप्त्या तृजादीनां च इष्टत्वात् बाधायोगेन प्रपञ्चार्थत्वमेव वक्तव्यमिति भावः । एतच्च सिद्धान्त-कौमुद्यामेव स्पष्टम् ॥

एवं तर्हि अजपवादत्वं कप्रत्ययस्य दुर्वारमित्याह—

मैवं कप्रत्ययोऽचं त्वपवदति विशिष्योदितः पाठतश्चेत्
केषाञ्चित् सर्वतो नाजिति तदविषये सावकाशा कशास्तिः ।
तस्याप्यस्यां परत्वाद् दुरनुसरमचः प्रापयेत् कोऽन्य इष्टेः
भाष्योक्तायाः तदेवं गतिविरह इयं रीतिराचार्यलब्धा ॥९



मैवमिति । विशिष्योदित इति । पचादित्वेनैव दिशेरच्प्राप्तेरुक्तत्वादिति भावः । विशिष्य दिशेः पाठस्तु कल्पकाभावान्निरस्तः । अतः सर्वथा दिशेः कप्रत्ययेन भाव्यमित्याशङ्का न कार्या । अत एव "उपदेशेऽच्" इति सूत्रस्थं करणघञन्तोपदेशशब्दसाधनपरभाष्यं सङ्गच्छते । अन्यथा, तत्र उपदेशनेऽजिति वार्तिकोक्तन्यासान्तरस्य करणत्वस्य कर्तृत्वेन विवक्षया काष्ठं पचतीत्यादिषु सर्वसम्मततया कर्तरि पचाद्यचा विद्धे (सिद्धे ?) लुड् (ल्युड् ?) विकल्पस्य बहुलग्रहणस्यास्य दिशि विषये प्रदर्शनबोधकघञाश्रयणासङ्गतिः स्पष्टैवेति योज्यम् । एतेन 'विदिशो व्यादिशः' इति श्रीभगवन्नामसहस्रप्रयोगः, तत्राङ्पूर्वादपि दिशेः इगुपधलक्षणकप्रत्ययपरतद्-भाष्यग्रन्थश्च व्याख्यातौ ।

यत्तु तत्र पचाद्यजविषयेऽपि कप्रत्ययविषयत्वमप्यविरुद्धम् । 'वर्षाभ्यष्ठक्' 'वृषादीनाञ्च' इत्युभयोः एकस्माद् धातोः निर्देशादिति - तन्न । 'भयादीनां च' इत्यजन्तवर्षशब्दात् अर्शआद्यचि तत्सत्त्वेन 'वर्षाभ्यः' इति निर्देशोपपत्तेः । अपवादकप्रत्ययविषये अजाश्रयणासम्भवात् वर्षाधिकरणकालविशेषस्य 'स्थाली पचति' इतिवत् कर्तृत्वविवक्षया पचाद्यच्कल्पनादपि 'तदस्यास्त्यस्मिन्निति' इति सप्तम्यर्थे विहितमत्वर्थीयकल्पनस्य लघुत्वाच्च । "आपश्चैव" इत्यत्र दिशाग्रहणस्य दिशेः कप्रत्ययाभावे ज्ञापकत्वपरस्वोक्तिविरोधाच्च ।

यदपि 'विदिशः' इति प्रयोगस्य विधातोः सम्पदादिक्विविधिपरं विशब्दमादाय वियङ् दिशतीति विदिश इति मूलविभुजादि-

त्वात् के 'इको ह्रस्व.' इति पूर्वपदह्रस्वत्वे तत्सिद्धिरिति समर्थनं कृतं—तदपि चिन्त्यम्। 'इको ह्रस्वः' इति पूर्वपदह्रस्वप्रतिपादनस्य 'इयङुवङ्भाविनां अव्ययानाञ्च न' इति तन्निषेधवचनास्मरणमूलकत्वेन विदिश इति रूपसिद्धेः उवङ्भाविविषयभ्रुकुंसादिपर्युदासप्रत्याशालेशाभावाच्च।

यदपि 'व्यादिशः' इत्यस्य व्यादिन्शब्दे विपूर्वाद्देर्णिन्यन्ते कर्मण्युपपदे श्यतेः'आतोऽनुपसर्गे' इति क इति समर्थितं – तदपि चिन्त्यम्। विदिश इति प्रक्रान्तदिशिधात्वभ्युपगमेन तन्निर्वाहसम्भवे तत्त्यागेन "एकस्या आकृतेः" इति न्यायविरोधात्, तद्भाष्योक्तार्थासिद्धेश्च॥

एवं दिश इत्यस्य दिक्शब्दादर्शआद्यचि दिशोऽस्याव्याहतस्वगतिविषयभूताः सन्तीति दिश इति सिद्धिः, इत्यपि चिन्त्यम्। दिशेः परिग्रहेऽपि कप्रत्ययास्वीकारेण उक्तन्यायविरोधविशेषात् कृदन्तनाम्नः "कृतं कुर्यान्न तद्धितम्" इति प्रशस्ततया तत्सम्भवे तद्धितान्तपरिग्रहानौचित्याच्च। यदि तु केषाञ्चित् वपादीनां पाठे प्रपञ्चार्थत्वमयुक्तम्; गणपाठवैयर्थ्यापत्तेः; तस्य तत्त्वे दृढमानाभावाच्च। तस्मात् अपठितेषु क्वचिदेव पचादित्वेन अच् प्रवर्त्तत इत्यर्थबोधनाय केषाञ्चित् पाठ इति वक्तव्यम्। तच्च प्रमितप्रयोगादौ गमके सत्येव। एवञ्च लिखबुधादौ तत्प्राप्तौ मानाभावेन तस्य तत्र चारितार्थादपवादत्वालाभ इत्युच्यते ?—तदाऽपि परत्वात् बाधकत्वं



तस्य सुगममित्याह—पाठश्चेदित्यादिना। कशास्तिरिति। कस्य शास्तिः=शासनं, विधानमित्यर्थः। 'वसेस्तिः' इत्यौणादिकतिप्रत्ययस्य बाहुलकाच्छासेरप्य(भ्यु)पगमाच्छास्तिरिति साधुः। तस्य नित्यस्त्रीत्वं च लोकादिति बोध्यम्। दुरनुसरमिति। अनुसर्त्तुम्=आश्रयितुमशक्यमित्यर्थः। कर्मणि खल्। ननु "विप्रतिषेध" सूत्रस्थपरशब्दस्य इष्टवरचित्त्वा (परकत्वा ?) श्रयणेन क्वचित् पूर्वविध्याश्रयणादजभ्युपगमः सुगम इत्यत आह—कोऽन्य इष्टेरिति। भाष्येष्टेरन्यः क उपायः पूर्वविप्रतिषेधाश्रयणेनाचं प्रापयेदित्यर्थः। प्रकृते च तदिष्टिर्नेति स्पष्टमेवेति भावः। अत्र पक्षे 'इगुपधात् कः' इत्यपवादसूत्रेणेति श्रुतप्रकाशिकास्थापवादशब्दो बाधकपरः। यत्त्वत्र केन पचाद्यचो बाधे 'व्याकोचविकचस्फुटा' इत्यत्र व्याकोचशब्दासिद्धिः-ज्वलादित्वात् णप्रत्ययस्तु न, तत्र 'अनुपसर्गात्' इत्यनुवृत्तेरिति—तत् चिन्त्यम्। 'कुच संकोचने' इति तौदादिकात् कुचेरचि कुटादित्वाद् अचो ङित्त्वेन गुणानापत्त्या ण्यन्तादपि तत्साधनावश्यकत्वात्। एतेन मोचाशब्दसाधनाय पचाद्यचः कप्रत्ययेनाबाधो वक्तव्यः—इत्यादि परास्तम्। "मुच प्रमोचने मोदने च" इति चौरादिकात् मोचयति मोदयति जनान् फलैरिति पचाद्यचि मोचासिद्धेः स्पष्टत्वात्। एवं 'गोधाया ढ्रक्' इति गोधाशब्दोऽपि। अत एव 'गोधाकालका' इत्यन्तोदात्तपाठः सङ्गच्छते। केवलाद् गुधेः 'अकर्त्तरि च' इति घञि संज्ञाशब्दविषयेण "घ्यपूर्वस्य स्त्रीविषयस्य" इत्यनेन अन्तोदात्तत्वमित्यन्ये। यत्त्वत्र न तत्प्रवृत्तिः, तदपवादस्य "स्त्रीविषयवर्णाक्षु

पूर्वाणाम्'' इत्यस्य "न क्रतुप्राण्याख्यायाम्'' इति निषेधादप्राप्त्या "उत्सर्गसमानदेशा अपवादाः'' इति न्यायविरोधादिति—तन्न। गोधादाचौ "द्व्यच्पूर्वस्य'' इत्यस्य चारितार्थ्यादपवादत्वग्राहकाभावेन तन्न्यायानवतारादित्यन्यत्र विस्तरः। एवञ्च कप्रत्ययेन पचाद्यचो बाधो न्याय्यो निर्दोषश्चेति करणे घञेव शरणमित्याचार्याशय इति निगमयति—तदेवमिति ॥ ४ ॥

अथेवं कप्रत्यये दुर्वारेऽप्याचार्योक्तस्य "क्ङिति च'' इति—निषेधाद् गुणभावस्य प्रकारान्तरेण सुपरिहरतया घञनुधावनं व्यर्थमित्याशङ्क्य परिहरति—

**नन्वेवं केऽपि छन्दस्युभयविधविधेः सार्वधातुक्यमस्ती-त्यस्मिन् हेतौ तुदादित्वकृतश इति तस्यार्धधातुक्यलाभात्।**
**ङित्त्वाभावे गुणे च श्रुतिगतपदरूपाप्तिरस्तीति चेन्न**
**क्लेशादेवं द्विसंज्ञीकृतविधिघटनेऽप्येतदप्राप्त्यलाभात् ॥ ५ ॥**

**नन्वेवमिति।** **केऽपि छन्दसीति।** संहिताया अविवक्षया न तुक् "छन्दस्युभयथा'' इति सूत्रेण छन्दसि उभयविधसंज्ञयोर्विधानादित्यर्थः। **सार्वधातुक्यमिति** ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। उत्तरत्र **आर्द्धधातुक्येऽप्येवम्।** **अस्मिन् हेताविति।** कप्रत्ययात्मके सार्वधातुके निमित्ते सतीत्यर्थः। **तुदादित्वेति।** तत्प्रयुक्तः 'तुदादिभ्यः शः' इति विहितः शविकरणोऽत्रास्त्वित्यर्थः। **ङित्त्वाभाव**



इति। शस्यार्द्धधातुकसंज्ञायां तत्र यथोद्देश्यत्वाश्रयणात् कार्यैकवाक्यत्वाभावेन अशास्त्रीयकार्येऽपि प्रवृत्त्या सार्वधातुकत्वप्रयुक्तङित्त्वबाधविषयेऽपि तस्याः प्रवृत्तिरिति भावः। **गुणे चेति।** उक्तरीत्या शस्याङित्त्वात् 'क्ङिति च' इति गुणनिषेधाभावाद् अणसिद्धिरिति भावः। इत्थं कप्रत्ययेऽपि रूपसिद्धिरिति शङ्कामनूद्य निरस्यति—**इति चेन्नेति।** **क्लेशादिति।** तत् 'छन्दस्युभयथा' इति अस्य पूर्वसूत्रसाहचर्यात् कृद्विषये फलाभावाच्च कृद्भिन्नविषयकस्य तेन सार्वधातुकत्वाश्रयणे क्लेशादित्यर्थः। अत एव 'तुमर्थे सेसेन्' इति सूत्रे मादयध्यै इत्याद्यर्थं कृतशध्यैग्रहणात् पृथक् 'जठरं पृणध्यै' इत्यादौ णिलोपाद्यर्थं अध्यैग्रहणं चरितार्थम्। अन्यथा 'पृणध्यै' इत्यत्रापि प्राप्तावपि उभयविधानात् आर्धधातुकत्वात् णिलोपादिसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। न च तथाऽपि तेनैवात्रापि सार्वधातुकत्वमेव स्यादिति शङ्क्यम्। अध्यैविधावपि तत्र शध्यैवारणाय छन्दसि दृष्टानुविधेरेवाश्रयणीयत्वात्। यत्तु 'स्वस्तये तार्क्ष्यम्' इत्यादौ क्तिनः 'छन्दस्युभयथा' इत्यनेन आर्धधातुकबाधकसार्वधातुकत्वात् अस्तेः भूभावो नेति **वृत्तिकृतोक्तम्**—तन्न। 'स्वस्ति'शब्दस्य लोकसाधारण्याय सुपूर्वात् 'अस गतिदीप्त्यादानेषु' इति भौवादिकादसतेराशिषि संज्ञायां क्तिचि स्वतात् = सुदीप्यतां इति स्वस्तिरित्यस्य सत्त्वात्। अत एव 'गतिकारकोपपदात्' इति कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तत्वसिद्धिः। अन्यथा 'स्फचः स्वस्तिः' 'विघनः स्वस्तिः' इत्यादौ अन्तोदात्तत्वपाठसाङ्गत्याय निरुदकादित्वं (६-२-१८४)

कल्प्यं स्यात् । न च तस्य आकृतिगणत्वं, मानाभावात् । न च क्विजन्तस्य स्वरादिपाठात् अव्ययत्वं, क्विबन्तस्य, तन्नेति, तदेव श्रुतौ प्रयुज्यते । न हि श्रुतावव्ययं दृश्यते ; नापि लोकेऽनव्ययमिति वाच्यम् । 'रयिं नशते स्वस्ति' इत्यादौ श्रुतावव्ययस्य, 'स्वस्तिर्भवतु मे नित्यं सुखं चानुत्तमं तथा' इति भविष्योत्तरप्रयोगेण लोकेऽनव्ययस्य च दर्शनात् । तस्मात् तस्य अव्ययत्वानव्ययत्वे लोकादेव स्त इति सर्वैर्वाच्यमिति बोध्यम् । द्वारादिषु स्वस्तिशब्दपाठात् वेदे पदकारैः वेष्टनाकरणाच्च अव्युत्पन्नमेव तदिति परे । एवं कृद्विषये 'छन्दस्युभयथा' इत्यस्य अप्रवृत्तिं प्रतिपाद्य, तत्र तत्स्वीकारेऽपि अनिमित्तशस्यार्धधातुकत्वं न स्यादेव । तत्प्रयुक्तशास्त्रीयकार्याभावात् । यथोद्देशपक्षेऽपि संज्ञायाः शास्त्रीयकार्यायैव प्रवृत्त्यौचित्यादित्याह— एवमिति । द्विसंज्ञीति । द्वयोः संज्ञयोः समाहारः इति द्विगुः, 'गोस्त्रियोः' इति ह्रस्वः । आबन्तो वेति पक्षे स्त्रीलिङ्गत्वे 'द्विगोः' इति ङीपि तत्तत्संज्ञाप्रयुक्तशास्त्रीयकार्यलाभेऽपि तद्बाधरूपाशास्त्रीयकार्यलाभादित्यर्थः ॥ ५ ॥

नन्वेवं संज्ञाद्वये यथोद्देशपक्षेऽप्येकया अपरसंज्ञाबाधानभ्युपगमे 'वृद्धि'संज्ञासूत्रे "उभयसंज्ञान्यपि च च्छन्दसि दृश्यन्ते । 'स सुष्टुभा गणेन' पदत्वात् कुत्वं, भत्वात् जश्त्वं न भवति" इति भाष्यस्य का गतिः ? इत्याशङ्क्य परिहरति—



नन्वेवं 'वृद्धिरादैच्' इति विवृतिपरे भाष्य उक्तो द्विसंज्ञां
जश्त्वाभावः कथं स्यान्मिळति पदतया भत्वऋक्वत्पदस्थः ।
मैवं तत्राकडाराद् इति हि भगवताऽसूत्रि जश्त्वप्रवृत्त्यै
दृच्छब्दादौ पदत्वं न भवति भतया बाधितं ह्यत्र नैवम् ॥ ६

नन्वेवमिति । विवृतिपर इति । तत्र कुत्ववारणाय अयस्मयादित्वेन भत्वाश्रयणे संहितापाठे जश्त्वसाधनाय प्रवृत्ते भाष्ये उक्तः ऋक्पदस्थः जश्त्वाभावः भत्वे पदतया मिळति सति-समाविशति सति, नतु तद्बाधके सति, कथं स्यादित्यन्वयः । किन्तु भत्वस्य कार्याभावात् अप्राप्तिरेव स्यादिति समाधत्ते— मैवमिति । प्रकृतापेक्षया भपदसंज्ञयोः वैषम्यं दर्शयति - तत्रेति । 'आकडारात्' इति एकसंज्ञाधिकारे विहितानां यथोद्देशत्वस्यैव क्लृप्तत्वेन 'दृत' इत्यादौ संज्ञान्तरव्यवच्छेदार्थमेव भत्वादिप्रवृत्त्यावश्यकतया च तत्सूत्राक्षरस्वारस्येन एकया परस्या बाधस्य द्विसंज्ञिस्थलेऽपि अभ्युपगमसम्भवेऽपि अन्यत्र संज्ञाद्वयसमावेशे बाध्यबाधकभावे मानाभाव इति भावः । जश्त्वाप्रवृत्त्या इति । इदं संज्ञाग्रहणसामर्थ्यलभ्यं, अन्यथा एकेत्युक्तावपि प्रकरणात् 'आकडारात्' इति सामर्थ्याच्च तस्या एव लाभे तद्वैयर्थ्यं स्पष्टमेव । एतेन 'आकडारात्' इति संज्ञान्तरव्यावृत्तिसिद्धावपि व्यावर्तकसंज्ञायाः शास्त्रीयकार्योपयोगिन्या एव गृहीतुमौचित्यमित्यपास्तम् । "प्रकरणादेव तल्लाभे तद्ग्रहणं न कार्यमेव" इति तत्सूत्रभाष्यं तु परसंज्ञाया एव अनेन प्रापणमित्याशयेन ।

तदा हि परसंज्ञाप्रयुक्तकार्यस्यैव 'आकडारात्' इत्यनेन बोधनात् 'विप्रतिषेध'सूत्रेणैव अधिकारतया स्वतन्त्रतया वा एतत्प्रकरणस्थ-संज्ञाशास्त्रीयपरत्वमादाय प्रवृत्तिसम्भवे 'आकडारात्' इत्यारम्भादेव उक्तार्थलाभः सुगमः। यद्वा, 'विप्रतिषेध'सूत्रानन्तरं 'आकडाराच्च' इत्यनेनापीष्टसिद्धौ 'आकडारादेका' इत्येकपदपठितस्य उक्तार्थपरत्वं सुगममिति स्पष्टं सूक्ष्मदृशाम्। अत एव भसंज्ञायाः अशास्त्रीयकार्येऽपि प्रवृत्तिः 'न पदान्त' सूत्रभाष्यप्रामाण्यात् साधिता **शब्देन्दुशेखरे।** अनवकाशसंज्ञाया अपि तेन प्रापणसिद्धान्तरीत्याऽपि संज्ञाग्रहणाकरण-लाघवपरं **भाष्य**मिति तदाशयः। एवञ्च प्रकृते न तादृशरीतिलेश इत्युपसंहरति—**अत्र नैव**मिति ॥ ६ ॥

आकडारादन्यत्रापि संज्ञयोर्बाध्यबाधकभावाभ्युपगमे अनिष्टमपि प्रसञ्जयति—

**अन्यत्रापि आकडारादुपगत उभयोः संज्ञयोरेकयाऽन्या**
**बाधे स्तुत्यो न सिध्येत् क्यपि कृति हि भवेत् तुक् कथं**
**कृत्यकृत्त्वम्।**
**एवं 'लिट् च' इति शिष्टं न तिङि परिवदेत् आर्धधातुक्यमन्यत्**
**स्याच्चानिष्टस्तथा चेत् विकरण इति चेन्नैवकारानुवृत्तेः ॥ ७॥**

**अन्यत्रे**ति। **अन्याबाध** इति। बाधश्च निवृत्त्यनुकूलो व्यापारः सूत्रकृत्कर्तृकः। तस्य च कर्तुः प्रयोगात् न 'उभयप्राप्तौ'



इति षष्ठीति न समासानुपपत्तिः। **'एकया'** इति तु करणे तृतीया अत्र 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावं तु 'ठक्छसोश्च' इति वार्तिकारम्भेण, **भाष्ये** तदप्रत्याख्यानेन च अनित्यत्वज्ञापनान्न भवति। स्पष्टं च एतत् 'दक्षिणापश्चात्' इत्यत्र **शब्देन्दुशेखरे।** अत एव 'अन्यासम्भोगचिह्नैस्तु कुपिता खण्डिता मता' इति प्रयोगः सङ्गच्छते। 'ठक्छसोः' इत्यनेन 'सर्वनाम्नः' इत्यस्य द्व्याद्यतिरिक्त-विषयत्वकल्पने तु **अन्यस्या अबाध** इति च्छेदो बोध्यः। युक्तं चैतत्। अत एव 'सर्वनाम' सूत्रे भवतः सर्वनामसंज्ञायां फलकथनावसरे इदं नोक्तं **भाष्ये।** अत एव 'पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कं' इत्यादिकविकथकसिंहप्रमुखपरमगुरुप्रयोगेषु पुंवत्त्वाभावस्यैव दर्शनमिति बोध्यम्। 'स्तुत्य' इति तद्रूपं न सिध्ये-दित्यर्थः। स्तौतेः 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यपि 'ह्रस्वस्य पिति कृति' इति तुक्। क्यपः कृत्यसंज्ञया कृत्संज्ञाबाधे तु तुक् न स्यादिति भावः। तदाह - **क्यपि कृ**तीति। **कृत्यकृत्त्व**मिति। कृत्संज्ञकस्य कृत्संज्ञिकत्वं कथमित्यर्थः। आकडारादन्यत्रापि संज्ञान्तर-बाधाभ्युपगमे इत्यर्थः। 'लिट् च' इति तिङि **शिष्टं** - विहितमार्द्ध-धातुक्यमन्यत् सार्वधातुक्यञ्च न बाधेतेत्यर्थः। तत्र किमनिष्टमत आह - **स्याच्चानिष्ट** इति। **तथा चेत्।** उक्तपरिवदनानुपगमे सति **विकरणः** 'कर्तरि शप्' इत्यादिः **अनिष्टः स्यादे**वेत्यर्थः। प्रतिप्रसञ्जनं परिहरति—इति **चेन्ने**ति। **एवकारे**ति। 'लङः शाक-

टायनस्यैव' इत्यत इति भावः। इदञ्च तत्रैव शेखरे स्पष्टम्। एवञ्च आकडारादन्यत्र यत्र संज्ञाबाध इष्यते, तत्र यत्न एव कार्यः इति सिद्धमिति बोध्यम् ॥

नन्वत्रापि स यत्नः सुलभ इति शङ्कामनूद्य परिहरति—

**नन्वेवं साऽनुवृत्तिः प्रकृत उभयथा 'छन्दसी'त्यत्र च स्यात्**
**सत्यां चार्थोऽयमेवान्यतरविधतयैवौभयध्यावक्लृप्तेः।**
**इत्थं च आदेशशब्दे शविकरणगता सार्वधातुक्यहेतु-**
**ङित्ता बाध्येति चेन्न, श्रुतिगत इतरत्रास्य वैफल्यदृष्टेः ॥ ९**

**नन्वेवमिति**। **प्रकृते**-बुद्धिस्थे। **उभयथा छन्दसीत्यत्र च**—'छन्दस्युभयथा' इति विधौ च। **सा** एवकारविषया **अनुवृत्तिः स्यादित्यर्थः**। नन्वत्र तदनुवृत्तौ उभयथैवेत्यर्थो लभ्येत। **तथा च** अन्यतरसंज्ञामात्रव्यवच्छेदः स्यात्। तस्मात् प्रकृते शस्य प्राप्तौ तस्य सार्वधातुकत्वप्रयुक्तङित्त्वमेव तत्सूत्रेण प्रापणीयं स्यात् इति महदनिष्टमित्यत आह-**सत्याञ्चेति**। तदनुवृत्तौ **सत्याञ्च अयमेव** 'लिट् च' इत्यादिषूक्त आर्धधातुकसंज्ञैवेत्याकारक एवात्राप्यर्थः कल्प्यत इत्यर्थः। तथा अर्थलाभः कथमित्यत आह - **अन्यतरेति**। **औभयध्यस्य**= उभयथाभावस्य **अन्यतरविधयैवावक्लृप्तेः** बोधाभ्युपगमादित्यर्थः। 'रषाभ्यां' इत्यादिवत् द्वित्वस्य अन्यतरत्वपर्यवसाने बाधकाभावादिति भावः। **एवकारेण** च एकस्याः प्रवृत्तिसमये अन्यस्या अप्रवृत्ति-



रूपबाध एव बोध्यते। एकेति वाच्ये **उभयथा**ग्रहणसामर्थ्यादिति तात्पर्यम्। तत्र फलितमाह—**इत्थञ्चेति**। **ङित्ता बाध्येति**। निवर्तनीयेत्यर्थः। शङ्कां परिहरति—**नेति**। **श्रुतिगते इतरत्र**— आदेशशब्दादन्यत्र "वर्द्धन्तु त्वा" इत्यादौ तदुदाहरणे **अस्य**— उक्तकल्पनस्य **वैफल्यदृष्टेरित्यर्थः**। संज्ञाद्वयप्रयुक्तशास्त्रीयकार्यद्वयस्यैव अनेन छन्दसि प्रापणदर्शनादिति भावः ॥ ९ ॥

नन्वेतदादेशपदसिद्ध्यर्थमेव तत्कल्पनमस्त्वित्यत आह—

**एतद्रूपस्य सिद्ध्यै यदि तदनुसृतिः कल्प्यते तर्हि सैषा**
**वंशौघेभ्यो महद्भ्यो लघुतरफललाभार्थं लट्वापकृष्टिः।**
**तस्माद्ध्रास्यत्वहान्यै घञिह हि करणार्थोऽभ्युपेत्यः सुधीभिः**
**शस्याप्युत्पत्तिक्लृप्तौ प्रबलतरगुरुत्वं किलाचार्यकल्पात् ॥ १०**

**एतद्रूपस्येति**। **सैवेति**। एवकारानुवृत्त्यादिकल्पनाया आचार्यकल्पादतिगुरुत्वेन परमताद् गुरुत्वेन च 'सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते' इति '**ऋऌक्**' **सूत्रभाष्योक्त** 'गुरोररवतः' इति **वार्त्तिकदर्शितन्यासोपहास्यत्ववदत्यन्तहास्यत्वं स्यादिति भावः**। तदाह—**तस्माद्ध्रास्यत्वेति**। **आदेशशब्दे** करणघञ्पक्षे प्रत्ययद्वय-कल्पनाभावादपि लाघवमित्याह—**शस्यापीति** ॥ १० ॥

एवं कप्रत्ययान्तत्वेऽपि तत्साधुत्वमित्यस्याशक्यत्वात् "अन्तः प्रविष्टः शास्ता जनानां", "प्रशासितारं सर्वेषाम्" इत्यादिश्रुति-

स्मृतिसिद्धार्थलाभाय करणे घञेवावश्याश्रयणीय इति तमेवाचार्याः उपदिदिशुरित्याह—

**तस्मात् आप्तोक्तमास्ते गुरव उपदिशत्यादिशेः घञ्परत्वं**
**तस्याकर्त्रर्थकत्वं भवति हि करणत्वेन कर्तुर्विवक्षा ।**
**तस्मात् हि आदेशनेऽन्यन्न हि करणमपि स्वानभिव्यासमस्ती-**
**त्यर्थो लभ्येत तत्त्वं वदति च भगवान् भाष्यकृत् कारकाणाम् ॥**

तस्मादिति । घञ्परत्वमिति । करणघञ्परत्वमित्यर्थः । भगवतः प्रशासने वस्तुतः कर्तृत्वात् करणत्वविवक्षणेऽपि "अकर्तरि"ति घञ्पर्युदासः सुदुर्वार इत्यत आह-तस्येति । अकर्त्रर्थकत्वमिति । हि-यतः करणत्वेनैव कर्तुर्विवक्षा । ततस्तस्य कर्तृसंज्ञिकभिन्नार्थकत्वं भवतीत्यर्थः । सतोऽपि धर्मस्याविवक्षायाः "कर्मादीनामविवक्षा शेषः" इति 'षष्ठी शेषे' इति सूत्रभाष्याल्लाभादिति भावः । "स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा" इति 'कारके' इति सूत्रभाष्ये च एतत् स्पष्टम् । अनेन कर्त्रादिसंज्ञानिमित्तभूतधर्माणामविवक्षैव कर्मादीनामविवक्षेति भाष्यार्थ इति सूचितम् । ननु तत्र स्थाल्यादेः करणस्य कारकान्तररूपेण विवक्षा तस्य पाकादिसौकर्यातिशयहेतुत्वप्रतिपादनाय भवति 'कर्मवत् कर्मणा' इति सूत्रे सर्वैः एवमेव स्वीकृतम् । एवञ्च भगवतः सर्वस्वतन्त्रशिरोमणेः प्रशासने करणत्वेन विवक्षा पारतन्त्र्यातिशयलाभावहा इति प्रधानकर्तृत्वविरोध एव स्यादित्यत आह-तस्माद्धीति । शास्ता इत्यादिश्रुतिबलात्



प्रधानकर्तृत्वस्य भगवति संप्रतिपन्नत्वेऽपि स्थाल्यादिष्वधिकरणत्वस्येवाविवक्षणात् स्थाल्यादिगुणसौकर्यातिशयवत् प्रशासने साधनान्तराषपेक्षत्वरूपसौकर्यातिशयस्य 'सदेव सोम्य' इत्याद्यौपरिष्टोपनिषत्फलितस्य संक्षेपेण प्रतिपादनाय करणे कर्तृत्ववत् कर्तृरि करणत्वस्यापि विवक्षा सुलभेति भावः । तत्त्वं-कारकान्तररूपेण वैवक्षिकत्वम् । भाष्यकृत् पूर्वोक्त 'कारके' इति सूत्रभाष्यकृत् ॥ १० ॥

अथ ण्यन्तात् पचाद्यचि आदेश इति रूपसिद्धिशङ्कामनूद्य निराचष्टे—

**एवं ण्यन्तादिशेरप्यजिति कथयितुं नैव शक्यं निवृत्त-**
**प्रैषाण्णौ सर्वधातोः सति विफलविधिः स्याद्धि चौरादिको णिः।**
**काचित्कत्वे तु मानेक्षणमुखगुरुता दुर्विशङ्कोपरोधा**
**मृग्ये माने पुनः किं गुरुमतविमता कल्पनैवावशिष्टा ॥ ११ ॥**

एवमिति । ण्यन्तादिशेरिति । 'हेतुमति च' इति विहितण्यन्ताद् आङ्पूर्वाद्दिशेरित्यर्थः । ननु तर्हि प्रशासने भगवतः कर्मत्वेऽपि णिजर्थोपपत्त्या परतन्त्रकर्तृत्वविवक्षायाः 'णेरणौ' इति सूत्रभाष्ये सिद्धत्वात् इत्यत आह-निवृत्तप्रैषादिति । त्यक्तप्रेषणादित्यर्थः । अप्यजिति । पचाद्यजित्यपि कथयितुं न शक्यमेवेत्यन्वयः । धातोर्निवृत्तप्रेरणार्थविवक्षा किं सार्वत्रिकी? उत काचित्की? इति विकल्पमभिप्रेत्य, प्रथमं शिरो दूषयति-निवृत्तेति । इदं पूर्वत्रादिशेरित्यनेनान्वितमपि 'मध्यममणि'

न्यायेन उत्तरत्राप्यन्वीयते इति भावः । निवृत्तप्रेरणात् सर्वधातोर्णौ सति चौरादिको णिज्विधिर्विफला स्यादित्यक्षरार्थः । णिजर्थप्रेरणाख्य धात्वर्थप्रधानव्यापारस्य च अभिन्नत्वादीदृशणिजन्तस्य स्वार्थणिजन्तसमशीलतया पर्यवसानात् तद्वैयर्थ्यं स्पष्टमेवेति भावः । न च तथा सति चुरादेर्वैवक्षिकणिजन्तत्वापत्त्या चोरयति(चोरति?) इत्याद्यपि स्यादिति वाच्यम् । एवं तर्हि आधृषीयाणां वैकल्पिकणिजर्थं तत्र पाठवैयर्थ्यापत्तिः सुवचेत्याशयात् । द्वितीयं शिरो दूषयति—क्वाचित्कत्वे त्विति । दुर्विशङ्कोपरोधेति । अशङ्क्यपरिहारेत्यर्थः । प्रमाणापेक्षामूलं गौरवं दुर्वारमिति यावत् । प्रमाणान्तरगम्यप्रेरणात्यागाधीनव्युत्पत्त्यपेक्षया 'उपदेशेऽच्' इति सूत्रभाष्यसिद्धकरणघञन्तत्वं लघु इति भावः । एतेन करणे ल्युटा बाधात् घञप्राप्त्या तत्प्राप्तये बाहुलकाश्रयणे गौरवाविशेषात् साक्षात् कर्तृबोधपचाद्यजन्तत्वं वरमित्यपास्तम् । 'काष्ठं पचति' इत्यादिवत् करणस्य कर्तृत्वविवक्षायाः सुलभत्वेन कर्तृव्युत्पत्त्याश्रयणेन सिद्धे 'उपदेशनेऽजनुनासिकः' इत्युक्तवार्त्तिकदर्शितन्यासान्तरस्य, बाहुलकात् घञाश्रयणे तत्प्रत्याख्यानपरभाष्यस्य च निर्दलत्वापत्तौ तद्भाष्यस्य 'दिशि' धातुमात्रे बहुलग्रहणलब्धल्युड्विकल्पबाधनार्थत्वावश्यम्भावेनात्र घञः स्वारसिकतया गौरवानवकाशादिति बोध्यम् । प्रत्ययद्वयकल्पनागौरवं च परेषां स्फुटमिति ध्येयम् । प्रकरणांशत्यागे अनन्यथासिद्धप्रकरणान्तरदौर्लभ्यं चेत्याह—मृग्ये मान इति । तस्य पचाद्यजन्तत्वनिश्चये तस्य केवलाद् इगुपधकप्रत्ययेन बाधादप्राप्त्या, णिजन्तादेवात्र स इति



निश्चये च णिचश्शुद्धधातोः सत्त्वे 'अन्तः प्रविष्टः शास्ता' इत्यादिबाधात् तदन्यथानुपपत्त्या निवृत्तप्रेरणात् स इति निश्चय इति वक्तव्यम् । तथा च प्रकृते उक्तकल्पने उक्तश्रुतिः मानमिति सिद्धम् । तच्च मानं काचित्कनिवृत्तप्रेरणार्थकल्पनं प्रकृते उपयोजयतां नान्यथासिद्धं गमकम् । शाम्यत्यादौ क्वचिदन्तर्भावितण्यर्थतादर्शनात्, तथात्वस्य शास्ति इत्यादावपि सम्भवात् आदेशशब्दे प्रेरणार्थणिच्कल्पनेऽपि न तद्बाधप्रसक्तिरिति तदन्यथासिद्धेः सुवचत्वात् । नहि अन्तर्भावितण्यर्थत्वकल्पनात् निवृत्तप्रेरणार्थत्वकल्पने विशेषोऽस्ति । न च कर्मसाधारणशासयितृत्वस्य 'न तस्येशे कश्चन' इत्यादिश्रुतिबाधितत्वात् 'भीषाऽस्माद् वातः पवते' इत्यादिश्रुत्यानुगुण्याय शास्तृत्वमेवेह विवक्षितमिति निश्चीयते इति वाच्यम् । एवमपि तत्र 'प्रार्थयन्ति' इत्यादिवत् णिजन्तत्वास्यास्पष्टतया घञन्ततयाऽप्युपपत्त्या अन्यथानुपपत्त्यभावेन दुरूहणिचं कल्पयित्वा तस्य निवृत्तप्रेरणार्थकल्पनेऽतिगौरवात्, परमतनिरासासहत्वाच्च । तस्मादाचार्यमतविरोध एव पर्यवस्यतीति बोध्यम् । तदाह—गुरुमतेति । ज्ञानविशेषानुकूलव्यापारविशेषरूपशासनस्य णिजन्तात् तत्त्वेन लब्धुमनर्हत्वं चेति बोध्यम् ॥ ११ ॥

अथ भावे घञन्तादेशशब्दात् 'तत् करोति' इति णौ पचाद्यचमाशङ्क्य निराचष्टे—

एवं भावे घञन्तादिशतिरिह ततः 'तत् करोति' इति णौ स्यात्
पच्याद्यच्युक्तरूपं सुलभमिति मुधाऽऽयासभूमा हि हास्यः ।
एवं चेत् कर्मघञ्वाद्यभिमततुलया कृत्प्रकृत्यां गुरुत्वं
स्यात् तस्मात् तन्निरासं न जनयितुमलं ह्यन्यदाचार्यसूक्तेः ॥

प्रथमं भावे घञन्त आदेशशब्दः । ततः 'तत्करोति' इति णिः । ततः 'पचाद्यच्' इति प्रत्ययत्रयकल्पना । तत्र द्वयोर्लोपकल्पनेत्याद्यत्यन्तगौरवम् । कप्रत्यये गुणबाधनायोक्तप्रक्रियागौरववत् पूर्वरीत्या हास्य इति भावः । गौरवेऽपि तत्साधनलाभात् तदाश्रयणे का हानिरित्यत आह—एवञ्चेदिति । शासनपर्यवसाय्युपदेशार्थकत्वस्य क्वचित् सत्त्वेऽपि निरुपपदादेशशब्दात् प्रशासनस्यैव झटित्युपस्थित्या तदलाभादेव हि कर्मघञ्वादिमते प्रकृत्यर्थास्वारस्यम् आचार्यैरभ्यधायीति भवत्पक्षे प्रशासनकर्मकक्रियारूपण्यन्तार्थस्य गुरुभूतस्य अतिविलम्बितधीत्वेन प्रकृत्यंशे गौरवस्य स्फुटत्वात् परमतमेव जयेत् इति न तन्निरासलाभगन्ध इति भावः । आचक्षाणण्यन्तत्वसम्भवेन श्रुतिस्मृतिरूपसंज्ञाप्रवक्तृत्वपरत्वापत्तौ 'येनाश्रुतम्' इत्यादेः प्रमाणप्रवर्त्तनोपकारकत्वमात्रज्ञापनपरत्वापत्त्या तत्प्रकरणप्रधानप्रतितन्त्रभूतनिमित्तोपादानैक्यासिद्धिरित्यपि बोध्यम् ॥ १२ ॥

एवं श्रीभाष्यादिसिद्धकरणघञ्त्वप्रहाणे परमतनिरसालाभादिकमुपपाद्य साक्षात्कर्तृपरपचाद्यजन्ततादिस्वीकारे सूत्रकाराशयमप्युपपादयति—



अत्रेदं तत्त्वमात्मा भुवनजननकृन्न प्रधानं त्वितीह
व्यासेनासूत्रि हेतुर्दशिरविशयिना नादिशिर्घञ्परोऽपि ।
तस्याकर्त्रर्थकत्वात् करणपरतया पूर्वपक्षावलम्बात्
कर्त्रर्थप्रत्ययान्ते प्रथमतरतया त्वादिशिं सूत्रयेत ॥ १३ ॥

अत्रेदमिति । उक्तवक्ष्यमाणसर्वप्रक्रियादूषणपरतया परमतस्थैरुद्भाव्य सर्वत्र विरोधशङ्कावहत्वेन तत्परिहारस्यावश्यकत्वेन च करणघञन्तपराचार्यहृदयनिगूढरहस्यमिदम् सूत्राशयानुगुण्यरूपं अवश्यं ज्ञेयमिति भावः । किं तदित्यत आह—आत्मेत्यादि । 'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तब्रह्मणः 'तस्माद्वा एतस्माद् आत्मनः' इत्यादिना जगत्कारणभूतात्मत्वेन उपदेशात् 'सदेव सोम्येदं' इत्याद्युपदिष्टजगत्कारणमप्यात्मैवेति निर्णेतुं तत्प्रकरणतात्पर्यलिङ्गप्रदर्शनाय अशब्दस्य प्रधानस्य जगत्कारणत्वे ईक्षतिश्रुतिविरोधाद् आत्मन एव तत्त्वमित्यत्र 'स ईक्षत' इत्युपक्रमलिङ्गं सूत्रितम् । यद्यत्र आदेशशब्दः पचाद्यजन्तोऽभविष्यत्—तर्हि परमोपक्रमप्रशास्तृत्वश्रुत्येव प्रधानकारणत्वनिरासाय 'आदिशेर्नाशब्दम्' इत्येवासूत्रयिष्यत । करणघञन्तत्ववादे तु कर्तुः करणत्वविवक्षया घञाश्रयणेन प्रधानकारणत्वे मुख्यकरणत्वलाभात् तेन पूर्वपक्षोत्थानमेव स्यादिति तन्निरासाक्षमतया नादिशिमसूत्रयदिति वक्तुं शक्यमिति भावः । इत्यादिना अत्र करणघञन्तप्रशासनपर आदेशशब्दसत्त्वे एव सूत्राशय इति सिद्ध्या आनुमानिकप्रधानव्यावृत्तिस्फुटबोधकार्थपरत्वनिरासादुपदेश्य-

परत्वमप्यानुमानिकव्यावृत्ताकारतया सूत्रकृदनुगृहीतत्वात् परमतशैथिल्यं च दर्शितं स्यादिति बोध्यम् ॥ १२ ॥

अथ आङ्प्रश्लेषेण आख्यातमादेशनं येनेत्यादिरीत्या 'प्रादिभ्यो धातुजस्य' इति बहुव्रीहिवृत्तौ शास्तेति प्रसिद्ध इति विवक्षितार्थलाभशङ्कामेकयाऽनूद्य निरस्यति—

**आख्यातादेशने वाऽऽजितविधिमति वा ख्येयशास्तौ तदेतत्**
**प्रादिभ्यो धातुजस्येत्यनुविहितबहुव्रीहिवृत्त्या सुबोधम् ।**
**नैवं लोपादिक्लृप्त्या कथितपरमतात् प्रक्रियाभूमसाम्यात्**
**प्रख्यातादेशनत्वे विषयपरतया ब्रह्मगेऽन्यच्च मृग्यम् ॥ १४**

आख्यातमादेशनं यस्य तस्मिन्नित्यर्थे कर्त्तरि षष्ठ्यर्थे बहुव्रीहौ प्रसिद्धशासनकर्त्तेत्यर्थः । आजितेति । आ—समन्ताज्जितः—सर्वोत्कृष्टः विधिः शासनं तद्वतीति पूर्ववत् कर्त्तरि बहुव्रीहिः । जयतेरुत्कर्षार्थादकर्मकात् कर्त्तरि क्तः । 'एष आदेशः' इत्युपनिषदि श्रूयमाणान्तोदात्तत्वनिर्वाहाय इदं व्युत्पत्त्यन्तरं, पूर्वत्र तु कर्मक्तान्तपरकाङः 'गतिरनन्तरः' इति प्रकृतिस्वरेण उदात्तत्वे बहुव्रीहौ सत्यपि तथैव स्थितौ आद्युदात्तापत्तिः । कर्तृक्तान्तजितशब्देन विग्रहे तु तस्य गतिस्वराप्राप्त्या कृत्स्वरेणान्तोदात्तत्वे शेषनिघातेनाङोऽनुदात्तत्वे धातुजलोपबहुव्रीह्योः सतोरुदात्तस्वरितयोगिपूर्वपदाभावात् 'बहुव्रीहौ' इति प्रकृतिस्वराप्राप्तौ समासस्वरेणान्तोदात्तत्वसिद्धिरिति स्पष्टमेवेति



भावः । यद्यपि 'एष आदेशः' इति वाक्ये तद्घटितानुवाकादिषु उपनिषद्भागेषु प्रायेण यथोक्तस्वरपाठो न दृश्यते । 'सत्यं वद' इत्यादौ अन्तोदात्तसत्यशब्दस्य आद्युदात्ततया पाठात् प्रायेणात्र उदात्तवद् भासमानैकश्रुतेरेव सत्त्वाच्च । अन्यथा तस्मिन्नेव वाक्ये 'एष' इत्याद्युदात्तपाठासङ्गतिः । 'वारुणो वा एषः' इत्यादौ अन्तोदात्तो हि स श्रूयते । तस्मादत्र उपनिषत्प्रतिनियतशीक्षानुसारादेव यथोक्तस्वरविध्यप्रवृत्तिरिति सर्वैर्वाच्यमिति नात्र स्वरदोषः शङ्क्यः । तथाऽपि श्रूयमाणस्य यथोक्तस्वरविधिगोचरत्ववाद्यभिमानानुसारेण व्युत्पत्त्यन्तराश्रयणमिति बोध्यम् । 'प्रादिभ्यो धातुजस्य' इत्यस्य कृत्यप्रत्ययान्तघटितेऽपि प्रवृत्तौ साधकाभावात् तद्घटिततयाऽपि व्युत्पत्तिं प्रदर्शयति—**आख्येयशास्ताविति । आख्येया शास्तिः**—शासनं यस्य तस्मिन्नित्यर्थः । इदं आदेयशिरसा ग्राह्य आदेशः—शासनं यस्य स आदेश इत्यादिधात्वन्तरान्तर्भावेण व्युत्पत्तेरप्युपलक्षणम् । ननु तर्हि कृदन्तानां समासे कृतो न श्रवणमित्यत आह—**प्रादिभ्य इति । धातुजस्येति ।** अनेन सामान्यतः कृदन्तधातुग्रहणलाभात् कृत्यप्रत्ययान्तेऽपि प्रवृत्तिर्न तु भाष्योदाहृतप्रपतितपर्णादौ क्तान्तमात्रे, इति भावः । उक्तशङ्कामुत्तरार्धेन निरस्यति—**नैवमिति । लोपादिक्लृप्त्येति । आदिना** अन्यपदार्थसापेक्षबहुव्रीहिवृत्त्यादिकं ग्राह्यम्, आङ्प्रश्लेषदुर्ग्रहत्वादिकं च बोध्यम् । **प्रादिभ्यः** इत्यस्य "षष्ठ्यर्थे बहुव्रीहिः कर्तृकर्मवचनेन च

अप्रथमायाः'' इति वार्त्तिकसिद्धबहुव्रीहिमनूद्य धातुजलोपमात्रविधानपरतया कर्मवाचिप्रत्ययान्तेन सुबन्तस्य प्रथमेतरविभक्त्यर्थे बहुव्रीहिरिति विहिते प्रत्यासत्त्या कृदन्तधातूपस्थितार्थान्वयिकारकार्थकविभक्त्यर्थकस्यैव बहुव्रीहिनिमित्ततालाभेन आख्यातादेशनत्वस्य आदेशनाख्यानकर्तृत्वरूपतया भगवति साक्षादादेशनकर्तृत्वस्यालाभे इत्यपि बोध्यम्। पीताम्बरवदुत्तरपदार्थान्वयिषष्ठ्यर्थान्वयबहुव्रीहित्वाश्रयणेऽपि तादृशादेशनकर्मत्वस्यापि भानप्रसङ्गात् परम्परयाऽप्यादेष्टृत्वालाभ इत्याह- प्रख्यातेति। अन्यच्चेति। प्रक्रियागौरवमभ्युपेत्यापि प्रकृतप्रशासितृत्वमेवं दुर्लभं स्यादित्यर्थः। "न तस्येशे कश्चन" इत्यादिभिः तस्यादेशनकर्मत्वबाधेऽपि अन्वादेशादिवत् सोपपदकादिशिरूपतायाः सम्पत्त्या उपदेशपरत्वापादकतया प्रसिद्धोपदेशकर्मत्वस्यैव तदर्थतापत्त्या परमतप्रवेशापत्तिरिति भावः ॥ १४ ॥

नन्वेवं सोपपदकत्वस्य सविशेषणत्वपर्यवसानादतथाभूतं आदेशायाविष्ट इति "पर्यादयो ग्लानाद्यर्थे" इति चतुर्थ्यन्तेनादेशशब्देनाङ्प्रश्लेषेण सामान्याश्रयणं स्यादित्याशङ्कामेकया निरस्यति—

**आविष्टः शासनायेत्यपि कथितसमं वृत्तिभेदे लघाव-**
**प्याङ्प्रश्लेषान्यवृत्तिप्रमुखकलनया क्लेशभूमातिशेषात्।**
**श्रौतान्तोदात्तसिद्ध्यै किमुत पुनरपि स्वार्थिकाणन्तवक्तुः**
**पर्यद्ध्यायादिसाम्यं विशदपरिमुखैः सोपसर्गत्वगम्यम् ॥१५॥**



आविष्ट इति। वृत्तिभेदे इति। प्रादिसमासरूपवृत्तौ अन्यपदार्थनिरपेक्षतया लाघवेसत्यपि आङ्प्रश्लेषः अन्यवृत्तिः प्रथममादेश इति गतिसमासात् पृथक् प्रादिसमासाश्रयणञ्च तत् प्रमुखस्य आङ एवाविष्टपर्यन्तार्थकत्वादेः कल्पनया प्रक्रियागौरवेण क्लेशभूम्नः प्राक्तनबहुव्रीहिणा अविशेषात् आविष्टः शासनायेत्यपि कथितसमं प्राक्तनकल्पनवत् परमतादपि गौरवाधिक्यात् अशक्यशङ्कमित्यर्थः। न केवलमेतावतैवास्य अशङ्क्यत्वम्, अपि तु यथोक्तस्वरविधिप्रवृत्त्यभिमानिनां परेषां तत्सिद्धये यत्नान्तरस्याप्याश्रितत्वात् अत्यन्तगौरवेण तादृशत्वं कैमुत्यसिद्धमित्याह - श्रौतेति। 'एष आदेशः' इत्युक्तश्रुतिसिद्धान्तोदात्तस्य सिद्धये पुनरपि वृत्तिद्वयाश्रयणान्तरमपि स्वार्थिकाणन्तं - प्रज्ञाद्यणन्तं - वक्तुः—व्याख्यातुः, मते इति शेषः। कथितसमं किमुत - प्राक्तनबहुव्रीहिकल्पनसममिति किमु वक्तव्यं, सुतरां तत्सममेवेत्यर्थः। अन्यपदार्थानपेक्षवृत्त्याश्रयणलाघवप्रत्याशैवाशिष्यत इति भावः। पर्यध्ययनादितुल्यतया प्रादिसमासोऽपि न युक्त इत्याह—पर्यध्यायेति। विशदपरिमुखैः स्पष्टश्रुतिकपरिप्रभृतिप्रादिभिः सोपसर्गत्वेन - उपसर्गतुल्यं भवनेन तद्बलेन गम्यं ज्ञेयमित्यर्थः। श्रूयमाणस्य पर्यादेरन्तर्नियतधात्वर्थस्य वृत्त्यन्तरहेतुत्वमन्तरेण प्रसञ्जनीयप्रयोगत्व एव वार्त्तिकप्रवृत्तिस्वरात् - ईदृशप्रश्लेषविषये तेन प्रादिसमासाश्रयणं युक्तमिति भावः ॥ १५

इत एव अस्वरसात् आदिशेः ण्यन्तात् णौ कप्रत्ययेन प्रकृतार्थसिद्धिरिति प्रत्यवस्थानमाशङ्क्य निराकरोति—

नन्वादेशः पुनर्णाविगुपधकविधौ सिद्धमेतत् णिजन्ते
स्वार्थत्यागेन धातोरनधिकपरता 'णेरणौ' सूत्रनीत्या ।
मैवं पूर्वाविशेषात् परणिजुपधिके त्वैगुपध्यात् णिलोपे
नङ्क्ष्यद्धेतुत्ववादः कविधिपर इहापातधीक्लृप्त एव ॥१६॥

नन्विति । आदेशः ण्यन्तादाङ्पूर्वदिशेः पुनः णौ सति इगुपधकविधौ प्राक् णिचं इकमादाय परणिजन्तस्य इगुपधत्वात् कप्रत्यये सति एतदादेशपदं सिद्धमित्यर्थः । ननु द्वयोरपि हेतुमदर्थतया प्रकृतार्थसाङ्गत्यमत आह—णिजन्त इति । प्राङ् णिचि तत्प्रकृतिभूते धातौ चेत्यर्थः । स्वार्थत्यागेन—प्रेरणांशनिवृत्त्या । 'णेरणौ' सूत्रनीत्या—अणौ क्रियाया णौ वाच्यत्वबोधनात् अणौ कर्मकारकस्य णौ कर्तृत्वस्य च आत्मनेपदनिमित्ततात्प्रबाधनेन णिद्वयान्तधातोः शुद्धधात्वविशिष्टार्थत्वसम्पादनात् युगपत् प्रेरणांशद्वयत्यागसिद्ध्या तन्न्यायेन णिजन्ते पुनः णिजन्ते धातोः–शुद्धधातोरनधिकपरता—समानार्थकता। अस्तीति शेषः । एवञ्चेदं कल्पनं सूत्रकृदादिसंमतमिति भावः । निरस्यति-मैवमिति । पूर्वेण—आङ्प्रश्लेषकल्पनेन अविशेषात् णिज्द्वयप्रश्लेषादाधिक्यञ्च इत्यभिप्रेतम् । प्रश्लेषस्य स्वव्याघातकत्वञ्च अत्रापरदूषणमाह-परणिजीति । परणिज् उपधिः—हेतुः तस्मिन्



णिलोपे–पूर्वणेर्लोपे ऐगुपध्यं क्व—इगुपधत्वं नास्त्येवेत्यर्थः । ततः कुतः कप्रत्ययप्रत्याशेति भावः । ननु कप्रत्यये सति परणिचो लोपस्य भावित्वेन 'अकृतव्यूह'—परिभाषया प्राङ्णिलोपो न स्यादिति इगुपधत्वं सिद्धमित्यत आह - नङ्क्ष्यद्धेतुत्वेति । कविधिपरः—कप्रत्ययविधिविषयः नङ्क्ष्यद्धेतुत्ववादः भाविनाशनिमित्तकत्ववचनं आपातधीक्लृप्त एव । न तु विमर्शक्षम इत्यर्थः । णिलोपेऽपि प्रत्ययलक्षणेन तमादाय पूर्वणेर्लोपस्य दुर्वारत्वेन निमित्तविघाताभावेन इह परिभाषाया अप्रवृत्तेः स्फुटत्वादिति भावः । कथमन्यथा कप्रत्ययानन्तरं णिज्द्वयनिवृत्तिर्भवतां स्यात् ? । न च कमादाय तत्सिद्धिः, परणिलोपस्य स्थानिवत्त्वादसिद्धत्वाच्च । न च "णेः" इत्याकृतिनिर्देशेन द्वयोः णिचोः कमादाय एकदैव लोप इति वाच्यम् । तथा सति लघूपधगुणानापत्तेः । णिजा यस्य (णिचाऽस्य ?) आर्धधातुकत्वाबलाभेन तल्लोपे सुतरां तदलाभात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववदार्धधातुकसमुदायस्य आर्धधातुकत्वाभावात् । जातिमद्बोधकस्याकृतिबोधकत्वस्वीकारसम्भवेऽपि आर्धधातुकत्वादेः अजातित्वेन तद्बोधकशब्दस्य आकृतिबोधकत्वप्रत्याशाविरहाच्च 'छन्दस्युभयथा' इत्यनेन तस्याव्यवस्थिततत्वबोधनेन आर्धधातुकत्वादेः जातिलक्षणदौःस्थ्यादित्यलम् ॥ १६ ॥

अथ "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतिस्थप्रशासनपदप्रत्यभिज्ञापकव्युत्पत्तिमेकया शङ्कते—

नन्वादेशेर्विधर्ता निखिलभुवनमित्यागमान्तार्थ एष्ये
'शेषे' सूत्रात् स्वतन्त्रादणि सदृशमिदं दार्षदौलूखलाद्यैः ॥
जाताद्यर्थान्तराणां नियमपरतया भाषितत्वाच्च 'शेषे'
सूत्रं विध्यर्थमप्यस्त्यधिकृतिरिदमापत्यमुख्याग्रहाय ॥१७॥

नन्विति । निखिलभुवनं द्यावापृथिव्यादि श्रुतिसिद्धं कृत्स्नं जगत् । आदेशे - स्वशासने । विधर्त्ता विधरणतद्धर्मा, तृन्नन्तः । स्वसाधारणधर्मभूतं - जगच्छासनाधीनविधरणवानित्यर्थे प्रकृतार्थ-सिद्धिरिति भावः । इति इत्थंभूते आगमान्तार्थे एष्ये—अपेक्ष्ये । विवक्षिते इति यावत् । 'शेषे' सूत्रात् स्वतन्त्रात् पृथक् अणधि-परात् अणि सति दृषदि पिष्टा माषाः 'दार्षदाः', उलूखले क्षुण्णाः 'औलूखलाः यवाः' इत्यादिभिः सदृशमिदमादेशपदं, भवतीति शेषः । ननु 'शेषे' इत्यस्य स्वतन्त्रविधिपरत्वे 'तत्र भवः' इत्यादिष्वर्थेषु खादीननुवर्त्य विधानेन सिद्धौ शेषग्रहणं व्यर्थमित्या-शङ्क्य, 'तस्येदं' इत्यत्र इदमा अपत्याद्यर्थस्यापि ग्रहापत्त्या तत्र "खादीनां निवृत्त्यर्थं शेषग्रहणम्" इति तत्सूत्रभाष्यस्य विरोधः; दार्षदाद्यर्थतया चरितार्थत्वे शङ्कासमाधानयोः दुर्मेलत्वापातादित्यत आह जातादीति । जातादीनि यानि अर्थान्तराणि तेषां नियमपर-तया भाषितत्वात् 'शेषे'सूत्रं स्वतन्त्रविध्यर्थं च । न हि तदर्थस्य पूर्वं शेषपदेनाविधानेन 'तत्र जातः' इत्यादीनां नियमपरत्वं भाष्योक्तं घटत इति भावः । नन्वेवं 'तस्येदम्' इतीदमा अपत्याद्यग्रहः



कथमित्यत आह—अप्यस्त्यधिकृतिः इति । अपत्यमुख्येति । अपत्यं मुख्यं आदिः येषां ते अपत्यमुख्याः तेषामग्रहाय अधिकृतिरपि - अधिकाररूपमप्यस्तीत्यर्थः । स्वरितत्वसामर्थ्यादिति भावः । एतेन पृथग्योगकरणात् "शैषिकाद् मतुबर्थीयात्" इति सन्विधा-यकसूत्रभाष्याच्च अपत्याद्यस्मिन्नर्थे अणादीनामपि शेषेण विधाना-वश्यकतया तेनैव चरितार्थस्य तस्य अधिकारत्वं दुर्लभमिति 'तस्येदम्' इत्यपत्यादावपि दुर्वारमित्यपास्तम् । स्वतन्त्रभूतस्य चारि-तार्थ्येऽपि अधिकाररूपस्य तस्य चरितार्थतया तत्सामर्थ्येन इदंपदेन अपत्यादेरग्रहणमिति भाष्याशयादिति बोध्यम् ॥ १७ ॥

उक्तशङ्कामेकया निरस्यति—

मैवं श्रौतार्थलाभेऽप्यझटितिमितिगप्रक्रियाभूमक्लृप्तेः
कर्मव्युत्पत्तिबाधाक्षमभुदितसमं दार्षदादौ च नैवम् ।
'शेषे' सूत्रे स्वतन्त्रेऽपि च सति बहुधा तत्र जातादियोगैः
भूयोऽपि प्रत्ययोक्तेः नियमविधिपरैः तत् क्वचिद्भावसिद्धेः ॥

मैवमिति । श्रौतार्थेति । "एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यादिगार्गिब्राह्मण-सिद्धार्थलाभेऽपीत्यर्थः । अझटिति—विलम्बितां मतिं (मितिं)

गच्छतीति तथाभूता या प्रक्रियाभूमक्लृप्तिः परमतसिद्धकर्मघञ्-क्लृप्तेरतिशयिततद्धितविशेषक्लृप्तिः, तस्या हेतोः। उदितसमं पूर्वोक्तणिजद्वयान्तात् कप्रत्ययक्लृप्तितुल्यं कर्मव्युत्पत्तिबाधाक्षमं-तद्वादनिरासासमर्थं, इदमिति शेषः। 'शेषे' इत्यणन्तत्वकल्पनमिति तदर्थः। न चैवं दार्षदादावपि तेनाण् न स्यादिति शङ्क्यमित्यत आह - दार्षदादाविति। नैवमिति। आदेशशब्दवत् लघुप्रक्रिया-न्तरालाभेनागत्या 'शेषे' इत्यनेनैव विवक्षितार्थे अणकल्पनादिति भावः। ननु श्रौतार्थविशेषलाभाय प्रक्रियागौरवं सोढव्यमेव, फलमुख-गौरवस्यादोषत्वादित्यत आह—'शेषे' सूत्रे इति। 'तत्र जातः' इत्यादीनां पृथगर्थतया विधानसामर्थ्यात् 'शेषे' इति सूत्रं स्वतन्त्र-मपि नापत्यादिभिन्नयावदर्थविधायकम्। अपि तु, अगतिककतिपय-प्रयोगनिर्वाहार्हार्थविशेषमात्रपरमिति नात्र तत्प्रवृत्तिरुचितेति भावः॥

अथ भावघञन्तादादेशात् 'तदधीते' इत्यर्थे अणि श्रौतादेश-शब्दसिद्धिमनुशङ्कते—

**नन्वादेशः प्रशास्तिः स च विधिपरवाक् तामधीते तथाऽर्थे**
**सत्यप्येतत् सुसाधं पठितृपर इहाधीतिरर्थाधिकोऽपि।**
**यद्वत् पौराणिकादौ ठगनुविधिबलात् केवलोच्चारणेऽपि**
**स्यादेषोऽधीतिरेवं भगवति न हि कोऽपीश इत्युक्तिशक्तेः॥**



**नन्वादेश** इति। **प्रशास्तिः**—ज्ञानानुकूलशब्दविशेषरूपा आदेशशब्दवाच्येत्यर्थः। तदाह—**स चेति**। **विधिपरवागिति**। उपेक्षान्यज्ञानानुकूलव्यापारपरशब्द इत्यर्थः। **तामधीते तथाऽर्थे** आदेशमधीत इत्याकारकार्थे अणि सति, **एतत्**—श्रौतपदं **सुसाधम्**। नन्वेवं आदेशाध्येतृपरत्वे सति श्रुतिस्मृत्यादिरूपसर्वशास्त्राध्येतृतया प्रसिद्धव्यासादिजीवपरमेवेदं स्यात्, न तु ईश्वरपरमित्यत आह **पठितृपर** इति। **अर्थाधिकोऽपि** इति। अनियमपरतन्त्रोच्चारणस्य अधीत्यर्थतया अधिकार्थघटितोऽप्यधीतिः **पठितृपर** एव इह लक्षणया आश्रीयत इत्यर्थः। नन्वेवमन्वयाद्यनुपपत्त्याद्यभावे कथं लक्षणा? इत्यत आह। **यद्वदिति**। **पौराणिकादाविति**। (यथा) पुराणशब्दात् 'आख्या-नाख्यायिकेतिहासपुराणेभ्यश्च' इति ठग्विधानसामर्थ्यात् पठनमात्रेऽपि अधीतितः शक्तिकल्पना, इहापि तथा स्वीक्रियते इति भावः। नन्वेवं अधीतेरनेकार्थकल्पनापत्त्या गौरवेण लाक्षणिकार्थपरतयैव ठग्विधानसार्थक्यात् इह तथा स्वीकारानुपपत्तिरत आह—**एवमिति**। **भगवतीति**। "उत तमादेशं" इत्यादेः 'सदेव सोम्येदं' इत्यादिना वक्ष्यमाणेन जगत्कारणब्रह्मपरत्वसिद्ध्या, तस्य च "न तस्येशे कश्चन तस्य नाम महद्यशः" इत्यनेन पारतन्त्र्यनिषेधश्रवणसामर्थ्यात् लब्धता-त्पर्यानुपपत्त्या उच्चारणमात्रेऽपि लक्षणासिद्धिरित्यभिमानः। 'श्रुतिः स्मृतिः ममैवाज्ञा' इत्युपबृंहणवशाच्चात्र **आदेशशब्दस्य** उक्तार्थ-परत्वोन्नयनमिति बोद्धव्यम् ॥ १९ ॥

उक्ताशङ्कामेकया परिहरति—

**मैवं श्रीभाष्यसूक्त्या गुरुपठनपरोच्चारणार्थो ह्यधीतिः**
**सर्वत्राबाधबोधः सनियमपठने ठक् तु पौराणिकादौ ।**
**पाठानन्तर्यमत्राप्युपदिशति गुरौ सम्भवेदन्यथात्वे**
**गौणोऽस्तीत्यन्यदेतत् ठगनुविधिरुपक्षीण इत्थं च नात्र॥**

**मैवमिति** । **श्रीभाष्यसूक्त्येति** । "आचार्योच्चारणानूच्चारणरूपं अक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते" इति ग्रन्थेनेत्यर्थः । **गुरुपठनेति** । आचार्योच्चारणात् **परं**—अनन्तरं यदुच्चारणं तदर्थको हि **सर्वत्राधीतिरबाधबोधः**-असङ्कुचितप्रवृत्तिक इत्यर्थः । तर्हि **पौराणिकादौ** का गतिरित्यत्राह—**सनियमपठन** इति । **ठगिति** । गुरूच्चारणाधीनसनियमोच्चारणस्य पुराणविषयेऽप्युपदेशपूर्वकत्वनियमात् लाभेन तत्रैव पुराणशब्दादपि ठगिति भावः । ननु पुराणपारायणकर्तर्यपि प्रयोगात् तत्रातथात्वेन पठनमात्रेऽपि ठग्वाच्य इत्यत आह - **पाठानन्तर्यमिति** । **अत्रापीति** । **गुरौ उपदिशति** सति – आद्यन्तोपदेशादिद्वारा तदानीं कालान्तरे वा उपदेशं कुर्वति सति तदीयपाठनान्तर्यमत्र—पौराणिकादौ पुराणपारायणिकपरेऽपि **सम्भवेदि**त्यर्थः । आस्तिकस्य आद्यन्तोपदेशद्वारा समुदायोपदेशसम्पत्तिज्ञानेनैव पारायणे प्रवृत्त्या गुरूच्चारणाव्यवधानेन उच्चारणासत्त्वेऽपि उपदेशाधीनत्वात्मकस्य तदुच्चारणानन्तर्यस्य पारायणादावपि सम्भव



इति भावः । नन्वनुपदिष्टपुराणादिपठितरि पौराणिकादिप्रयोगानुपपत्तिरित्यत आह—**अन्यथात्वे** इति । **गौण** इति । पुराणाध्ययनकर्तृत्वस्य बाधेन तत्र पठितृमात्रे मुख्यार्थस्य आरोपेण पौराणिकशब्दप्रयोगः 'गौर्वाहीकः' इतिवत् । **गौणोऽस्तीति** । **एतत्तु अन्यत्** भवदभिमतासाधकमित्यर्थः । 'व्याकरणमधीते' इत्यादौ 'वैयाकरणः' इत्यादिवत् 'पौराणिक' इत्यस्य मुख्यार्थसम्भवोपपादनेन पठितृमात्रे शक्त्यन्तरलक्षणयोः अन्यतरकल्पनायां मानाभावात् गौणप्रयोगस्यापि आरोपितमुख्यप्रवृत्तिनिमित्तविषयत्वोक्तेश्च पराभिमतासिद्धिरिति भावः । तदाह—**ठगनुविधिरिति** । **उपक्षीणः**—कल्पनाविशेषासमर्थः । नहीयं रीतिरादेष्टरि भगवति सम्भवतीत्याह—**इत्थमिति** । **नात्रेति** । **अत्र**—आदेशपदार्थे भगवति आदेशाध्येतृत्वारोपप्रकारस्तु **न** सम्भवतीत्यर्थः । "श्रुतिः स्मृतिः ममैवाज्ञा" इत्युपबृंहणेन श्रुतिस्मृत्यादिरूपाज्ञाकर्तृत्वस्यैव लाभेन तद्वक्तृत्वस्यालाभात्, लाभे वा तत्र अण्प्रत्ययासिद्धेः, सिद्धौ वा जीवसाधारण्यापाताच्च, 'असङ्कोच'-न्यायेन सर्वाज्ञावक्तृत्वलाभवादेऽपि तादृशार्थस्य यथाश्रुतकरणघञन्तपरादेशशब्देन मुख्यतया सर्वाज्ञाकर्तृत्वबोधकेन सिद्धौ क्लिष्टगौणार्थकल्पनाया हास्यत्वाच्च नात्राण्प्रत्ययसाधनं युक्तम् । प्रत्युत "येनाश्रुतम्" इत्यादिवाक्यस्य निमित्तोपादानैक्यसाधनपरश्रीभाष्यासामञ्जस्यावहत्वाद् विरुद्धश्चेति भावः॥

अत्रेदं बोध्यं—अध्ययनं नाम उच्चारणानन्तरसनियमोच्चारणम्। आनन्तर्यं च—जन्यतज्जन्यसाधारणं प्रयोज्यत्वम्। तच्च संसर्गः। नियमश्च विहितदेशकालादिसम्बन्धः निषिद्धतदसम्बन्धश्च। इत्थञ्च 'आचार्याद् वेदमधीते' इत्यादौ 'आख्यातोपयोगे' इत्यनेन आचार्यस्य अपादानकारकत्वात् आचार्यजन्यं तदपादानकं वा वेदकर्मकमुक्तमध्ययनमिति बोधः। कारकाणां प्रधानक्रियान्वयस्यैव व्युत्पत्तिसिद्धत्वात्। आचार्यस्य उक्ताध्ययनजनकत्वं च स्वोच्चारणादिद्वारा, भ्रम्यादिद्वारा घटं प्रति दण्डादेरिव। अत एव तस्य क्रियाजनकस्वरूपं कारकत्वम्। 'पुराणमधीते'' इत्यादौ पुराणकर्मकं उच्चारणानन्तरसनियमोच्चारणं देवदत्तकर्तृकमित्येव बोधः। तत्र देवदत्तोच्चारणे उच्चारणानन्तर्यं च विधिप्राप्तोपदेशपूर्वकत्वात् बोध्यम्। 'आश्वलक्षणिकः' इत्यादावप्यर्थज्ञानपूर्वकशब्दज्ञानरूपदृष्टफलाय उपदेशापेक्षाऽस्ति। न हि तादृशग्रन्थे अर्थज्ञानोद्देशरूपं रागतो विनाऽध्ययनप्रवृत्तिः। नचात्र पठनस्य सनियमत्वाभावः;

"निशामुखे कलामात्रां यदि पश्येत् त्रयोदशीम्।
प्रदोषः स तु विज्ञेयः सर्वविद्याविनाशकृत्॥''

इत्यादिसामान्यनिषेधेन कालनियमादिलाभात् वेदित्रर्थे अणा नत्र इष्टसिद्धेश्च। एवञ्च अनुपदिष्टपुराणादिपठितरि पौराणिकः इत्यादिरारोपितप्रवृत्तिनिमित्तविषयत्वात् भाक्त इति।



एतेन पौराणिकः इत्यादिषु स्वतन्त्रपठन एव 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इति ठग्विधानसामर्थ्यादधीतेः उच्चारणमात्रेऽपि शक्तिकल्पनमावश्यकमित्यपास्तम्।

यत्तु-अधीतेः उच्चारणानन्तर्यम, उच्चारणश्चार्थः। तत्र उच्चारणानन्तर्यस्य स्वाश्रयत्व-स्वघटकोच्चारणकर्मकर्मकत्वोभयसम्बन्धेन उच्चारणेऽन्वयः। चैत्रकर्तृकसूत्रोच्चारणानन्तरं मैत्रेण पुस्तकनिरीक्षणादिना सूत्रस्याध्ययने 'चैत्रान्मैत्रः सूत्रमधीते' इति वारणाय—स्वाश्रयत्वेति। न हि तत्र मैत्रकर्तृकसूत्रोच्चारणे चैत्रकर्तृकसूत्रोच्चारणाधीनत्वरूपतदानन्तर्यमस्ति। एवमधीष्वेति पित्रुच्चारणानन्तरमुक्तरीत्या वेदमुच्चारयति मैत्रेऽपि 'वेदमधीते' इति वारणाय—स्वघटकेत्यादिनिवेशः। 'स्वाध्यायोऽध्येतव्यः' इत्यत्र उक्तोभयसम्बन्धेन उच्चारणाधीनत्वविशिष्टोच्चारणजन्यवर्णराशिग्रहणविषयस्वाध्यायः इति बोधः। कर्मकृतसमभिव्याहारे फलविशेष्यव्यापारबोधस्यैव अनुभवात्। 'उपाध्यायाद् वेदमधीते' इत्यादौ पञ्चम्यन्तसमभिव्याहारे तु अधीतेरुच्चारणमात्रमर्थः। 'पण्डितात् पुराणं शृणोति', 'रामादधीतसन्देशं' इत्यादौ उच्चारणाधीनत्वार्थकत्वस्य क्लृप्ततया अनन्यलभ्यस्यैव शब्दार्थत्वात्। तस्य च पञ्चम्यर्थस्य प्रागुक्तसम्बन्धद्वयेन धात्वर्थोच्चारणेऽन्वयः। तेन चैत्रकर्तृकसूत्रोच्चारणानन्तरं मैत्रेण पुस्तकनिरीक्षणादिना अन्यस्माद् वा सूत्राध्ययने 'चैत्रान्मैत्रः सूत्रमधीते' इत्यापत्तिः, अधीष्वेति पित्रुच्चारणानन्तरमाचार्यात् वेदमधीयाने 'पितुः वेदमधीते'

इत्यापत्तिश्च निरस्ता। एवं यत्राप्युच्चारणाधीनत्वं बाधितं, यथा—'पुराणमधीते' इत्यादौ—तत्राप्युच्चारणमात्रं धात्वर्थः। अत एव ततः ठग्विधिश्चरितार्थः। एवञ्च आदेशमधीते—उच्चारयतीत्यर्थे अणि उक्तरूपसिद्धिरित्युक्तम्।

तन्न। उच्चारणाधीनसनियमोच्चारणस्यैव अधीत्यर्थतापरश्रीभाष्यविरोधात्, अनेकशक्तिकल्पने गौरवाच्च। चैत्रकर्तृकसूत्रोच्चारणानन्तरं मैत्रेण पुस्तकस्य नासूत्रोच्चारणे(?) पूर्वोक्तरीत्या प्रयोज्यत्वसम्बन्धेन उच्चारणविशिष्टत्वाभावादेव प्रागुक्तापत्तिवारणात्, तत्राधीनत्वस्य धात्वर्थघटकस्य आश्रयतासम्बन्धेनान्वय इत्युक्तेः विफलत्वाच्च। न हि पुस्तकादिप्रयोज्योच्चारणे उच्चारणानन्तरप्रयोज्यत्वमस्ति। एवमधीष्वेति पित्रुच्चारणानन्तरं 'पुस्तकनिरीक्षणादिना वेदमुच्चारयति, नाधीते' इत्यापत्तिः। वेदोच्चारणे तादृशपित्रुच्चारणस्य जनकतज्जनकसाधारणप्रयोजकत्वाभावात्। न हि पुस्तकादिप्रयोज्योच्चारणे अधीष्वेत्युच्चारणं नियतपूर्वभावि, पुस्तकाहरणादिप्रवृत्तिद्वारा कचित् तत्त्वे तु अन्यथासिद्धत्वात् न तस्य तत्त्वम्। एवम् 'उच्चारणाधीनत्वं पञ्चम्यर्थः' इत्यपि न सम्यक्; अनुशासनाभावात्, अननुभवाच्च। 'पण्डितात् पुराणं शृणोति' इत्यादौ जन्यत्वम्, अपादानत्वशक्तिमान् वा पञ्चम्यर्थः। पुराणश्रवणे पण्डितस्य व्यापारद्वारा जनकत्वस्य कारकत्वाय वक्तव्यत्वात्, 'अपादाने पञ्चमी' इत्यनेन



अपादानत्वशक्तिमत एव तदर्थत्वलाभाच्च। 'पञ्चम्यर्थस्य उक्तसम्बन्धेनान्वयः' इत्यपि हेयमेव। अधीष्व इति पित्रुच्चारणानन्तरं आचार्याद् वेदमधीयाने 'पितुर्वेदमधीते' इत्यापत्तेः। तादृशोच्चारणे पित्रुच्चारणस्याचार्योच्चारणेनान्यथासिद्ध्या जनकत्वाभावादेव कारकत्वाभावेन 'आख्यातोपयोगे' इत्यस्याप्राप्त्या वारणात्। 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ 'अकथितं च' इत्यनेन ब्राह्मणस्य कर्मत्ववारणाय पुत्रेणान्यथासिद्ध्या क्रियाजनकत्वरूपकारकत्वलाभस्य शब्देन्दुशेखरे स्पष्टमुक्तत्वात्। अन्यथा "इषेत्वकमधीष्व" इति पित्रुच्चारणानन्तरं पुत्रेणाचार्यात् 'इषे त्वा' इत्यधीयाने "पितुः इषेत्वकमधीते" इत्यापत्तेः तादवस्थ्याच्च। उच्चारणाधीनत्वस्य 'पुराणमधीते' इत्यादौ बाधितत्वोक्तिरपि तथैव। उक्तरीत्या उपदेशकालिकोच्चारणाधीनत्वस्य सत्त्वात्। एवमेव गृहीतवेदस्य दृढतरसंस्कारवशात् वेदोच्चारणेऽपि 'वेदमधीते' इति प्रयोगः। परन्तु तत्र आचार्यादिति पञ्चम्यन्तस्य तादात्विकाध्ययनं प्रति संस्कारेणान्यथासिद्धत्वात् आचार्यादेः अजनकत्वात् कारकत्वाभावादप्रयोगः॥

एवमादेशमुच्चारयतीत्यर्थे अणि आदेश इति रूपसिद्धिरित्यपि तथैव। उक्तसनियमोच्चारणस्यैकस्यैव अधीत्यर्थतया 'स्वाध्यायोऽध्येतव्यः' इति नियमविधिबलादुपगन्तव्यत्वात्। अन्यथा पुस्तकनिरीक्षणादिजन्योच्चारणनिषेधफलकनियमत्वस्य पञ्चम्यन्तसमभिव्याहारे क्लृप्तोच्चार-

णार्थकाधीतिमादाय केवलपुस्तकदर्शनाद्यधीनवेदग्रहणनिषेधफलकतदुच्चारणनियमपरतया तस्यान्यथासिद्ध्या अलाभापत्तेः । अत एव 'माणवकः किमधीते ? उत पठती'ति संशयवतः लिङ्गाभासेन पठतीत्यनुमितिदशायां 'अधीते' इत्याप्तवाक्यात् तदनुदयः सङ्गच्छते। अधीतेरुच्चारणमात्रार्थत्वे काव्यादिकर्मकाध्ययनस्यापि सम्भवेन पठतीत्यनुमितिसमानाकारकत्वादधीत इत्याप्तवाक्येन तद्दार्ढ्यप्रसङ्गात्। मम तु परतन्त्रसनियमोच्चारणस्यैव अधीत्यर्थत्वात् तस्य काव्यादिकर्मकत्वासम्भवेन वेदादिकर्मकत्वतात्पर्यनिश्चयेन तद्घटिताधीतिपदजन्यशाब्दसामग्र्यां पठतीत्यनुमितेः तद्भिन्नविषयकत्वात् तदनुदयसङ्गतिः स्पष्टैव। एवञ्च आदिशेर्ज्ञानविशेषानुकूलशब्दमात्रपरत्वेऽपि 'आदेशमधीते आदेशः'' इति रूपसिद्धिः मुख्यतया दुरुपपादैव, 'पुराणमधीते' इत्यादितोऽस्य महावैषम्यात्, इति बोद्धव्यम् ॥ २० ॥

अथ एवमुच्चारणे 'तदधीते' इत्यणभ्युपगमेऽपि तत्र आदेशशब्दार्थानन्वयादपि अत्र तदाश्रयणासङ्गतिरित्याह—

**किञ्च प्रैषाभिधेयं यतनफलपदोच्चारणं ह्यादिशेः स्यात्**
**चेष्टारेखादिरूपं यतनफलपदज्ञापनं वाऽभिधेयम्।**
**अणुत्रास्याध्येतरीदं पठितरि कथमन्वित्यबुध्येत चिद्भिः**
**कर्मत्वेनेति गौणो यदि दिशतिरणा सार्द्धमेतर्हि हास्यम्॥**



किञ्चेति। प्रैषाभिधेयमिति। "प्रैषातिसर्ग" इत्यादिषु प्रैषपदार्थतया प्रसिद्धमित्यर्थः। यतनफलेति। यतनं फलं यस्य तादृशं, तज्जनकमिति यावत्। पदोच्चारणं- शब्दज्ञापनमादिशेः अर्थो हि इत्यर्थः। अयं भावः- आदिशेः ज्ञानानुकूलप्रवृत्तिफलकशब्दोच्चारणमेवाभिधेयं, न तु ज्ञानानुकूलशब्दमात्रम्। नापि ज्ञानजनकप्रवृत्तिमात्रं वा। शब्दानां नित्यत्वपक्षे तस्य साध्यत्वरूपक्रियात्वानुपपत्तेः। कदाचिद् आदेष्टरि सर्वदा आदिशतीति प्रयोगापत्तेश्च। उच्चारणं च वर्णाभिव्यक्तिजनको ध्वननरूपो यत्नविशेषः। ज्ञानञ्च प्रवर्तनारूपविधिविषयत्वप्रकारकम्। तच्च शाब्दधीरूपमिदमित्थं कुरु इत्यादिलिङाद्यघटितवाक्यजन्यम्। एवञ्च 'गुरुश्शिष्यमादिशति' 'स्वामी भृत्यानादिशति' इत्यादौ शिष्यादिकर्मको यत्किञ्चिन्निष्ठप्रवर्तनाविषयत्वबोधानुकूलशब्दोच्चारणरूपव्यापारो गुरुकर्तृक इत्यादिबोधः। प्रवर्तनाविषयकुशाहरणादिकर्मसम्बन्धितया तद्द्वारा उक्तव्यापारसम्बन्धितया वा शिष्यादेरुद्देश्यत्वात् सम्प्रदानत्वप्राप्तौ तदविवक्षायां 'अकथितञ्च' इति शिष्यादेः कर्मत्वविधानात्। दुहादिपरिगणनेऽपि शासिग्रहणस्यार्थपरत्वाश्रयणे इहापि तत्प्रवृत्तेः। तस्य स्वरूपपरत्वेऽपि आदेशनस्य प्रवर्तनारूपफलानुकूलज्ञानरूपव्यापाररूपतया 'गां दोग्धि पयः' इत्यादौ दुहादेर्व्यापारद्वयार्थकतामाश्रित्य गवादेः प्रकृतधात्वर्थफलाश्रयतावच्छेदककर्मत्वसाधनपरशेखररीत्या शिष्यादेरुक्तधात्वर्थतावच्छेदकज्ञानरूपफलाश्रयत्वेन उद्देश्यत्वात् कर्मत्वसिद्धेश्च।

एतेन गुरुणा कुशाहरणादेः शिष्यं प्रत्यादेशने 'कुशकाशमाहर' इति वाक्येन तु ते उदासीनस्य विरोधिनो वा, तथाज्ञाने कुशकाशाहरणमुदासीनं विरोधिनं वा आदिशतीति प्रयोगापत्तिरिति निरस्तम् । उक्तरीत्या तयोरनुद्देश्यत्वात् सम्प्रदानत्वकर्मत्वयोः अप्राप्तेः । 'ग्रामं गच्छन् तृणं स्पृशति' इतिवत् चैत्रमादिशन्नुदासीनादिकमादिशतीति तु इष्टमेव । यत्र घटादिकमङ्गुल्यादिना निर्दिश्य शिष्यमादिशति यत्रापि देशान्तरस्थं पत्रिकादिप्रेषणेनादिशति—तत्रापि शास्तुः सूक्ष्मोच्चारणसत्त्वात् अङ्गुल्यादिचेष्टारेखाविशेषादेः तदभिव्यञ्जकतया गुरुः अङ्गुल्यादिना आदिशति, पत्रिकया आदिशतीत्यादिप्रयोगः । अत एव "उच्चारितः शब्द एव प्रत्यायको नानुच्चारितः" इति 'अणुदित्' सूत्रभाष्यं सङ्गच्छते । चेष्टादिमात्रज्ञानात् शब्दज्ञानेन ततो बोधे तु तदसङ्गतिः स्पष्टैवेति ।

उक्तसूक्ष्मोच्चारणानभ्युपगमे, चेष्टादिमात्रेण शब्दज्ञानाभ्युपगमे च आदिशतीति प्रयोगनिर्वाहाय आदिशेः वाच्यस्वरूपमाह - चेष्टारेखादीति । आदिना उच्चारणं उक्तज्ञानविशेषानुकूलो ध्वननचेष्टालेखनादिरूपो यत्नफलो व्यापार एव वा तदभिधेयः स्यादित्यर्थः । ईदृशादेशस्य अणर्थाध्ययने अन्वयानुपपत्तिमाह - अण्वाच्येति । इदं उक्तमभिधेयं पठितरि उच्चारयितृरूपे अण्वाच्येऽध्येतरि कर्मत्वेन अन्वितस्य चिद्भिश्चेतनैः । कथं



बुध्यते - ज्ञायते इत्यर्थः । ननु उच्चारणपरत्वेऽपि 'शासनं श्रुत्वा' इतिवत् शब्दमात्रपरत्वाश्रयणाद् अणर्थाध्ययनेनान्वयोपपत्तिरत आह - गौण इति । अणा सार्धमिति । अणर्थाध्ययनस्य परतन्त्रसनियमोच्चारणरूपतया सिद्धान्तितत्वेन भगवति तद्बाधादुच्चारणे तस्यापि लक्षणैव गतिरिति प्रकृतिप्रत्यययोः उभयोर्गौणत्वमिति भावः । ततः किमित्यत आह—एतर्हि हास्यमिति । उपदेश्यपरत्वादिमतान्तरापेक्षया च क्लिष्टतमत्वादस्य कल्पनस्येति भावः । शासनं श्रुत्वेति च न शब्दमात्रलाक्षणिकमिति स्फुटीभविष्यति ।

यत्तु उपेक्षान्यज्ञानं शब्दश्च आदिशेरर्थः । तयोश्च नानुकूलत्वं संसर्गः, भोक्तव्यमिति शिष्योक्त्या गुरोर्भोजनादावुपेक्षान्यज्ञानेऽपि शिष्यो गुरुमादिशतीति प्रयोगप्रसङ्गात् । किन्तु, स्वाश्रयावधिकोत्कर्षाश्रयोच्चरितत्वं संसर्गः । तादृशसम्बन्धेन उपेक्षान्यज्ञानविशिष्टशब्द एव वा धात्वर्थः । तथा च 'गुरुश्शिष्यमादिशति' 'स्वामी भृत्यान् आदिशति' इत्यादौ शिष्यादिवृत्त्युपेक्षान्यज्ञानविशिष्टशब्दानुकूलकृत्याश्रय इति बोधः । यदि च द्वयोरुत्कर्षेऽपि एकेनापरस्यादेश इष्यते ! तदा स्वाश्रयावधिकापकर्षानाश्रयत्वं संसर्गघटकम् । अथ कुशकाशमाहरेति गुरोरुक्त्या शिष्यस्यैव विरोधिनः उदासीनस्य वा उपेक्षान्यज्ञानेऽपि गुरुर्विरोधिनमुदासीनं वा आदिशतीति प्रयोगापत्तिरिति चेन्मैवम् । स्वोद्देश्यकप्रवृत्त्यधीनत्वस्यापि संसर्गघटकत्वात् विरोध्यादेरुपेक्षान्यज्ञानोद्देशेन गुरुप्रवृत्तिविरहादुक्तदोषानवकाशादित्युक्तम् ।

तन्न । प्रवर्तनाबोधानुकूलशब्दोच्चारणस्यैव तदर्थतया मञ्जूषादितो लाभात् । आदिष्टोऽप्यालस्यादिना उपेक्षते इत्यनुभवविरोधाच्च । न हि 'सन्ध्यामुपासीत' इति विधेः भगवत्प्रीतिरूपेष्टसाधनत्वांशे अप्रामाण्यज्ञानवतो नास्तिकादेरुपेक्षान्यज्ञानानुदयेन तं प्रति शासनत्वं तस्य नास्तीति वक्तुं शक्यम् । तदकरणे तस्य प्रत्यवायाभावप्रसङ्गात् । न च तस्य तद्वाक्यात् तथा ज्ञानानुदयेऽपि विधेः सर्वाधिकारिकत्वादेव तज्ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दत्वसत्त्वात् तं प्रति शासनत्वं तस्य सुघटमिति वाच्यम् । एवमपि 'पुत्रस्ते जातः, धनं ते दास्यामि' इत्यादिवाक्यानामपि तथा ज्ञानायैव प्रवृत्तानां शासनत्वापत्तेः । न हि तत्र तथा वदन्तं पुत्रजननं धनदानं वा शास्ति इति वदन्ति । अपि तु तदुपरि वक्ष्यमाणवाक्यान्तरादपि तस्य उपेक्षानात्मकबोध एव भवतु इति प्रागिदं ब्रूते इति च वदन्ति ।

एवं तत्र प्रथमसंसर्गशिक्षणमपि चिन्त्यम् । भोक्तव्यमिति वाक्यात् गुरोः तथा बोधेऽपि तदुद्देशेन शिष्यवाक्याप्रवृत्तेः, तत्र प्राप्तकालार्थककृत्यप्रत्ययान्तसत्त्वेन भोजनं प्राप्तकालमित्येव बोधयितुं तत्प्रवृत्तेः । न हि प्रकृष्टे गुर्वादौ निकृष्टेन शिष्यादिना विधिघटितं लोके प्रयुज्यते । विधेः लोकतः परतन्त्रविषयत्वनियमात् । अत एव पुत्रादिना पित्रादिकं प्रति क्षेत्रं गच्छेत्युक्ते विधिघटितत्वभ्रमदशायां किं मामपि आदिशतीति क्रोधोक्तिः सङ्गच्छते । तत्परिहाराय 'नाहमादिशामि, किन्तु अस्यायमवसर इति



बोधयामि' इति पुत्राद्युक्तिश्च । न हि तथा बोधेऽपि तस्य शासनरूपत्वमिष्टम् । न च विधेः परतन्त्रविषयत्वं नियममात्रेण पारतन्त्र्यादेर्विधिपदार्थघटकत्वं वक्तुं शक्यम् जलाहरणादेः छिद्रेतरकरणकत्वनियमसत्त्वेन तस्यापि तदर्थतावच्छेदकत्वापातात् ।

एवं द्वितीयसंसर्गनिवेशोऽपि विफलः । विरोध्यादेः तथा ज्ञानेऽपि तस्य तादृशज्ञानरूपधात्वर्थफलाश्रयत्वेन अनुद्देश्यत्वात् 'कर्तुरीप्सिततमम्' इत्यस्याप्राप्तेः । 'अकथितं च' इत्यस्यापि तदुद्देश्यत्व एव सम्प्रदानत्वप्राप्त्या तदविवक्षायामेव कर्मत्वप्रापकतया अत्र अप्राप्तेः । 'तथायुक्तं च' इत्यनेन तु 'ग्रामं गच्छन् तृणं स्पृशति' इतिवत् चैत्रमादिशन् मैत्रमादिशतीति तु इष्टमेव । प्रत्युत तन्निवेशे तदसिद्धिः दोषान्तरम् । न च चैत्र आदिष्टे मैत्रः आत्मानं आदिष्टं भ्राम्यतीति प्रयोगानुपपत्तिरिति वाच्यम् । क्तप्रत्ययार्थकर्मत्वस्य 'कर्तुरीप्सिततमम्' इत्यनेन विहितरूपताज्ञाने तथात्वबाधेन भ्रमत्वोपपत्तेः । 'तथायुक्तम्' इत्यनेन विहितकर्मत्वरूपताज्ञाने, 'चैत्रे आदिष्टे मैत्रः स्वमेवादिष्टं अमनुत' इति प्रयोगः ।

एवं तादृशशब्द एव तदर्थ इत्यपि चिन्त्यम् । शब्दनित्यतामतसाधारण्याय उच्चारणपर्यन्तस्य तदर्थतावश्यम्भावात् । नच चेष्टादिना शास्तीत्यादौ सूक्ष्मोच्चारणानभ्युपगममतसाधारण्याय शब्द एव तदर्थः कुतो न स्यादिति वाच्यम् । "उच्चारितः शब्द

एव प्रत्यायकः" इति भाष्याविरोधाय बोधकाले सूक्ष्मोच्चारणस्य अवश्याभ्युपेयतया तस्य शासितर्यपि सत्त्वावश्यंभावेन च तन्मतशैथिल्यात्। शब्दनित्यत्वं च वेदनित्यत्वाय शब्दविशेषे सिद्धान्तिभिरप्याश्रितम्। स च शब्दो ध्वनिर्विलक्षणो वा इत्यन्यत्। नित्यत्वं च प्रवाहतः स्वरूपतो वेति च। तथा उक्तमतसाधारण्यलाभाग्रहेऽपि प्रवर्तनाबोधौपयिकव्यापारस्यैव तदर्थत्वस्य उक्तयुक्त्या वक्तव्यत्वाच्च। सूक्ष्मोच्चारणमनभ्युपयतां ध्वनेरेव शब्दत्वात् तस्य चेष्टादिमात्रेणालाभाच्च। आख्यातस्य 'फलव्यापारयोः धातुराश्रये तु तिङः स्मृताः' इत्युक्तरीत्या आश्रयार्थकताया एव सूत्राक्षरतो लाभेन तदैव स्वरसतो भावप्रधानत्वोपपत्तौ च तन्मतसाधारण्याय शब्दस्य तदर्थतानौचित्याच्च। न हि तादृशशब्दो देवदत्ताद्याश्रयक इत्यादिबोधः सम्भवति। ध्वनेराकाशाश्रयत्वात्। 'श्रुतिः स्मृतिर्ममैवाज्ञा' इत्यादि तु श्रुत्यादिशब्दस्य ग्रन्थविशेषपरत्वे आज्ञाशब्दस्य भावाङन्तस्य उक्तव्यापारविशेषपरत्वात् तद्बोधकेन ग्रन्थविशेषणाभेदाध्यवसायपरं, राजाज्ञेयं पत्रिकेतिवत्। तस्य श्रुत्यादिबोध्यपरत्वे आज्ञाशब्दस्य कर्माङन्तस्य उक्तव्यापारविशेषविषयपरत्वात् श्रुत्यादिबोध्यसन्ध्योपास्त्यादिः मदाज्ञाविषय इत्येवंपरम्। अत एव तत्राज्ञापनेऽर्थे ममैवेति कर्तृषष्ठ्यर्थान्वयसङ्गतिः। अन्यथा तस्य शब्दरूपत्वे श्रुतिरूपे शब्दे भगवत्कर्तृकत्वस्यानुपगमेन बाधात् अनन्वयप्रसङ्गात्, उक्तरीतेः सर्वैः शरणीकर्तव्यत्वात्। न हि भगवत्प्रोक्तत्वमात्रेण श्रुतेः तत्कर्तृकत्वं सिद्धान्तसम्मतम्। "ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम्"



इत्यत्र शृणोतिरभ्युपगमात्मकज्ञानविशेषपरः ; न तु श्रावणप्रत्यक्षपरः। तस्य शासितृसाधारण्यात् ; 'स्त्रीवचः पति शृणोति' इतिवत्। न हि पतिवचः स्त्रिया श्रोतव्यमिति विधेः तच्छ्रवणप्रत्यक्षजननमात्रेण चारितार्थ्यं दृश्यते।

एतेन उच्चारणपर्यन्तस्य तदर्थत्वे ध्वनेरेव शब्दपर्यन्तत्वसिद्धान्तात् तदुत्पत्तिजनकव्यापारविशेषस्य उच्चारणपदार्थतया तस्य दर्शितप्रयोगे शृणोतिकर्मताप्रतीतिविरोधः— इत्यपास्तम्। एवं च एतत्प्रयोगबलेन शब्दमात्रस्य तदर्थत्वप्रत्याशा न कार्या इति सिद्धम्।

वस्तुतस्तु **जिज्ञासाधिकरणसिद्धान्तभाष्ये** "प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकम्" इत्यारभ्य "केनचित् पुरुषेण हस्तचेष्टादिना पिता ते सुखमास्ते इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित् ज्ञापने प्रवृत्तः 'पिता ते सुखमास्ते' इति शब्दं प्रयुङ्क्ते। पार्श्वस्थोऽन्यो व्युत्पित्सुः मूकवच्चेष्टाविशेषज्ञः तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वाऽनुगतः तज्ज्ञापनार्थप्रयुक्तमिमं शब्दं श्रुत्वाऽयं शब्दः तदर्थबुद्धिहेतुरिति निश्चिनोति" इति श्रीसूक्त्या चेष्टाया एव शब्दनिरपेक्षमर्थबोधकत्वलाभात् शब्दपर्यन्तार्थकत्वे अङ्गुल्यादिना आदिशतीति प्रयोगानुपपत्तिर्दुर्वारा। इत एवारुचेः यतनफलपदज्ञापनं वेति वाकारः प्रयुक्तः। स च यतनफलज्ञापनमेव तदभिधेयं, न तु पदज्ञापनमेवेति नियम इति सूचनायेति तत्त्वम्॥

एवं शिष्यादिवृत्तितादृशज्ञानविशिष्टशब्दानुकूलकृत्याश्रय इति बोधवर्णनमपि चिन्त्यम् । "भावप्रधानमाख्यातम्" इति स्मृतिविरोधात्। 'अयाक्षीद् देवदत्तोऽपेहि' 'पश्य मृगो धावति' इत्यादौ एकवाक्यत्वसिद्धये तदनुसरणावश्यंभावाच्च । अत एव पचतिरूपमित्यादौ रूपवाद्यर्थप्रशंसादेः धात्वर्थे अन्वयः । अन्यथा प्रधानभूताख्यातार्थे अन्वयापत्तौ द्विवचनाद्यापत्तेः । धात्वर्थस्य तु एकत्वादेकवचनमेवेति "रूपप्" सूत्रे भाष्ये स्पष्टम् ॥ ननु आख्यातार्थकृतावन्वयेऽपि तस्या धात्वर्थतायामिव तिङर्थतायामप्यसत्त्वभूतत्वेन लिङ्गसंख्याद्यनन्वयात् कस्यापि वचनस्य अप्राप्तौ औत्सर्गिकमेकवचनमेव भविष्यति । अत एव तत्र धात्वर्थान्वयेऽपि औत्सर्गिकमेकवचनमेवेति भाष्ये सिद्धान्तितम् । न चाख्यातस्य कृत्यर्थकत्वमसिद्धमिति वाच्यम् । 'कर्तरि कृत्' इत्यनुवर्तमाने 'लः कर्मणि च' इत्यनेनैव लत्वेन कर्तृत्वशक्तिबोधनात्। न च कर्तृपदेन क्रियाश्रयोपस्थित्या क्रियाया धातुना लाभादाश्रय एवास्य शक्तिः, अनन्यलभ्यस्यैव शब्दार्थत्वात्, जानातीत्यादौ आश्रयार्थकत्वस्य क्लृप्तत्वाच्चेति वाच्यम्। आश्रये शक्तिक्लृप्तौ आश्रयत्वे शक्यतावच्छेदकत्वस्य आश्रयतात्वे शक्यतावच्छेदकतावच्छेदकत्वस्य च कल्पनापत्तौ गौरवेण लाघवात् कृतित्वेन कृतौ शक्तिसिद्धेः। कृतित्वस्य जातिरूपत्वेन स्वरूपतः शक्यतावच्छेदकत्वसम्भवेन गौरवानवकाशात् । न च 'चैत्रः पचति' इत्यादावाख्यातार्थकृतेः प्रथमान्तार्थे आश्रयतासम्बन्धेनान्वयेन



इष्टसिद्धावपि प्रकृते रूपवाद्यन्ताख्यातोपस्थितकृतेः नामोपस्थितत्वेन अभेदान्वयापत्त्या कृत्याश्रयरूपे कर्तर्येव शक्तिरुपेयेति गौरवं तदवस्थं, कृतित्वकृतितदाश्रयत्वानां शक्यतावच्छेदकत्वापत्तिरिति वाच्यम् । तत्रापि कृतेः तिङुपस्थितत्वेन तिङां नामत्वाभावेन समानविभक्तिकानां अर्थविषयाभेदान्वयनियमस्याप्रसङ्गेन दोषाभावेन कृतावेव सर्वत्र शक्तिस्वीकारात्; 'पाचको देवदत्तः' इत्यादौ ण्वुलादेस्तु सुब्व्यवहितपूर्वत्वेन अनुसन्धीयमानत्वमेव नामत्वमिति तदर्थकर्तुरभेदेनैव देवदत्तादौ अन्वय इति न दोषः ।

एतेन नामत्वस्य स्वाव्यवहितपूर्वत्वसम्बन्धेन सुब्विशिष्टतारूपत्वे 'राजा सुन्दरः' इत्यादौ अभेदान्वयानुपपत्तिः । तत्र सुपो लोपेन तत्सम्बन्धेन तस्य तद्विशिष्टत्वाभावात् । तस्य प्रातिपदिकतारूपत्वे 'पाचकः चैत्रः' इत्यादावेव अनुपपत्तिः । न हि तत्र पाचक इति प्रातिपदिकात् कर्त्रुपस्थितिः, अपि तु ण्वुलैव । 'धुक् चैत्रः' इत्यादौ लुप्तक्विबुपस्थितकर्त्रादेः 'दुह्' इत्याकारकप्रातिपदिकोपस्थितत्वाभावादभेदान्वयानुपपत्तिश्च इति निरस्तम् । न च आख्यातस्य कृत्यर्थकत्वे 'काष्ठं पचती'त्यादौ बोधानुपपत्तिः, तत्र व्यापारे लक्षणाश्रयणात् । न हि, 'चैत्रः पचति' इतिवत् 'काष्ठं पचति' इति स्वरसतः प्रयुज्यते । एवञ्च रूपवाद्यर्थप्रशंसादेः आख्यातार्थकृतावन्वयेऽपि न क्षतिरिति चेन्न ॥ 'रूपप्' सूत्रभाष्याविरोधात्, धात्वर्थ एव तदर्थान्वयानुभवाच्च, 'रथो गच्छतितरां' इत्यादौ तत्रापि तथैव वक्तव्यत्वाच्च,

वैरूप्याच्चेश्च। न च आख्यातार्थकृतिविशेषणतया धात्वर्थबोधेऽपि 'पाचकतरः' इत्यादौ तरबाद्यर्थप्रकर्षादिवदन्वयः सुलभ इति वाच्यम्। तत्रापि त्वन्मतरीत्या तरप्प्रकृतिभूतण्वुलर्थ एव तदर्थान्वयलाभात्। न हि प्रत्ययानां प्रकृत्यतिरिक्तार्थत्वेनान्वयः सम्भवति। भाष्यसिद्धान्तरीत्या तु प्रशंसादिविशिष्टप्रकृत्यर्थस्यैव रूपबादिसमभिव्याहारमहिम्ना बोधात् पाचकादेरेव रूपबादिविध्युद्देश्यतावच्छेदकाक्रान्ततया समुदाय एव प्रकृतित्वसत्त्वाच्च न दोषः। किञ्च व्याकरणभेदेन स्थानिनां अव्यवस्थितत्वेन आदेशमात्रादेव बोधानुभवेन च तिबादीनामेव कृतिवाचकत्वं वक्तव्यम्। अत एव यत्र तिबादेरेव वाचकताग्रहः, तदनुरोधेन तिबादिजन्योपस्थितिघटितसामग्र्याः शाब्दोपधायकत्वावश्यम्भावेन लकारजन्योपस्थितिघटितसामग्र्यन्तरस्य तत्त्वकल्पने गौरवात् तिबादेरेव ताद्रूप्येण शक्तिरुचितेति गदाधरोक्तं सङ्गच्छते। तथा च 'रथो गच्छति', 'काष्ठं पचति' इत्यादावाश्रयत्वबोधानुरोधेन तत्रापि शक्त्यापत्तौ तिङो नानार्थत्वापत्तिः। न च इष्टापत्तिः; गौरवात्; 'कर्तरि' इत्याद्यनुशासनस्य एकरूपविषयकत्वावश्यम्भावाच्च। किञ्च 'युष्मद्युपपदे समानाधिकरणे' इत्यादिना च तिबादिसमानाधिकरणयुष्मदाद्यर्थान्वय एव तिबादीनां साधुत्वविधानेन 'त्वं पचसि' इत्यादौ तिङ्युष्मदोस्तत्त्वासम्भवः, अभेदेन एकधर्मिबोधकत्वाभावात्। न च धर्मभेदेन एकधर्मिबोधकत्वमेव तत्त्वम्; अत्र च तिबाद्यर्थकृतेराश्रयतया युष्मदाद्यर्थान्वये



तिङ्युष्मद्भ्यां चैत्रत्वकृतिरूपधर्मभेदेन चैत्ररूपैकधर्मिबोधकत्वाबाधेनादोष इति वाच्यम्। तत्र 'लटः शतृशानचौ' इत्यनेन अप्रथमासामानाधिकरण्याभावेन शत्राद्यभावेऽपि 'चैत्र आत्मना पचति' इत्यादौ आत्मन उक्तरीत्या समानाधिकरणत्वात् तिङः तत्र शत्राद्यापत्तेर्दुर्वारत्वात्। न च तिङर्थविशेष्यतया अर्थबोधकत्वमेव तत्त्वम्। तथा सति 'समानाधिकरण'ग्रहणवैयर्थ्यात्; 'युष्मद्युपपदे' इतीयतैव युष्मदाद्यर्थान्वितस्वार्थविवक्षायां मध्यमादिरिति बोधसम्भवेनातिप्रसङ्गाभावात्। न च तत्रापि तत् तुल्यं, कुतर्ककल्पितकृत्यर्थकत्वस्य तिङ्यभावबोधकतयैव तत्सार्थत्वात्, मीमांसकाद्यभिमतव्यापारार्थकत्वनिरासार्थतया सार्थक्याच्च। किञ्च 'अनभिहिते कर्तरि तृतीया' इत्यादिना 'चैत्रः पचति' इत्यादौ तृतीयादिव्यावृत्तिः दुर्घटा, तिङा कर्तुरनभिधानात्।

न च अभिधानान्न कर्त्रादिविषयकशक्त्यनुरूपकत्वं, असम्भवात्; 'चैत्रेण पच्यते' इत्यादिस्थात्मनेपदस्य पचत इत्यादिस्थात् ततो विशेषाभावात्। यागादिस्वरूपाज्ञानेऽपि बोधानुभवान्न तदुत्तरगतशब्दत्वादिकं तच्छक्यतावच्छेदकम्, यशब्दोत्तरत्वाभावादिकं तु 'दीप्यते' इत्यादौ कर्त्रर्थकतशब्दादिसाधारणम्। नापि कर्त्राद्यर्थबोधकत्वं, 'चैत्रेण पच्यते' इत्यादौ तृतीयार्थकर्तृबोधेऽपि तादृशबोधस्य तद्वाक्यजन्यत्वेन तद्घटकतया तिङमपि तज्जनकत्वाहानेरुक्तदोषतादवस्थ्यात्। नापि तिङाद्यप्रयोज्यविषयताश्रयत्वं तत्प्रयोज्यविषयतानाश्रयत्वं वा कर्त्रादौ तदनभिहितत्वम्। 'चैत्रः पचति' इत्यादावपि तृतीयापत्तेः। तत्र चैत्रविशेषणतया वा

कर्तृत्वविषयता आश्रयतासम्बन्धावच्छिन्ना, तस्याः केवलाख्यातजन्यतावच्छेदकत्वस्य पचतीत्यवान्तरवाक्यार्थबोधासाधारण्यात् दुर्लभतया तत्र उक्तानभिहितत्वापत्तेः, प्रथमान्तपदसमभिव्याहृताख्यातजन्यतावच्छेदकतयैव धर्मिविषयतानिरूपितकर्तृत्वविषयताया आख्यातप्रयोज्यत्वेऽपि 'चैत्रेण पच्यते तण्डुलः' इत्यादिवाक्यार्थबोधस्य तद्वाक्यजन्यतया तद्बोधीयधर्मिविषयतायाः तदवच्छेदकत्वात् तदन्तःपातिकर्तृत्वविषयतायाः तत्सम्बन्धेन तस्याः तिङादिप्रयोज्यत्वादुक्तानभिहितत्वानापत्तेश्च। तस्मात् प्रातिपदिकार्थविशेषणतया कर्तृत्वे अविवक्षिते तृतीयेति तत्सूत्रार्थस्य वाच्यतया नोक्तापत्तिरिति वाच्यम्।

तिङादिवाच्यतया कर्त्रादावविवक्षिते तृतीयेति, तिङादिवाच्यतावच्छेदकाश्रयत्वावच्छिन्ने कर्तृत्वादिशक्तिमद्रूपे कर्त्रादौ तृतीयेति वा बोधस्यैव तत्सूत्राक्षरतो लाभात्। आद्ये 'चैत्रेण पच्यते' इत्यादौ कर्तरि तशब्दस्य कर्तृवाचकत्वेऽपि 'लः कर्मणि च' इत्यादिना कर्मवाचकत्वस्यापि बोधनात्। तथा कर्त्रर्थविवक्षायां कर्त्रादौ तद्वाच्यतया वक्तृबुद्ध्यविषयत्वेन तत्त्वसम्भवात्। 'सृजत्यात्मानमात्मना' इत्यादौ वाचकभेदेन वाच्यभेदवत् वाच्यभेदेन वाचकभेदात् एतत्तिङ्वाच्यत्वस्य कर्त्रादावलाभाच्च यथाश्रुतसामञ्जस्यात्। द्वितीये दोषशङ्काया एव अभावाच्च। प्रातिपदिकार्थविशेषणतया अविवक्षित इति च तदर्थत्ववर्णनस्य विफलत्वाच्च। न हि प्रातिपदिकात् परत्वेन जायमानविभक्तेः तदर्थविशेषणार्थकत्वा-



सम्भवः। 'राज्ञः पुरुषः' इत्यादाविव संख्यातिरिक्तविभक्त्यर्थस्य प्रातिपदिकार्थविशेष्यतयैव भानाभ्युपगमात्, 'तिङ्कृत्तद्धितसमासैरनभिहिते कर्तरि' इति वाक्यात् शब्दमर्यादया भवदुक्तार्थस्य दुर्लभत्वाच्च। इत्यलं प्रमाणगणकान्तारपथकान्दिशीकद्रावणेन ॥ २१ ॥

अथैकया आदेशिन्शब्दात् प्रज्ञाद्यणि आदेश इति सिद्धिशङ्कामनुवदति—

आदेष्टुं शीलमस्येत्यधिगतणिनिकादादिशेरण्यपीदं
प्रज्ञादित्वात् तमप्याकृतिगणमवदन् आग्रहायण्यहान्यौ।
नार्थो हि स्वार्थिकानामत इनणिविधिर्नेह टेर्लोप एव
स्यादित्येतस्य सिद्धिर्बुधगुरुकविभिर्दुर्निवारा भवेद्धि॥ २२

आदेष्टुमिति। शीलमस्येति। अस्मिन्नर्थे अधिगतणिनिकात् 'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन प्रवृत्तणिनिविशेषात्; तत्र 'सुपि' इत्यनेन उपसर्गभूतसुबन्तस्यापि ग्रहणात् तत्प्रवृत्तिरिति भावः। आदिशेर्णिन्यन्तात् प्रज्ञादित्वादण्यपीदं सिद्धं चेदिति शेषः। आदेशिन्शब्दस्य प्रज्ञादित्वे किं मानम्? अत आह-तमपीति। प्रज्ञादिगणमपि आकृतिगणं, आग्रहायण्यहान्यै - आग्रहायणीशब्दस्य अत्यागाय। सङ्ग्रहायेति यावत्। अवदन्, ग्रन्थकृत इति शेषः। नन्वथापि 'इनण्यनपत्ये' इति प्रकृतिभावापत्त्या आदेशिन इत्यापत्तिरत आह-नार्थो हीति। हि-यतः स्वार्थिकानामर्थो नास्ति, अत इह इनणि

विधिर्न। किन्तु टेर्लोप एव स्यात् इत्यर्थः। 'अर्थवद्ग्रहण' परिभाषया इनणीत्यत्राणः अर्थवत एव ग्रहणात् 'अनपत्य' इति पर्युदासेनापत्यातिरिक्तस्य तत्सदृशप्रकृत्यर्थतानापन्नस्यैवार्थस्य ग्रहणाच्च स्वार्थिकाणि तत्रासम्भव इति तदप्रवृत्तिरिति भावः। इति इत्थं च एतस्य सिद्धिः बुधगुरुकविभिर्देवताभेदेऽपि दुर्निवारा दुस्त्यजा भवेत्। हि इति प्रकृतप्रशासितृपरत्वस्याप्ख्यं द्योतयति ॥ २२॥

उक्तशङ्कां निरसितुमेकया 'इनण्यनपत्यये' इत्यस्य अप्रवृत्त्युक्तेः निर्दलत्वमाह—

मैवं व्याघात एव ब्रुवति बुधवरे स्वार्थिकानर्थकत्वं
स्वार्थानुक्तौ कथं तद्व्यवहृतिघटना प्रत्ययत्वं कथं वा।
व्यावक्रोश्यादिके ङीप् कथमपि न भवेदन्यथेनण्विधिर्वा
किं स्यात् सारावणादौ कथमपि न तथाऽऽग्नीद्ध्रसाधारणाद् ङीप् ॥ २३॥

मैवमिति। एवम्-उक्तप्रकारेण मा शङ्क्यमिति शेषः। कुत इत्यत आह-व्याघात इति। स्वार्थिकानर्थकत्वं स्वार्थकत्वविशिष्टानामनर्थकत्वं अर्थवत्त्वाभावं ब्रुवति वदति बुधवरे प्राज्ञे। अनेन एवं वादानर्हत्वं सूचितम्। एष वक्ष्यमाणो व्याघातः। तमेवोपपादयति - स्वार्थानुक्ताविति। स्वीयप्रकृत्यर्थस्य अनुक्तौ-अनभिधाने कथं तद्व्यवहृतेः स्वार्थिक इति व्याहृतेः घटना लाभः। दूषणान्तरमाह - प्रत्ययत्वमिति। कथं वा प्रत्ययत्वमित्यन्वयः। ननु 'स्वार्थे भवः' इति व्युत्पत्त्या प्रकृत्यर्थवाचकत्वाङ्गीकारेण स्वार्थकत्वप्रत्ययत्वयोः सिद्धावपि 'अर्थवद्ग्रहण' परिभाषायां ईदृशार्थस्य ग्रहणाभावादत्र 'णेरणि' इत्यस्य प्राप्तिरत आह - व्यावक्रोशि इति। ङीविति। 'टिड्ढाणञ्' इत्यत्राञ्ग्रहणेनार्थवतः प्रत्ययस्यैव ग्रहणे अस्य अञः 'णचः स्त्रियाम्' इति विहितात्यन्तस्वार्थिकत्वेन उभयरूपत्वाभावात् अग्रहणापत्तेरिति भावः। एतेन प्रत्ययाधिकारस्य 'णचः स्त्रियाम्' इत्यारभ्य निवृत्तिकल्पनया 'अपत्यादिभ्यश्च' इति विहितस्य प्रत्ययत्वाभावात् 'इनण्यनपत्ये' इत्यस्याप्राप्तिरिति अपास्तम्। 'व्यावक्रोशी' इत्यत्र आदिवृद्ध्यनापत्तेश्च। न च प्रत्ययाधिकारनिवृत्तावपि तद्धिताधिकारानिवृत्त्या तत्सिद्धिरिति वाच्यम्। तद्धितत्वस्य प्रत्ययग्रहणत्वाभावापत्त्या 'प्रत्ययग्रहण' परिभाषानापत्त्या गोः शृङ्गित्वं इत्यादौ वाक्यस्य समासग्रहणनियमेन अप्रातिपदिकत्वसिद्धावपि गोरन्यत्र इत्यादौ 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वापत्तौ समुदायादकचि 'चितस्सप्रकृते' इति 'चितः' इत्येकस्वर्यापत्तेः। अन्यथा इनण्विधिरिति। 'प्राग्दीव्यतः' इतिवत् 'इनणि' इति सूत्रैकदेशानुकरणं, तत्सूत्रात्मको विधिरित्यर्थः। सारावणादाविति। आदिना वैसारिणपरिग्रहः। अत्यन्तस्वार्थिकाणन्ते किं स्यात्। किमिति क्षेपे। न स्यादेवेत्यर्थः। 'सन्निपात' परिभाषया टिलोपाप्राप्त्या तत्सिद्धिरिति शङ्क्यम्, 'कृन्मेजन्त' सूत्रे तत्परिभाषादोषपरिगणने 'वर्णाश्रयः प्रत्ययो वर्णविचालस्य अनिमित्तम्' इत्यनेन वर्णस्वाश्रयैकानेकाश्रयप्रत्ययविषयेण तदनित्यताफलत्वबोधनेन तदप्राप्तेः

अत एव अध्यात्मादिषु 'अनश्च' इति टचि टिलोपसिद्धिः । 'विसारिणो मत्स्या' इत्यनेन वैसारिण इत्यादौ तत्परिभाषाप्रसक्तेरभावाच्च । यत्तु 'विसारिणो मत्स्या' इत्यत्र 'इनुणः' इत्यनुवर्त्य इनुणन्तवद् भवतीति टिलोपाभावातिदेशपरतया व्याख्यातं - तच्चिन्त्यम् । विसारी मत्स्य इत्येव सिद्धे पञ्चमीनिर्देशाण्पदानुवृत्त्योः वैयर्थ्यात् इनुणन्तवत्त्वातिदेशेनैवाणोऽपि सिद्धेः । उक्तरीत्या इनुणन्तोऽपि 'इनण्यनपत्ये' इत्यनेनैव प्रकृतिभावसाधनावश्यंभावेन उक्तकल्पनावैफल्याच्च । यदपि प्रज्ञादिगण एव 'इनुण् विसारि मत्स्ये' इति पठितव्ये पृथगुरुभूतयोगद्वयकरणसामर्थ्यात् सांराविणं वैसारिण इत्यत्र टिलोपाभाव इत्युक्तं—तदपि चिन्त्यम् । 'अषडक्ष' इति सूत्रे भाष्ये "के पुनर्नित्याः प्रत्ययाः ? तमादयः प्राक्तनः, क्यादयः प्रागुनः, अनादयः प्राङ्नयः, बृहतीजात्यन्ताः, समासान्ताश्च" इति प्रत्ययनित्यतास्थलपरिगणनात् तदलाभापत्त्या प्रज्ञादिगणे अस्याणो निवेशानुपपत्तेः । न हि प्रज्ञः प्राज्ञ इतिवत् 'विसारि संरावि' इत्यण्रहितप्रयोग इष्यते । अथ प्रकृत 'प्रज्ञादि' सूत्रे अनुवर्तनीयस्य 'तद्युक्तात् कर्मणः' इत्यण एव प्रत्ययत्वमावश्यकमित्याह । कथमपीति । आग्नीध्रसाधारणादिति । 'आग्नीध्रसाधारणादञ्' इति वचनेन 'तद्युक्तादिति' सूत्रपठितेन विहिताञन्तात् ङीपि कथमपि न स्यादित्यर्थः । इदं कार्मणमित्यत्रारतांति (?) प्रकृतिभावासिद्धेरपि उपलक्षणम् । एतेन तद्युक्तं कार्ममिति वक्तव्ये 'कर्मणोऽण्' इति वचनसामर्थ्यात् टिलोपाभाव इत्यपास्तम् ।



'कार्मस्ताच्छील्ये' इति अत्राण्प्रत्ययस्य च्छत्रादित्वात् सिद्धत्ववत् इहाणः केनाप्यविधानेन डप्रत्ययविधिपरतापत्तौ "प्रज्ञादिभ्यश्च" इत्यत्र तस्यैव अनुवृत्त्यापत्तेः अणः स्फुटविधानावश्यम्भावात् तत्सामर्थ्यवर्णनायोगाच्च । 'प्रज्ञादिभ्योऽपि' इत्युक्त्वा तद्युक्तं कार्ममित्युक्तौ तु 'कर्मण उकञ्' इत्यादौ इव स्फुटविधिसम्भवे कार्ममिति निपातनसामर्थ्येन तद्युक्तार्थे अण्रहितप्रयोगस्य असाधुतापत्तेश्च इति अन्यत्र विस्तरः ॥ २३ ॥

नन्वेवं उक्तादेशिन्शब्दात् 'अच् प्रत्यन्ववपूर्वात् सामलोम्नः' इति सूत्रे अजिति योगविभागसत्त्वात् समासान्ताच्प्रत्यये उक्तप्रकृतिभावशङ्कैव नेति टिलोपे आदेश इति सिद्धिरिति शङ्कामनूद्य निराचष्टे—

नन्वच्प्रत्यन्ववेति हि अजिति विभजनं कौमुदीकृत्स्फुटोक्तं
साफल्यं स्पष्टमष्टागवमुखघटनात् पद्मनाभादिलाभात् ।
मैवं भाष्यानभीष्टेऽपि च तदुपगमे तन्न सर्वत्र हि स्याद्
ऊर्ध्वस्यानर्थकत्वाद् गुरुविमतबहुप्रक्रियैकाविशेषात् ॥ २४ ॥

नन्विति । 'अच् प्रत्यन्वव' इति सूत्रे अजिति - विभजनं योगविभागः "कृष्णोदक्पाण्डुसंख्यापूर्वाया: भूमेः" इत्यादिना भूमिशब्दः समासे कृष्णभूम इत्यादिसिद्धिफलकः । नन्विहाच्प्रवृत्तिः कथं ? कृष्णभूमादिभ्योऽन्यत्वादिति, तत्राह-कौमुदीकृदिति । "कृष्णोदक्" इति वचनाविषयेऽपि अच्प्रत्ययार्थतया तेन स्फुटोक्तमित्यर्थः । तदाह-

तत्साफल्यमिति । अष्टागवमिति । 'गवि च युक्ते' इत्यनेन आत्वे युक्त इत्यर्थलाभाय बहुव्रीहित्वाश्रयणपक्षे अनेन योगविभागेनाजितत्वे:(!)। तत्र समाहारद्विगुत्वपक्षेऽप्याह-पद्मनाभादिति । श्रीभगवन्नामसहस्रादौ 'पद्मनाभोऽरविन्दाक्षः' इति प्रसिद्धत्वात् नाभिपर्यायनाभशब्दकल्पनायां पद्मनाभिरित्यस्यापि नामत्वापत्तेश्च योगविभागः आवश्यक इति भावः । इत्थमनुशङ्क्य निरस्यति - मैवमिति । भाष्यानभीष्टेऽपीति । तदुपगमे - योगविभागाभ्युपगमे भाष्यानुक्तेऽपीत्यर्थः । तत् विभजनं न सर्वत्र स्यात् । हि इति प्रसिद्धे । तामेव विशदयति - ऊर्ध्वस्येति । "प्रत्यन्चव" इत्यंशस्य गवाक्षादिसिद्ध्यर्थस्य, "अक्ष्णोऽदर्शनात्" इत्यादेश्च अनर्थकत्वापत्तेः, तस्य योगविभागस्य क्वाचित्कत्वावश्यम्भावादिह प्रवृत्तौ गमकापेक्षेति भावः। ततः किमित्यत्राह — गुरुविमनेति । दिशेरविशेषेण ल्युड्विकल्पोपपादनेन भाष्यासिद्धेन करणे घञ्साधनस्य लघुतया दिशेः कर्तरि णिनिप्रत्ययकल्पना, ततः क्वाचित्कसमासान्तकल्पना चेति गौरवेण आचार्याभिप्रायविरोध एवावशिष्यते इति भावः । आदेशिन्शब्दस्य उक्तसमासान्तविषयत्वे 'अषडक्ष' इति सूत्रभाष्यसिद्धविकल्पपरिनिष्ठितन्नित्यत्वाविरोधाय ज्ञापकसिद्धसमासान्तविध्यनित्यत्वस्य कचिल्लक्ष्ये सर्वथा प्रवृत्त्यभावरूपासार्वत्रिकत्वरूपताया एव वाच्यत्वेन आदेशीति प्रयोगः क्वापि न स्यात् । तथा च 'आदेशिनि आश्रीयमाणे' इति भाष्यप्रयोगासङ्गतिरिति बोद्धव्यम् ॥ २४ ॥



अथ ण्यन्तादादिशेः विचि आदेच्छब्दात् प्रज्ञाद्यणि रूपसिद्धिशङ्कामनूद्य निराचष्टे—

नन्वाङ्पूर्वाद् दिशेर्विच्यणि च सति दिशापूर्वयादेशशब्दः
शान्तोऽदन्तोऽस्ति सेचादिवत् इह विजुपेत्यन्यतोदृष्टिशिष्ट्या ।
मैवं क्लृप्तिर्दुरूहाऽस्त्यजपि च मतुबर्थोऽनुशङ्क्येत तर्हि
स्यादन्यः शासिताऽस्येत्यनभिमतमतिस्तस्य वाऽऽदेष्टुतेयात् ॥

नन्वाङिति । विचिति । 'विजुपे छन्दसि' इत्यतो विजिति वर्तमाने 'अन्येभ्योऽपि दृश्यते' इति सूत्रेणेति भावः । अणि चेति प्रज्ञादित्वादिति भावः । तदाह - दिशापूर्वयेति । तत्र छन्दसीति कुतो नानुवर्तेतेत्यत आह - सेचादिवदिति । 'दधिसेचा'वित्यादिः स इति भावः । अन्यतोदृष्टीति । 'अन्येभ्योऽपि दृश्यते' इति शासनेन पुनरारब्धेनेत्यर्थः । छन्दोमात्रविषयत्वे हि 'विजुपे छन्दसि बहुलम्' इत्येव ब्रूयादिति भावः । शङ्कां निरस्यति—मैवमिति । दुरूहेति । शान्तस्याकारस्य कर्त्रादिपरत्वमपहायाशान्तस्य विचस्तत्त्वं, आकृतिगणभूतप्रज्ञादित्वं च विशिष्टस्येति देवैरपि दुर्निर्णयमिति भावः । कथञ्चित् विजन्तसद्भावस्य सेचाद्युपस्थितिमतामूहनेऽपि ततः केनचित् अकार - अच् - प्रत्ययेन साधनीये अर्शआद्यजेव स्यात् । न तु प्रज्ञाद्यण्, सम्भवति सार्थकत्वे निरर्थकत्वकल्पनाया अन्याय्यत्वादित्याह—अजपि चेति । अस्तु, को दोषः?

इत्यत्राह—तर्हि स्यादिति । अस्य सद्विद्यावेद्यस्य अन्यः शासिताऽस्तीत्यनभिमता मतिः बोधः स्यादित्यर्थः । ननु अधिकरणे मत्वर्थविवक्षया अस्मिन्नन्ये शासितारः सन्तीति ब्रह्मादिसर्वशास्त्राधारत्वबोधसहवान् नानभिमतमतिरित्यत आह - तस्य वेति । आदेष्टृता अस्य ईयाद्वा गच्छेद् वेत्यर्थः । तथा च अनेनैवादेशपदेन सतो निमित्तकारणत्वप्रतिपादनपरभाष्यासङ्गतिरिति भावः ॥ २५ ॥

अथ आदेशशब्दात् 'तत्करोति' इति णौ क्विपि आदेश इति श्रौतपदसिद्धिप्रत्याशां पञ्चभिः निराकर्तुमेकया अनुवदति—

नन्वादेशं करोतीत्यभिहितवति णौ क्विप्यपीदं सुसाधं
णेर्लोपान्नेष्ठवत्त्वाद् भवति टिविलयो भत्वहेतुर्हि स स्यात् ।
तन्न, स्याद् वर्णगत्वाद् यचि भमिति विधेः स्थानिवत्त्वानिरासात्
लौरित्यादिस्तु भाष्ये क्विविधिमभि नहीत्युक्तिसामर्थ्यतः
स्यात् ॥ २६ ॥

नन्वादेशमिति । करोतीत्यभिहितवतीति । अभिपूर्वाद् धाञः कर्तरि क्तवतुः । 'दधातेर्हिः' इति तादौ किति हिरादेशः । अभिधायक इत्यर्थः । क्विप्यपीदमिति । 'अन्येभ्योऽपि दृश्यते' इत्यनुवर्तमाने 'क्विप् च' इति धातुसामान्यात् तद्विधेरिति भावः । नन्वेवमपि इष्ठवद्भावात् टिलोपे शान्तेनैव भाव्यमित्यत आह—णेर्लोपादिति। इष्ठवत्त्वाद् यः टिविलयः टिलोपः- स न भवति—णेर्लोपादित्यर्थः । लोपेऽपि प्रत्ययलक्षणेन णिपरकतया इष्ठवत्त्वात्



कथं टिलोपो न स्यादित्यत आह—भत्वेति । भत्वं हेतुः यस्येति तादृशो हि स टिलोप इत्यर्थः । ननु भत्वं वा कथं न भवतीति, अत आह-तन्नेति । तद्-भत्वं 'यचि भम्' इति विधेर्वर्णगत्वात् विशेषणतया युजादिप्रत्ययाश्रयणेन वर्णाश्रयत्वाद् इष्ठवद्भावलब्धटिलोपस्यापि भत्वनिमित्तकतया वर्णाश्रयत्वेन प्रत्ययलक्षणाभावे दुर्लभमित्यर्थः । यन्निमित्तत्वैकल्यप्रयुक्तोपदेशाप्रवृत्तौ अतिदेशो मृग्यते – तदतिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापीत्यङ्गीकारेणातिदिष्टभत्वस्यापि यजादिप्रत्ययाश्रयत्वं, टिलोपस्य भत्वाश्रयत्वं च सत्यम् । न च क्विपः प्रागेव णिचमादाय टिलोपो दुर्वार इति शङ्क्यम् । क्विब्विषये टिलोपस्य भावित्वेन निमित्तविनाशस्य भावित्वात 'अकृतव्यूह' परिभाषया तदप्राप्तेरिति भावः । नन्वेवं 'न पदान्त' सूत्रभाष्ये 'क्विलुगुपधात्व' इति वार्त्तिकव्याख्यावसरे 'क्वौ विधिं प्रति न स्थानिवत्' इत्यस्य लवमाचक्षाणो लौरित्यत्र ऊठि क्विपमादाय कार्ये, टिलोपस्य स्थानिवत्त्वनिषेधः फलमित्युक्तम्, भवदुक्तरीत्या टिलोपाभावे तदसङ्गतिः स्पष्टैवेत्यत आह - लौरित्यादिस्तु इति। भाष्ये 'न पदान्त' सूत्रे भाष्ये क्विविधिमभि- क्वौ विधिं प्रति । न हीति । स्थानिवदिति शेषः । इत्युक्तिसामर्थ्यादिति । दीव्यतेर्ण्यन्तात क्विपि णिलोपे तस्य क्वौ लुप्तत्वात् स्थानिवत्त्वनिषेधेन ऊठि द्यूरित्यादिसिद्धयर्थं वार्त्तिके क्विग्रहणसार्थक्येऽपि "क्वौ विधिं प्रति" इति व्याख्यानान्तराश्रयणसामर्थ्यात् 'अकृतव्यूह' परिभाषाया अप्रवृत्त्या टिलोपो भवतीति भावः ॥ २६ ॥

उक्तरीतेः प्रक्रियागौरवेण प्राप्तीत्या मुनिरसत्वेऽपि प्रक्रियानुपपत्तिमेव प्रतिपादयितुमाह—

मैवं भत्वाश्रयत्वेऽप्यनुचितमिह टेर्लोपहानिः पुरस्तात्
णेर्लोपात् दुर्निवारः स हि भगवदनुक्ताकृतव्यूहनीतिः ।
लौरित्यादेश्च सिद्धिः तदनधिगमनादेव हि क्वौ विधौ न
इत्युक्तेश्चैषोऽवकाशः क्विपि य इह गरित्येष गर्वो णिजन्तात् ॥

मैवमिति । भत्वाश्रत्वेऽपि इति । णिच इष्ठवत्त्वातिदेशेनैव 'टेः' इत्यादिना लोपप्राप्तौ इष्ठनि यत् कार्यं तदतिदेशेनानेनैव इष्ठवत्त्वेन तत्प्राप्तौ वा सिद्धायां भत्वातिदेशो विफलः, "यन्निमित्तवैकल्य" इत्यादिरीतिस्तु टिलोपविषये उपदेशाप्रवृत्तौ भत्ववैकल्यस्यापि प्रयोजकत्वादतिदेशे तदतिरिक्तनिमित्तकत्वलाभहेतुः, न तु तन्निमित्तकत्वलाभहेतुः, अतिदेशप्राप्तिप्रागवर्तिधर्मस्यैवातिदेशं प्रति निमित्तत्वबोधनस्य न्याय्यत्वात् । न हि भत्वं तत्प्रागवर्ति । अत एव 'टेः' इति सूत्रे भाष्ये इष्ठवत्त्वप्रयोजनं पुंवद्भावरभावटिलोपयणादिपरात्मककार्यचतुष्टयमुक्त्वा, "किं पुनरिदं परिगणनम्?" इत्याशङ्क्य, "प्रादेशसिद्ध्यर्थे उदाहरणपरमेव" इत्युक्तम् । भत्वस्यापि अतिदेशावश्यकत्वे परिगणनत्वशङ्का निर्दला स्यात् । तस्मात् टिलोपातिदेशे भत्वाश्रयत्वं न शक्यमेवेति भावः । तदभ्युपेत्यापि समाधत्ते—अप्यनुचितमिति । टिलोपत्याग इहानुचितः । हि-यतः सः—टिलोपो णिलोपात् प्राक् दुर्वार इत्यर्थः । ननु णिलोपस्य भावित्वात् 'अकृतव्यूह—'



परिभाषायाः प्राक् तदप्राप्तिरित्यत आह- भगवदनुक्तेति । भाष्यकृता तस्याः क्वापि अनुपन्यासात् अनया तदप्राप्तिशङ्का हेयेति भावः । कैयटाद्युक्ततया तत्स्वीकारेऽपि अतिदिष्टटिलोपस्य भत्वनिमित्तकत्वाभिमानिभिः तद्विषये तस्या अनित्यत्वात् अप्रवृत्तिरेव लौ इत्यादिपरभाष्यप्रामाण्याद्वाच्येत्याह—लौरित्यादेरिति । तदनधिगमनादेवेति । तस्या अनित्यत्वात् टिलोपविषये अनाश्रयणादेवेत्यर्थः । न हि 'तत् करोति' 'तदाचष्टे' इति णिचि टिलोपप्रवृत्तये कश्चित् यत्नः कार्यः - इति हि भाष्याशय इत्यर्थसिद्ध्या प्रकृतेऽपि स दुर्वार इति भावः । ननु 'क्विलुगुपधात्व' इति क्विग्रहणसामर्थ्यात् उक्तपरिभाषाया अप्रवृत्तिरिति भाष्याशयेन तदुदाहरणे तदप्रवृत्तावपि इह तदप्राप्तौ मानाभाव इत्यत आह—क्वौ विधौ नेति इत्युक्तेश्चेति । 'क्वौ लुप्तं न स्थानिवत्' इत्यतिरेकेण 'क्वौ विधिं प्रति' इति व्याख्यानस्यापीत्यर्थः । गर्वधातोरिति ; कथादिस्थाद् 'गर्व माने' इत्यस्माद् धातोः स्वार्थणिजन्तात् क्विपि णिचमादाय अल्लोपे णिलोपे च क्विममादायाल्लोपे कर्तव्ये अल्लोपादेः स्थानिवत्त्वनिषेधेन राल्लोपे, यः गरित्येष शब्दः—एष एव 'क्विविधिं प्रति' इति व्याख्यानान्तरस्यापि अवकाश इत्यर्थः । नह्यत्राल्लोपे 'अकृतव्यूह' परिभाषाशङ्कालेशोऽपीति भावः ॥ २७ ॥

अथ टिलोपाप्रवृत्तिमभ्युपेत्यापि अदन्तादेशशब्दासिद्धिमाह

**तुग्वृद्धी दुर्निवारे अपि च यदि न टेर्लोपमिच्छेरसिद्धो**
**णेर्लोपः स्यात् तुकीति ह्यपहसनपदं नान्तरङ्गो हि तुक् स्यात् ।**
**एवं वृद्धेरभावो य इह निगदितोऽप्यङ्गवृत्तेति नीतेः**
**व्यर्था सा यूयमादौ अमि न भवति शी सन्निपातेति नीत्या ॥२८**

तुग्वृद्धी इति। अपिचेति। पूर्वोक्तदूषणास्मरणपरं, तदस्मरणेन **टेर्लोपं नेच्छेर्यदि** तर्हि 'ह्रस्वस्य पिति' इति तुक्, णिलोपस्य प्रत्ययलक्षणेन 'अचो ञ्णिति' इति वृद्धिश्च **दुर्वारे** इत्यर्थः । ननु तुकि कर्तव्ये बह्वपेक्षत्वेन बहिरङ्गत्वात् णिलोपोऽसिद्धः 'णेरनिटि' इत्यस्याङ्गत्वात् ण्यन्ताङ्गावयवनिर्दिश्यमानणेर्लोप इत्यर्थात् तस्य तत्त्वं स्पष्टम् । तुकस्तु वर्णमात्राश्रयत्वात् अन्तरङ्गत्वम् । अत एव 'ग्रामणि कुलम्' इत्यत्र नपुंसकह्रस्वत्वे पिति तुक् न समुदितप्रातिपदिकापेक्षह्रस्वस्य वर्णमात्राश्रये तुक्यसिद्धत्वादिति 'प्रणीणाम्' इत्यत्र **शेखरे** स्पष्टमित्यत आह-**असिद्ध** इति । तुकि कर्तव्ये **णेर्लोपोऽसिद्धः स्यादिति तु अपहसनपदं, हि**—यतः **तुक् अन्तरङ्गो न स्यात्**, येन असिद्धत्वं शङ्क्येतेत्यर्थः। देवयतेः क्विपि द्यूरित्यादौ णिलोपनिमित्तभूतक्विनिमित्तकस्य ऊठादेरिवात्रापि तुकः णिलोपं प्रति अन्तरङ्गत्वं दुर्वचम् । यत्र प्रत्ययस्य निमित्तत्वेनाश्रयणं, तत्रापि 'प्रत्ययग्रहण' परिभाषया तदाद्यंशमात्रोपस्थितेः **परिभाषेन्दुशेखरे** स्पष्टमुक्तत्वेन तुग्विधेः कार्यांशेऽपि णिलोपसमानाश्रयत्वात् । अत एव 'अधीत्य'



इत्याद्यर्थं 'षत्वतुकोः' इति तुग्ग्रहणं चरितार्थम् । 'वृत्रहभ्यां' इत्याद्यर्थं 'नलोपः सुप्' इति सूत्रे कृतितुग्ग्रहणञ्च । अन्यथा पदद्वयसंबन्धिवर्णद्वयापेक्षैकदेशस्य नान्तपदसमुदायापेक्षनलोपस्य च बहिरङ्गत्वादसिद्धत्वे सिद्ध तद्वैयर्थ्यं स्पष्टमेव । मम तु उक्तरीत्या तदाद्युपस्थितिवत् "कृद्ग्रहण" परिभाषाया अप्युपस्थित्या कृद् यस्मात् विहितः तदादेः गत्यादिपूर्वकस्य ह्रस्वान्तस्य पिति कृति परे तुगिति "ह्रस्वस्य पिति" इत्यस्यार्थलाभात्, 'अधीत्य' इत्यत्र, तुक एव बहिरङ्गत्वात्, 'वृत्रहभ्याम्' इत्यादौ च कृत्प्रकृति-(क)समुदायरूपनान्तशब्दमात्राश्रयत्वेन नलोपस्य तुकः तद्बहिर्भूतकृत्प्रत्ययस्य लोपेऽपि प्रत्ययलक्षणेन तत्परत्वाश्रयत्वात् ततोऽस्य बहिरङ्गत्वलाभाच्च न तथा तत्सिद्धिरिति, तच्चारितार्थ्यं स्पष्टमेव । ग्रामणि कुलमित्यत्र नपुंसकह्रस्वत्वे तुग्वारणं तु उपजीव्यविरोधादिति तत्रैव **शेखरे** स्पष्टमिति **गोमालायां** विस्तर इति भावः । अत एव 'कृन्मेजन्तः' इति सूत्रे "सन्निपात" परिभाषादिनिरूपणावसरे "ह्रस्वत्वं तुग्विधेः ग्रामणि कुलम्" इति भाष्यमुपादाय "यदा ह्रस्वमात्रस्य तुगागमः न तदन्तस्य-तदेदं प्रयोजनम्" इति **कैयटेन** व्याख्यातम् । उक्तरीत्यनाश्रयणे तदन्तस्य तुगागमलाभदौर्घट्येन तत्पक्षशङ्का निर्दला स्यात् इति स्पष्टं सूक्ष्मदृशामिति बोध्यम् । एवमत्र 'अङ्गवृत्त' परिभाषया वृद्ध्यभावप्रतिपादनमप्ययुक्तमित्याह-**एवमिति** । 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति नयेन **य इह वृद्धेरभावो निगदितः सोऽप्येवं अपहसनपदं** ; तत्र हेतुमाह-

श्यर्थेति । तन्न्यायस्य लक्ष्यसंस्काररूपप्रयोजनलाभाभावस्य तत्प्रयोजनं किमित्याशङ्क्य 'पिबतेर्गुणप्रतिषेध: उक्त:, स न वक्तव्यो भवति' इति एतन्मात्रप्रयोजनपरानेकभाष्यात् लाभादित्यर्थ: । ननु 'यूयम्' इत्यादौ 'जस: शी' इति न्यायेनैव वारणीय इति तदेव फलमित्याह—यूयमादाविति । न भवति शीति । "औङ: श्याम्" इति विभक्तित्वापेक्षया स्त्रीत्वाश्रयेण "सर्वतोऽक्तिन्नर्थात्" इति ङीषि हल्ङ्यादिलोप: यथा 'जस: शी' इति 'सन्निपाते'ति युष्मदादिप्रकृतिकजसादिविभक्तिसन्निपातनिमित्त: शेषलोप: अदन्तसम्पादनद्वारा तद्विघातकं 'जस: शी' इत्येतत् प्रति निमित्तं न स्यादिति भाव: ॥२८॥

ननु "सन्निपात" परिभाषाया: 'दाक्षि:' इत्यादौ 'यस्येति' लोपाद्यर्थं अनित्यत्वावश्यकतया इहाप्यप्रवृत्तौ 'अङ्गवृत्ते' इति न्याय: आवश्यक:; न च अनित्यत्वेऽप्यौत्सर्गिकप्रवृत्त्येष्टसिद्धि: । "नेदमदसो:" इति भिस ऐस्निषेधात् लिङ्गाद् विभक्त्यादेशविषये तस्या अप्रवृत्तिलाभात् । अत एव 'के ते' इत्यादौ श्यादेशादिकं सम्भवति । इत्थं च 'यूयम्' इत्यादावपि तन्न्यायानवतारात् शी दुर्वारा स्यात्, इति 'अङ्गवृत्त' परिभाषैव शरणमित्यत आह—

**तस्याश्च अनित्यतायां फलपरिगणनान्नैतदप्राप्तिशङ्का**
**कुन्मेजन्त: स(स्थ?) भाष्यं सुबधिगतविधौ तन्निषेधोक्तिभावम् ।**
**गोनर्दीयैस्त्यदाद्यो न भवति गमकष्टाब्विधेरित्यभाषि**
**ह्यस्याकारे त्यदादेर्विहित उपरतिष्टाब्विधेरन्यतोऽपि ॥ २९ ॥**



तस्याश्चेति । तत्परिभाषादोषगणनमुखेन तदनित्यत्वफलपरिगणनात् नात्र तदप्राप्तिशङ्का कार्येति भाव: । 'कृन्मेजन्त:' इति सूत्रभाष्ये तत्परिभाषामुपन्यस्य प्रयोजनान्युक्त्वा दोषानप्युक्त्वा दोषबाहुल्यात् तन्न्यायानभ्युपगम एव युक्त इति शङ्कमानं प्रति प्रयोजनबाहुल्यप्रतिपादनाय "दोषा: खल्वपि साकल्येन परिगणिता: । प्रयोजनानां पुन: उदाहरणमात्रं, कुत एतत्? । न हि दोषाणां च लक्षणमस्ति ।" इत्युक्तत्वेन तत्रोक्तदोषेभ्योऽन्यस्य तत्परिभाषाविषयत्वमेवेत्यर्थस्य स्पष्टं लाभ इति तात्पर्यम् । न च तस्य परिगणनत्वे 'रामाय' इत्यसिद्धि:; तथा 'सुपि च' इति दीर्घानापत्तेरिति वाच्यम् । "यादेशो दीर्घत्वस्य" इति ग्रन्थस्य पाठभ्रंशात् भाष्ये अनुपलम्भेऽपि दोषाणामनुक्रमेण अनया परिहारपरकैयटग्रन्थेन द्वितीयदोषतया भाष्ये तदुपन्याससत्तानुमानादिति स्पष्टमुद्द्योतविदाम् । न चैवमपि 'एषाञ्चक्रे' इत्यादौ लिट्सन्निपातनिमित्तक-आम: तल्लोपनिमित्तत्वानापत्तिरिति वाच्यम् । 'आम:' इत्यारम्भसामर्थ्यात तत्परिभाषाबाधस्य स्पष्टत्वात् । न च तत्र "लो:" इत्यननुवर्त्य सोर्लुग्विधानेन चारितार्थ्यं शङ्क्यम् । लिटो लुकमन्तरेण आम: परसोर्दुर्लभत्वात । न च 'सखा' इत्यादौ सुनिमित्तकानङ: 'हल्ङ्यादि' लोपनिमित्तत्वं न स्यादिति वाच्यम् । प्रत्ययलोपविधायकै: प्रत्ययानुत्पत्तेरेव अन्वाख्यानेन सौ विषये एवानङ्प्रवृत्त्यावश्यकतया तत्परिभाषाया: अप्राप्तेरिति दिक् ।

**ननु तद्भाष्ये एव "त्यदाद्यकारष्टाब्विधेः" इति** परिगणनात् विभक्त्यादेशानां तद्विषयत्वाभाव एव लभ्यते । त्यदाकारान्तात् टाप् भवति, "न यासयोः" इति लिङ्गादिति नास्यार्थः; अपि तु त्यदादिसम्बन्ध्यकारमाश्रित्य यो यः प्राप्नोति टाप्श्यादिः, स सर्वोऽपि भवति, तद्विषये तस्या अनित्यत्वादप्रवृत्तेरित्यर्थः । तेन 'के ते' इत्यादिसिद्धिः । एवं च यूयमित्यादावपि तदप्राप्तिः फलितेत्यत आह–'कृन्मेजन्त' इति । तद्भाष्यमस्य न्यायस्य **सुबधिगतविधौ** त्यदादिसम्बन्ध्यकारानिमित्तसुबाश्रयविधौ **दोषोक्तिमात्रं** दोषबोधनपरं **न** भवतीत्यर्थः । कुत इत्यत्राह–**गोनर्दीयैरिति** । गोनर्दे - देशविशेषे भवैः, भाष्यकृद्भिरित्यर्थः । 'एङ् प्राचां देशे' इति वृद्धत्वात् 'वृद्धाच्छः' तद्भाष्यस्य सुयुक्तिकतया एकदेश्युक्तित्वादेः अशङ्कनीयत्वेन दृढतरप्रामाण्यबोधनायेदम् । त्यदाद्य इति । "त्यदाद्यकारष्टाब्विधेः" गमको न भवतीत्यभाषि हीत्यर्थः । ततः किम्? उक्ताशय एव तस्यास्त्वित्यत्राह-अस्येति । त्यदादेर्विहिते अकारे सन्निपातलक्षणे उपरतिः-तद्विघातप्रापकत्वपर्यवसानं, तद्विघातकत्वं तु टाब्विधेरन्यस्य वा स्यादित्यर्थः । त्यदादिसम्बन्ध्यकारविधिः टाब्विधेः स्वनिमित्तकसन्निपातलक्षणविधेर्निमित्तं न स्यादिति दोषकथनपरभाष्यवाच्यार्थः । 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्'' इति प्रक्रमानुगुण्येन तत्परिभाषास्थपदत्रयप्रत्यभिज्ञानेन "त्यदाद्यकारः" इत्यस्य विधिपर्यन्तपरत्वनिर्णयात्



"टाब्विधेः" इत्यस्य तन्मात्रपरत्वे टापा सह एकादेशादेः अप्राप्त्या त्यदादेर्विहिताकारनिमित्तककार्यमात्रपरत्वात् 'ते' इत्यादौ शीभावादीनामपि सङ्ग्रहः । 'त्यदाद्यकारः' इत्यनेन त्यदादिसम्बन्ध्यकारमात्राग्रहणेन कादेशस्यापि ग्रहणम्, तन्मात्रविधित्वनिवेशे मानाभावात् । तेन 'के' इत्यादिसिद्धिरिति बोद्धव्यम् । न च 'त्यदाद्यकारः' इत्यत्र प्रतिपदोक्तत्वात् त्यदाद्यत्वस्य ग्रहणं शङ्क्यम् । तत्प्रकरणस्य परिभाषासत्त्वे दोषकथनरूपातिप्रसञ्जनपरतया तर्कपरत्वेन प्रमाणवचनत्वाभावेन अत्र परिभाषाया अप्रवृत्तेः अबाधितप्रतीतिवचनं तत् । 'प्रतिविधेयं च दोषेषु' इत्यनेन तत्प्रकरणस्य तदनित्यफलपरिगणनत्वकल्पनेऽपि पूर्वप्रतिपन्नकतयैव कल्पनेनादोषात् । न च 'त्यदादीनामः' इति सूत्रे भाष्ये 'टिलोपष्टाबभावार्थः कर्तव्य इति स स्मृतः' इति 'त्वं ब्राह्मणी' इत्यादौ टाबभावाय कृतप्रयासो विफलः स्यात्, उक्तरीत्या अन्त्यलोपे उक्तपरिभाषया टाब्वारणादिति वाच्यम् । तद्भाष्यस्य एकदेश्युक्तित्वात् टाब्वारणाय अपूर्ववचनकरणगौरवेण सूत्राक्षरेणैव तल्लाभपरेण 'अथ वा शेषसप्तम्या शेषे लोपो विधीयते' इत्येतदुत्तरभाष्येण 'शेषे लोपः' इति सूत्रे भाष्ये प्रत्याख्यातस्य शेषग्रहणस्य कर्तव्यताबोधनात् । द्विपर्यन्तानामेव इत्यर्थे 'शेषे लोप' ज्ञापकत्वदूषणस्य 'अपि चोपसमस्तार्थमत्त्वाभावात् कृतं भवेत्' इत्यनेन प्रागेव दर्शितत्वेन पुनः तद्यत्नवैफल्याच्च । एतच्च 'लुप्तशिष्टेति तस्याहुः कार्यसिद्धिं मनीषिणः' इति निन्दार्थमत्वर्थीयेन, 'आहुः' इत्यनेन च ध्वनितम् । यद्वा

'लुप्तशिष्ट' इत्यादेः अयमर्थः—शेषग्रहणाकरणेऽपि टिलोपाविधानेऽपि च अन्त्यलोपोऽवश्यविधेयष्टाबभावार्थः। त्यदाद्यत्वे हि 'या सा' इत्यादिवत् स दुर्वारः "त्यदाद्यकारष्टाब्विधेः" इति "सन्निपात" परिभाषादोषेषु गणनात्; शेषलोपे तु त्यदाद्यकारविधेरभावात् परिगणनाविषयत्वे तया टाब्वारणमिति स्पष्टमेवेति लुप्तशिष्टे हि लोपविधिना अकारान्ततया शिष्ट एव तस्य टाबभावरूपकार्यसिद्धि मनीषिण आहुः। न तु अकारविधिना अकारान्ते पररूपेण शिष्टे इति तद्वाच्यार्थः। हीति त्वर्थे, 'मनीषिणः' इत्यनेनान्वेति—इति बोद्धव्यम्। अस्य मनीषिमात्रगम्यत्वं स्पष्टमेवेति सुधीभिरूह्यम्। अत्रेदं तत्त्वम्—'कृन्मेजन्तः' (इति) सूत्रभाष्यस्य परिगणनपरत्वाभावेऽपि शेषग्रहणाकरणलाघवेन 'त्वं ब्राह्मणी' इत्यादौ "सन्निपात" परिभाषया टाब्वारणसम्भवात् तत्परत्याख्यानसामञ्जस्ये तद्ग्रहणकर्तव्यतापरभाष्यं एकदेश्युक्तिरिति सर्वैर्वाच्यमिति ॥ २९ ॥

नन्वेवं तत्परिभाषादोषाणां परिगणितत्वे 'यूयं ब्राह्मणकुलानि' इत्यादौ 'जश्शसोः' इत्यादितः परत्वात् अमादेशः "सकृद्गति" न्यायेन, न पुनः "जश्शसोः" इत्यादीत्यर्थकस्य 'नपुंसकादेशेभ्यो युष्मदस्मदोः विभक्त्यादेशा विप्रतिषेधेन' इति "नेतरात् छन्दसि" इति सूत्रभाष्यस्यासङ्गतिः। तत्परिभाषया 'जसः शी' वारणवत् 'जश्शसोः' इत्यस्यापि वारणसम्भवात् युष्मदादिप्रकृतिकजसादिनिमित्त-अमादेः



तद्विघातस्यादेशादिकं प्रति निमित्तत्वायोगात् स्थानिनोऽप्यादेशप्रवृत्तिप्रयोजकत्वेन तत्त्वाक्षतेरित्यत आह—

यद्भाष्ये युष्मदादेः सुबधिगतविधेः क्लीबकार्यात् परत्वं
प्रोक्तं तत्कोपनं स्यादिह परिगणने तन्नयानित्यतायाम्।
मैवं हास्यो हि तस्याः प्रसर उभ(त?)यतः सुब्विधेः कार्यतैव
क्लीबादेशं प्रति स्यान्न खलु जनकता कार्यि न
स्यान्निमित्तम् ॥ ३० ॥

यद्भाष्य इति। क्लीबकार्यात् नपुंसकादेशेभ्यः युष्मदादेः सुबधिगतविधेः विभक्त्यादेशानां परत्वं 'सकृद्गति' न्यायप्रवृत्तिबीजं यद्भाष्ये "नेतराच्छन्दसि" इति सूत्रे उक्तम्, तत्कोपनं—तद्विरोधः इह तन्न्यायानित्यत्वे फलपरिगणने सति, स्यादित्यर्थः। परिहरति—मैवमिति। तस्याः परिभाषायाः प्रसरः प्राप्तिः हास्यो हि इत्यन्वयः। कुत इत्यत्राह-यत इति। सुबादेशतया विधेयस्य अमादेशस्य श्यादेशं प्रति निमित्तत्वं नास्ति, श्यादेशस्य जसवस्थायामपि सम्भवात् श्यादेशं प्रति अमादेशस्य कार्यितया निमित्तव्यवहारनिषेधाच्च 'अरिरीषति' इत्यादौ 'द्विर्वचनेऽचि' इति द्वित्वात् गुणनिषेधाभावाय इशब्दस्येवेति भावः। तदाह—कार्यि न स्यादिति। "न हि कार्यी निमित्ततया आश्रीयते" इति परिभाषयेति भावः। एवं च 'अङ्गवृत्त' परिभाषाया यूयमादावुपयोगाभावात् असत्त्वात् आदेशशब्दात् 'तत्करोति' इति णौ क्विपि तयोर्लोपे टिलोपानङ्गीकारे तुकः

कथञ्चिदागमशास्त्रानित्यताभिमानेन वारणेऽपि विचमादाय 'अचो ञ्णिति' इति वृद्धेः दुर्वारतया श्रौतादेशपदस्य क्विबन्ततावर्णनं साहसिकमेव। इहेत्थं उपपादयद्भिरन्यत्र 'विपाशान् करोति' इति विपाडिति प्रक्रियोपपादनेन पूर्वापरविरोधाच्च इत्यलम् ॥ ३० ॥

अथ एकया अयतेर्विचि यलोपे गत्यर्थकतया ज्ञानवाचित्वादकारे ज्ञातृवाचिन्युपपदे आदिशेः कर्मण्यणि सर्वजनशासितेत्यर्थकम् उक्तादेशपदमिति प्रत्याशामनूद्य निरस्यति—

गत्यर्था धीपरा इत्ययतिरिह तथा विच्यतश्चेतनार्थो
ऽकारः तस्मिन् तु कर्मण्यणि सति दिशतेराङ्मुखादिष्टसिद्धिः।
मैवं रूढिर्बलीयस्यवयवशकनान्नीतिसिद्धा ह्यकारो
विष्णौ रूढस्तमप्यादिशति य इह स स्यादनिष्टाभिधेयः॥३१

गत्यर्था इति। गत्यर्थाः उत्तरदेशसंयोगानुकूलव्यापारवाचिनः धीपराः ज्ञानवाचिनोऽपि भवन्तीति प्रसिद्धेः। इह शब्दे अयतिः तथा ज्ञानवाची। अतः अयतेर्विचि अकारः चेतनार्थो भवतीति शेषः। तस्मिन्नकारे कर्मण्युपपदे आङ्मुखाद् दिशतेरणि सति, सवर्णदीर्घेणेति शेषः। इष्टसिद्धिः श्रौतादेशपदसिद्धिरित्यर्थः। अत्रापि प्रागुक्तगौरवाविशेषात् शङ्कानुत्थानेऽपि विवक्षितार्थासिद्ध्या अनिष्टापादकतया च अत्यन्तहेयत्वमापदयितुं अनुवादमात्रमिति भावः। तदेतत् स्पष्टयति—मैवमिति। अवयवशकनात् अवयवशक्तेः रूढिः - समुदायशक्तिः बलीयसी नीतिसिद्धा हि "अवयवप्रसिद्धेः समुदायप्रसिद्धिः बलीयसी" इति परिभाषणादिति भावः। ततः किमित्यत्राह—अकारो विष्णौ रूढः। 'अ निषेधे पुमान् विष्णौ' इति कोशादिति भावः। अतो वा किमित्यत्राह-तमपीति। विष्णुमपि य आदिशति स इह सद्विद्यायां अनिष्टाभिधेयः 'एको ह वै नारायण आसीत्' इति कारणवाक्यार्थपर्यवसानलब्धविष्णुविषयकतात्पर्यविरुद्धार्थकः स्यादित्यर्थः। "अतो (ततो ?) यदुत्तरतरं तदरूपनाम(धे)यम्" इति श्रुतिलब्धापातधीसिद्ध "परमतः सेतून्मानसम्बन्ध" इत्यधिकरणपूर्वपक्षप्रतिष्टम्भकतया तत्सिद्धान्तविरोधः स्यादिति भावः ॥ ३१ ॥



अथ अत्तेः क्विप्यच्छब्दस्य भोक्तृपरस्य सामूहिकाणन्तस्य इगुपधकप्रत्ययान्तेन ईशशब्देन समासे सर्वेश्वर आदेशशब्दः श्रुतौ प्रयुक्त इति पक्षमनूद्य निरस्यति—

अत्तेः क्विप्यद्धि सर्वो जन इह हि ततोऽणस्ति सामूहिकोऽस्मात्
जीवव्यूहार्थ आदिस्त्विगुपधकशिरा ईशिरेतौ समस्तौ।
स्याद्धत्त्यन्यस्तयोरित्युपनिषदुदितं प्रत्यभिज्ञास्पदं स्याद्
मैवं सर्वात्मतात्राद्युपनिषदुदितस्यात्र तत्त्वप्रतीतेः ॥ ३२ ॥

अत्तेरिति। अत् इति पदच्छेदः। "भोक्ता भोग्यं प्रेरितारं" इति तत्त्वत्रयस्यैव श्रुतिसिद्धत्वादिति भावः। इह हीति। हिस्त्वर्थे।

अतः अच्छब्दात् सामूहिकः समूहे भवः 'तस्य समूहः' इति विहितः अण्प्रत्ययोऽस्ति । अस्मात् हेतोः अदः अदशब्दः जीवव्यूहार्थः जीवसमूहवाची । ईशिस्तु 'ईश ऐश्वर्ये' इति धातुस्तु इगुपधकशिराः इगुपधलक्षणकप्रत्ययान्तः । एतौ शब्दौ समस्तौ, अत्रादेशशब्दौ भवत इति शेषः । ननु आदेशशब्देन प्रशासनाभिधाने 'अन्तः प्रविष्टः शास्ता' इत्यादिश्रुत्यर्थसंवादोऽस्ति । उक्तव्युत्पत्तौ तदलाभ इत्यत आह-स्वाद्वत्तीति । 'अनश्नन्नन्यो अभिचाकशीति' 'पतिं विश्वस्य' इति च उपनिषदुदितं प्रत्यभिज्ञास्पदं स्यादित्यर्थः । इत्थं च अस्य अर्थस्य श्रुतिद्वयार्थसंवादसत्त्वात् ग्राह्यतेति भावः । निरस्यति-मैवमिति । सर्वात्मतेति । सद्विद्याप्रपाठकोपक्रमे 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति श्रुत्युदितार्थस्यैव तत्त्वप्रतीतेः संवादकत्वप्रतीतेः 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहारसामर्थ्येन निमित्तकारणस्यैव सतो जगदुपादानत्वसिद्ध्या एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाप्रक्रमेऽपि संक्षिप्य निमित्तोपादानत्वयोः श्वेतकेतुं प्रति उपदेशसत्त्वे एव 'कथं नु खलु स आदेशो भवति' इति पुनःपुनश्शङ्काकरणोपपत्त्या, 'सदेव सोम्य' इत्यादिभिः समाधानप्रतिपादनोपपत्त्या च प्रक्रान्तजगदुपादानत्वनिमित्तत्वोपयुक्तसदायतनत्वसत्प्रतिष्ठत्वसर्वशरीरित्वादिप्रतिपादनानुगुण्येन आदेशशब्दस्य



प्रशासितृपरस्यैव श्रुत्यन्तरार्थसंवादनकथनमत्रावश्यापेक्षितम् ; अन्यथा सद्विद्याप्रकरणस्याजिज्ञासितार्थकथनरूपत्वस्य जिज्ञासितार्थपरित्यागस्य च आपत्तिर्दुर्वारा । न हि तव जीवानां कर्मफलभोक्तृत्वं कथं ? तेषां ईश्वरत्वं च कथम् ? इति शङ्किते निमित्तोपादानपराग्रिमखण्डार्थानां समाधानरूपत्वं कथञ्चिदपि घटते इति भावः ॥ ३२ ॥

अथोक्तरीत्या 'देङ् रक्षणे' इत्यत आङुपसृष्टात् 'आतश्चोपसर्गे' इति कान्तस्य ईशशब्देन समासे आदेश इति कल्पनामनूद्य दूषयति—

"आतश्चोप" इति कान्तो दयतिरवनवाच्याङुपश्लिष्ट एवं
ब्रह्माद्यादास्तथेशिस्त्विगुपधकशिराः प्राग्वदेतौ समस्तौ ।
मैवं प्रागुक्तदोषापरमतसहनात् देशिकोक्तेर्लघुत्वात्
व्याकोपाच्चैव मुक्ता ह्यखिलकुसृतयः शङ्कनीयाश्च हास्याः ॥ ३३

आतश्चेति । आङुपसृष्टः आङा उपसर्गेण संसृष्टः । अवनवाची रक्षणवाची दयतिः 'देङ् रक्षणे' इति पठितः धातुः । 'आतश्चोप' इति कान्तः कर्तरि 'श्याऽऽद्व्यधास्रु' इत्यादिना विहितणप्रत्ययस्य अपवादतया 'आतश्चोपसर्गे' इति विहितो यः कप्रत्ययः तदन्तः । एवं सति आ-समन्तात् रक्षका ब्रह्माद्यः आदाः, इति सिद्धमिति शेषः । तथा उक्तप्रकारेण, ईशिः ईशधातुश्च, प्राग्वत् इगुपधकशिराः—इगुपधलक्षणकप्रत्ययान्तः । एतौ समस्तौ

प्राग्वत् षष्ठीतत्पुरुषसमासभाजावित्यर्थः। अत्र अर्थे "तमीश्वराणां परमं महेश्वरम्" इति श्रुत्यर्थसंवादलाभ इत्यभिमानः। उक्तरीत्यैव परिहारस्य स्पष्टत्वेन शङ्कानुत्थानेऽपि शङ्कितसर्वपक्षाणां साधारणदूषणभाषणाय अनुवादमात्रमिदं इति बोद्धव्यम्।

तदेतत् ध्वनयन्नाह - मैवमिति। प्रागुक्तेति। 'अवयवप्रसिद्धेः समुदायप्रसिद्धिः बलीयसी' इत्युक्तन्यायविरोधात् समनन्तरोक्तसर्वात्मत्व-श्रुत्यर्थास्पर्शापत्तेः इत्यर्थः। परमतस्य कर्मघञन्ततापरस्य सहनात् बाधनासामर्थ्येन तत्पक्षस्यैव सामञ्जस्यवादे जोषम्भावस्यैवापत्तौ तन्निरासाग्रहपरिहाराङ्गीकारात् इत्यर्थः। देशिकोक्तेरिति। सुदर्शन-देशिकोक्तकरणघञन्तत्वपक्षस्यैव पक्षान्तरेभ्यो लघुत्वादित्यर्थः। व्याकोपाच्चेति। देशिकोक्तेरित्यनुषङ्गः। आदेशकौमुदीदर्शित-पचाद्यजन्ततादिपरसर्वपक्षाणां सम्भवे तत्त्यागेन स्वपक्षे प्रत्ययास्वारस्या-न्वारुह्यवादस्य आचार्यकृतस्यापरिशीलनमूलतापत्त्या तन्मतदोषकथन-पर्यवसानेन तन्निग्रहावहत्वापत्तेरित्यर्थः। तदेतदाह—एवमिति। प्रागुक्तेति। इदम् उक्ताभिप्रायमिदम्। शङ्कनीयाश्चेति। आङ्पूर्वात् अत्तेः क्विपि आत्, आङ्पूर्वादीशेः के ईशः, आदामीशः इति प्रथमपदेन अत्त्रधिकरणलाभः। द्वितीयेन तु सर्वव्याख्यानाधि-करणलाभः इति। एवं अभिव्याप्त्यर्थक - आङादेशपदेन अव्ययीभावे परोक्षा क्रियेतिवत् अर्शआद्यचि आदेशी सर्वस्यापि इत्यर्थः। इत्यादयः परैः शङ्क्यमाना अपि हास्या इत्यर्थः॥ ३२ ॥



अथ उक्तदोषेषु परमतसहनरूपदोषस्य आचार्यपक्षेऽपि साम्यमिति शङ्कमानं प्रत्याह—

नन्वेवं कर्मघञ्वाद्यभिमतसहनं दुर्निवारं स्वपक्षे
अप्यन्यस्मिन् कर्तुरुक्तो घञिह करणतावेषकर्तर्युपेयः।
मैवं कर्त्रादिकानामुपहितभिदया भिन्नशक्त्या विवक्षा
दृष्टा ह्यात्मनमात्मा सृजति हि भगवानात्मनेत्यादिवाक्ये॥

नन्वेवमिति। स्वपक्षेऽपि-देशिकपक्षेऽपि कर्मघञ्वाद्यभि-मतं यत् 'अकर्तरि च कारके' इति सूत्रस्वरससिद्धघञन्तत्वं तस्य सहनं तत्पक्ष एव लाभाभ्युपगमरूपं दुर्निवारं परिहर्तुमशक्यमित्यर्थः। कुत इत्यत्राह - अन्यस्मिन्निति। कर्तुः कारकविशेषात् अन्यस्मिन् कारके उक्तो घञ् इह - आदेशशब्दे करणतावेषे साधकतमत्वेन विवक्षिते कर्तरि कारकविशेषे. उपेयः स्वीकार्यः। इत्थं च 'कर्तरि' इति निषेधविषये घञ्प्रवृत्तिस्वीकारे सूत्रविरोधः स्पष्ट इति परपक्षे तदभावात् तस्य सूत्रस्वरससिद्धत्वलाभ इति भावः। परिहरति—मैवमिति। कर्त्रादिकानामिति। आदिना कर्मकरणादीनां सङ्ग्रहः। उपहितभिदया औपाधिकभेदेन, भिन्नशक्त्या करणादीनां कर्त्रादि-शक्तिरूपेण विवक्षा 'भगवानात्मानमात्मना सृजति' इत्यादिवाक्ये दृष्टा हि कर्तुरेव भगवतः जीवशरीरत्वाद्युपाधिभेदेन कर्मत्वकरणत्वयो-र्विवक्षया कर्मादिसंज्ञाभेदतत्कार्यभेदयोर्दर्शनादिति भावः। नैतावता अस्य

सूत्रस्वरससिद्धघञन्तत्वभङ्गः । 'अकर्तरि' इति कर्तृसंज्ञिकभिन्नपरतया संज्ञाया स्वातन्त्र्यविवक्षाधीनाया अप्राप्तेः । अत एव साधकतमशब्देन साधनकर्तृत्वेन विवक्षितस्यैव करणसंज्ञाविधानं सङ्गच्छते । अन्यथा एकत्रैव प्रयोगे ण्वुल्ल्युटोः अन्यतरस्य गौणत्वापत्तिः दुर्वारा स्यादिति बोध्यम् ॥ ३४ ॥

एवं कैश्चिदाचार्यमतसिद्धव्युत्पत्त्यन्तरकल्पनां निरस्य, आचार्याभिमतप्रशासितृत्वपरत्वानुगुणां परमतकर्मघञन्तत्वात् प्रक्रियाधिक्येऽपि फलातिशयसत्त्वेन गौरवस्य अकिञ्चित्करत्वेन आचार्याभ्यनुज्ञार्हां शब्दविद्धृदयसारस्यावहामेकामादेशशब्दप्रक्रियां एकया अनुवादरूपेण निबध्नाति—

नन्वाङ्पूर्वाद् दिशेः तृच्युपगत इह णौ 'तत्करोती'ति सिद्धे
तुर्लोपे चेष्ठवत्त्वात् परमतवदिहाप्यस्तु कर्मण्यजेव ।
आचक्षाणेऽपि णिज्झि प्रसरति तदियं वाच्यसम्पत्तिरासीत्
आदेष्टाख्यात इत्यप्यखिलचिदचितामात्मतः श्रुत्यभिज्ञा ॥

नन्विति । आङ्पूर्वाद्दिशेः तृचि उपगते सति इह आदेष्टृशब्दः अस्तीति शेषः । णाविति । अस्य तत इत्यादिः । आदेष्टृशब्दादिति तदर्थः । तत्करोतीति । 'तत्करोति तदाचष्टे' इत्यनेन चुरादिगणसूत्रेण णौ सति इष्ठवत्त्वात् 'प्रातिपदिकात् धात्वर्थे बहुलमिष्ठवच्च' इति विहितेष्ठवद्भावेन तुः तृचः लोपे



सिद्धे परमतवदिहापि स्वपक्षेऽपि कर्मणि अजेव 'अकर्तरि च' इत्यधिकृत्य विहितः 'एरच्' एवास्तु । एवं च प्रत्ययास्वारस्यान्वारुह्यवादाभावात् फलातिशय इति भावः ।

न च 'व्यासश्रन्थः' इति युजापत्तिः, स्त्रीलिङ्गविशिष्टभावादिविवक्षायामेव तत्प्राप्तेः । ननु 'तत् करोति' इति णिचः करोत्यर्थ एव प्राचुर्यात् आचक्षाणे णिचः काचित्कत्वात् इहाश्रयणे मानापेक्षेत्यत आह - आचक्षाणेऽपीति । प्रसरति प्राचुर्येण प्रवर्तते । 'टेः' इति सूत्रभाष्ये इष्ठवद्भावप्रयोजनतया 'एनीमाचष्टे एतयति' इत्यादेरेव दर्शितत्वेनाख्यातार्थ एव णिचः प्राचुर्यबोधनादिति भावः । नन्वादेष्टृकर्मकाख्यानकर्म इत्यर्थे अच्प्रत्ययार्थकर्मणोऽन्यस्याभावादादेष्टैव वाच्य इति "उक्तार्थानाम्" इति न्यायेन कर्मण्यजेव न स्यादित्यत आह—तदियमिति । वाच्यसम्पत्तिः अर्थपुष्टिः । कथमित्यत आह—आदेष्टा शास्ता । आख्याते इति, आदेष्टेत्याख्यातः 'अन्तः प्रविष्टः शास्ता' इति श्रुत्या प्रतिपादित इति वाच्यसंपत्तिरित्यन्वयः । एकस्यैव विशेषणविशेष्यभावेन कर्मताभेदसिद्ध्या शास्त्रभिन्नकर्मप्रकारकाख्यानकर्मेति बोधे तथाविधः सर्वात्मा आदेशशब्दविशेष्य इति फलतीति न 'उक्तार्थानां' इति न्यायावकाश इति भावः । एवमेव

'सितच्छत्रितकीर्तिमण्डल' इत्यादौ सितच्छत्रितं करोतीत्यर्थप्रतीत्या सितच्छत्राभिन्नकर्मप्रकारकक्रियाकर्मेति विशेष्यत्वं कीर्तिमण्डले फलतीति बोध्यम् ।

एवञ्च विशेष्ये साकाङ्क्षत्वात् आदेष्टृशब्दात् णिज्वृत्तिः कथं, 'सापेक्षमसमर्थवत्' इत्युक्तेरित्यपास्तम् । पदसंस्कारपक्षे दोषाभावात्, पक्षान्तरेऽपि नियतसाकाङ्क्षत्वात् विशेषणाद् वृत्तेः सुलभत्वाच्चेति तात्पर्यात् । एवं व्युत्पत्तौ 'अन्तः प्रविष्टः शास्ता' इति श्रुत्यर्थप्रत्यभिज्ञासौकर्यमपीत्याह—अप्यखिलेति । चिद्चितामिति । ''जनानां सर्वात्मा' इति अचिद्विशिष्टजीवानां आत्मत्वकथनात् अचितामप्यात्मत्वलाभः इति भावः ॥ ३५ ॥

उक्तां व्युत्पत्तिं शब्दविद्यानिष्णातहृदयङ्गमाचार्याभ्यनुज्ञार्हामपि आचार्योल्लिखितपरमतप्रकृत्यस्वारस्यस्य प्रक्रियाबाहुल्यात् लेशतः सम्भावनया आचार्यमतस्यैव श्लाघ्यत्वातिशयवर्णनाय अर्धाङ्गीकारेण परिहरति—

**यद्यप्युक्तासु कक्ष्यास्वियमतिलघिमा शब्दविद्याचणानां**
**सर्वात्मा शासितेति श्रुतिरपि नितरां प्रत्यभिज्ञापदं स्यात् ।**
**आचार्या नोचुरेनामपि परमततः प्रक्रियाभूमसाम्यात्**
**अत्याक्षुर्यद्वर्शआद्यन्मतमपि त इमे गौरवोद्विग्नभावाः ॥ ३६ ॥**



**यद्यपीति** । "शास्त्यर्थात्" इत्यारभ्य समनन्तरपूर्वस्रग्धरापर्यन्तम् **उक्तासु** परोक्तानुवादरूपेण निबद्धासु **कक्ष्यासु** स्वोत्प्रेक्षितकक्ष्याविशिष्टासु व्युत्पत्तिषु इयं पञ्चत्रिंशत्स्रग्धरादर्शिता कक्ष्या **अतिलघिमा** अतिशयितो लघिमा लाघवं यस्यां तादृशी "मनः" इति ङीप्निषेधे 'डाबुभाभ्यामन्यतरस्याम्' इति डापि ङीप्निषेधो वा, लोके आदेशशब्दस्य ईदृशव्युत्पत्तेः दुर्ग्रहतया अतिगौरवमिति वाच्ये कथं लाघवातिशयवर्णनमित्यत आह—**शब्दविद्येति** । शब्दशास्त्रविज्ञानेन प्रसिद्धानां "भवतीसम्बन्धदृष्ट्या" इत्यादिष्वापातसिद्धपुंवत्त्वशङ्कागन्धसुदूरीकारचणवादतरङ्गिणीवातूलावहगिरीशानां सुग्रहतया **अतिलघिमे**त्यन्वयः । प्रकृत्यर्थप्रशासनादानात् प्रत्ययार्थकर्मपरिग्रहाच्च प्रकृतिप्रत्यययोः । स्वारस्यानपायाल्लाघवं दुरपह्नवमिति भावः ॥

न केवलं लाघवम्, अपि तु शब्दतः प्रशासनकर्तृत्वस्य, तत्र श्रुत्यन्तरप्रसिद्धत्वस्य च लाभेन श्वेतकेतोर्भगवद्गुणविशेषज्ञापकसद्विद्यार्थसंक्षेपलाभात "कथं नु खलु भगवः स आदेशः" इत्याद्यग्रिमप्रश्नवाक्योत्थापकतया स्वारस्याच्चेति बोध्यम् । तदेतत् ध्वनयन् आह - **सर्वात्मे**ति । न च णिजन्तत्वणिजिष्ठवद्भावादीनां शाब्दिकैकसमधिगम्यतया सर्वेषां प्रत्यभिज्ञावैशद्यासिद्धिरिति वाच्यम् । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति साङ्गाध्ययनविधिबलात् "प्रधानं च षट्स्वङ्गेषु व्याकरणम्" इति व्याकरणस्य

प्रधानाङ्गत्वविधिबलात् च तदभिज्ञानापेक्षया स्वारसिकार्थस्यैव वेदार्थतालाभेनान्येषां प्रतीतेरप्रयोजकत्वात् । अत एव 'अयं ते योनिः' इत्यादिमन्त्रे 'तं जानन्नग्न आरोह' इत्यादौ अनुदात्तश्रवणादिना 'अग्न' इत्येव च्छेदः । न तु 'नग्न' इतीत्यादितन्मात्रगम्यार्थस्वीकार इति बोध्यम् । एवमपि आचार्याभिमतस्यैव श्लाघ्यत्वमित्यभिप्रायं विवृण्वन्नाह - **आचार्या** इति । अस्य **तथापीत्यादिः** । उक्तव्युत्पत्तेः शब्दवित्सुमहतया ग्राह्यत्वेऽपीति तदर्थः । तदेतद् ध्वनयति - **एनामपीति** । **प्रक्रियाभूमेति** । तृञ्णिजचां कल्पनया तृञ्णिचोर्लोपकल्पनया च घञ्मात्रपराचार्यकल्पाद् गौरवस्य **परमतात्** गौरवसंपादनयेति भावः । वस्तुतस्तु **परमतादुपदेशपर्यवसायि**विफलप्रकृत्यर्थपरात् अस्य श्रुतिव्याकरणानुगुण्येन प्रक्रियागौरवस्य अकिञ्चित्करत्वेन तन्निरसनाय उपायान्तरत्वं सुवचं, किन्तु **आचार्य**कल्पात् गौरवेण तैरुपेक्षित इति बोध्यम् । एवमेवादेशशब्दादर्शाद्यच्कल्पनमपीत्याह—**अत्याक्षुरिति** । **अर्शआद्यच्मतमिति** । इदमुपलक्षणं ; आदेशेन = शासनेन ब्रह्मादीनतिक्रामतीत्यर्थे "प्रातिपदिकाद् धात्वर्थे" इत्येतत्प्रपञ्चभूते 'तेनातिक्रामति' इत्यनेन णिचि, पचाद्यचि ब्रह्माद्यतिशयितशासनवत्पर आदेशशब्द इति पक्षस्यापि सम्भवात् । अत्र पक्षे 'अन्तः प्रविष्टः' इति श्रुतौ 'जनानां' इत्यस्य ब्रह्मादिपर्यन्तानामित्यर्थो विवृतो भवतीति बोध्यम् ॥ ३६ ॥



ननु आचार्यैरादेशशब्दस्य भावघञन्तत्वमेवाश्रित्य कर्मघञन्तपरपरमतनिरासः कुतो न कृतः ? 'विज्ञानमानन्दं ब्रह्म' इत्यादिवत् "तद्गुणसारत्वात्" इति न्यायेन शासनसारत्वप्रतिपादने अर्थस्वारस्यातिशयेन प्रत्ययास्वारस्यान्वारुह्यवादप्रसङ्गेन च करणघञ्पक्षादपि लाघवादित्याशङ्क्य परिहरति—

**यद्यप्यादेशशब्दं घटयितुमुचितं भावघञ्योगतोऽपि**
**प्राधान्याच्छास्तिरूपे महिमनि भगवद्भूम्नि भूमादिवाग्वत् ।**
**छान्दोग्यस्थोक्तिभङ्गी भवति च सदृशी वक्तुरेवं ; तथाऽपि**
**प्राप्ते घञ्सार्थकत्वे न हि तदपहतिर्युज्यते प्राक् फलोक्तेः ॥३७**

**यद्यपीति** । **आदेशशब्दमिति** । अस्य **घटयितुमित्यने**नान्वयः । न तु **उचितमित्यनेन** ; प्रथमापत्तेः । तुमुन् तु अध्याहृतास्तिक्रियामादाय "शकधृष" इत्यादिना विहित इति बोध्यम् । **प्राधान्यादिति** । **शास्तिरूपे** शासनात्मके **महिमनि** भगवद्गुणविशेषे 'ऐतदात्म्यमिदं सर्वम्' इत्युक्तसर्वशरीरत्वोपपत्तये, अन्तः प्रविश्य नियमनरूपगुणे सद्विद्यावेद्यत्वतात्पर्यविषयत्वरूपप्राधान्यमित्यर्थः । प्राधान्येऽपि भावप्राधान्येन निर्देशे धर्मिनिर्देशाभावे अन्यधर्मिग्रहणासङ्गतिरित्यत आह—**भगवद्भूम्नीति** । **भूमादीति** । "यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यद् विजानाति, स भूमा । अथ यत्रान्यत् पश्यति, अन्यत् शृणोति, अन्यद् विजानाति, तदल्पम्" इति

भूमविद्यावाक्यवदित्यर्थः। यद्यप्यत्र धर्मपरस्यापि भूमशब्दस्य धर्मिपरत्वशब्दप्रतिसम्बन्धिशब्दत्वाद् भूमगुणविशिष्ट एव 'भूमा' इत्युक्तः-इति उक्तम्; तथाऽपि "यस्मिन् विज्ञाते सर्वमिदं विज्ञातम्" इत्यादिनिर्दिष्टयच्छब्दार्थस्य ब्रह्मण एव "तमादेशं" इत्यादेशपदार्थत्वप्रतीतेः धर्मपरस्याप्यस्य धर्मिपरत्वं सुगममिति भावः। एवं सति क्रमेण विद्याद्वयपरच्छान्दोग्यस्य भगवद्गुणविशेषे प्राधान्यद्योतकनिर्देशसारूप्येण भगवत्प्रकरणसामञ्जस्यं च समर्थितं भवतीत्याह— छान्दोग्यस्येति। एवं—भावघञन्ततया। वक्तुः आदेशशब्दं व्युत्पादयतः, मते इति शेषः। छान्दोग्यस्योक्तिभङ्गी—क्रमेण षष्ठसप्तमाध्यायाभ्यां बोधिता सद्विद्याभूमविद्याभङ्गी, सदृशी—अनुरूपा भवति। परिहरति—तथाऽपीति। प्राप्त इति। 'सम्भवति सार्थकत्वे निरर्थकत्वमन्याय्यम्' इति न्यायात् कर्मघञन्तत्वसम्भवे भावघञन्तत्वमयुक्तमिति परैः शङ्कितव्यं स्यादिति प्रत्ययास्वारस्यतादवस्थ्यमिति भावः। घञ्सार्थकत्व इति। दृष्टार्थकत्वे-अदृष्टार्थबोधकत्वे चेत्यर्थः। तत्राद्यं स्वमताभिप्रायम्, द्वितीयं परमताभिप्रायम्। तत्र स्वमतदृष्टार्थत्वस्य करणघञन्तत्वपक्षे सम्भवमाह—प्राक् फलोक्तेरिति। 'येनाश्रुतम्' इत्यादिना यच्छब्दपरामृष्टादेशपदार्थस्य अतिदेष्टृरूपत्वे एव निमित्तोपादानैक्यसिद्धिरिति फलस्य आगुक्तेरित्यर्थः॥ ३७॥



अथ भावप्रधाननिर्देशत्वे परमतप्रक्रियाप्रवेशापत्तिसम्भावनयाऽपि करणव्युत्पत्तिरेव आचार्यैर्दर्शितेति दर्शयन्, ईदृशव्युत्पत्तिविशेषप्रदर्शनमहोपकारलाभहर्षोद्रेकेण च आचार्याणामाप्तत्वे सर्वोत्कर्षजयघोषपूर्वमेकया ग्रन्थं निगमयति—

इत्थं सत्यद्वितीयश्रुतिफलिततयाऽऽपातधीतुष्टिमद्भिः
भ्रान्तं ब्रह्माविशेष्यं सुखदलनपदं शासितृत्वोक्तिलाभात्।
ज्ञानानन्दादिशब्दैः सदृशमितरथा शङ्कितव्यं परैः स्यात्
तस्मादाप्तोक्तमास्ते करणघञमिह प्रोचुराचार्यपादाः॥

इत्थं सतीति। आदेशशब्दस्य करणघञन्तत्वे सत्येवेत्यर्थः। अद्वितीयश्रुतीति। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म' इत्यत्र अद्वितीयपदेन स्वगतभेदनिषेधलाभात् ब्रह्मणः आविशेष्यं—निर्विशेषत्वं आपातधीतुष्टिमद्भिः भेदश्रुतिघटकश्रुतिपर्यालोचनाक्लेशासहतया बालसूर्यमण्डलविषयफलबुद्धिन्यायेन तत्त्वज्ञानलाभभ्रमेण तुष्टिमद्भिः भ्रान्तं ब्रह्माविशेष्यं इति इत्थं सत्येव सुखदलनपदमित्यर्थः। सद्विद्याप्रकरणस्य ब्रह्मणि सविशेषत्वतात्पर्यसद्भावे उपक्रमरूपतात्पर्यलिङ्गत्वेन शासितृत्वगुणपरस्य आदेशशब्दस्य प्रतिपादयितुं सुशकत्वादिति भावः। ननु अस्य भावसाधनत्वेऽपि 'तमादेशम्' इत्यत्र तच्छब्दसामानाधिकरण्येन अनेकविशेषण-

विशिष्टैकार्थपरत्वबोधकेन सविशेषत्वसिद्धिः सुवचैवेत्यत्राह—ज्ञानानन्देति । 'सत्यं ज्ञानम्' इत्यादौ ज्ञानशब्देन, तादृशेन 'आनन्दो ब्रह्म' इत्यत्र आनन्दशब्देन, 'विज्ञानमानन्दम्' इत्यत्र विज्ञानशब्देन च सदृशमित्यर्थः । इतरथा भावसाधनत्वे । शङ्कितव्यमिति । सामानाधिकरण्यस्य अखण्डैकार्थपरत्वग्राहकत्वस्य ज्ञानादिशब्दानां तत्तद्विरोधिप्रत्यनीकपरत्वस्य च परैः स्वीकारात् तद्रीत्या आदेशशब्दस्यापि सविशेषत्वग्राहकत्वालाभ इति परैरुद्भावनीयशङ्कं स्यादित्यर्थः । ज्ञानानन्दशब्दयोः भावसाधनत्वेऽपि प्राज्ञत्वेन प्रथितस्य ब्रह्मणः ज्ञानानन्दगुणकत्वेऽपि ज्ञानानन्दादिस्वरूपत्वस्यापि सद्भावपरतया तत्तत्प्रवृत्तिनिमित्तरूपमुख्यार्थवृत्तिसामानाधिकरण्याभ्यामेव सविशेषपरत्वस्थापनेन इहापि तथा सम्भवेऽपि, प्रकृते पराभिमतसामानाधिकरण्यादिस्वरूपमभ्युपेत्यापि सविशेषत्वसाधनाय करणघञन्तत्वाश्रयणमिति भावः । ग्रन्थान्ते मङ्गलाचरणायाह—आचार्यपादा इति ॥ ३८ ॥

एवमादेशशब्दविचारात्मकं ग्रन्थमष्टत्रिंशता स्रग्धराभिर्निबध्य, तस्य प्रतिपाद्यम् एकोनविंशतिवृत्तगुम्भद्वयगुम्भितहारमणिसमाख्यकण्ठाभरणविशेषसाधर्म्यमभिप्रेत्य, आदेशमणिनामकताप्रतिपादनपूर्वकस्वाभीष्टपरमगुरुपरमकारुणिकपरब्रह्मभूतलक्ष्मीनृसिंहचरणारविन्दयोः तमिमम् आदेशमणिं समर्प्य, परमपुरुषवरणीयता-



हेतुगुणविशेषमहितमहाभागवतगोष्ठीषु हृदयङ्गमप्रचितप्रचारसिद्धिं प्रार्थयते—

अष्टाभिस्त्रिंशता च व्यरचि गुणवता स्रग्धरावृत्तगुम्भैः
गोपालाचार्यनाम्ना बुधजनमणिना कौशिकोत्तंसभूम्ना ।
आदेशाख्या मणिः श्रीनरहरिचरणाम्भोजयोरर्पितैषा
जीयाद् आतारतारापति हृदि सुदृशां नाथगाथापराणाम् ॥

अत्रामत्याऽथ मत्या गदितमनुचितं यद् भवेत् क्षम्यतां तद्
वेदान्ताचार्यमुख्यैर्महितगुरुवरैर्नाथपादाब्जचित्तैः ।
श्रीकृष्णार्यादिभिरप्यधरितधिषणैर्दोषधीदूरचित्तैः
दोषज्ञैरप्यपत्याविशदवचनवद् हृष्यतां चैतदेतैः ॥ ४० ॥

नरहरिचरणद्वन्द्वं जयति जगत्सर्वशासनसमुत्कम् ।
वरदसुदर्शनसूरिप्रथितवचोबृंहणीयनिगमोद्यम् ॥ ४१ ॥

जयति यतिराजसूक्तिः निगमशिरस्सूरिदिव्यगीर्जयति ।
विशदितशारीरकभागधिकरणगणा गणेयभावौघा ॥ ४२ ॥

अनेन वैदिकादेशमणिग्रन्थेन कर्मणा ।
साक्षात् लक्ष्मीनृहर्यक्षो गुरुर्मे प्रीयतां प्रभुः ॥ ४३ ॥

इति श्रीमदहोबिलमठदिव्यास्थानीनिर्वहणधुरन्धरैः (पूर्वाश्रमे 'पिक्कैपाक्कम् इलैयविल्लि गोपालाचार्याः' इति प्रसिद्धैः) विपश्चिदपश्चिमैः वैयाकरणसार्वभौमैः श्रीवण् शठकोप श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैरनुगृहीतः आदेशमणिः सव्याख्यः समाप्तः ।

॥ शुभम् ॥

भगवते भाष्यकाराय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते लक्ष्मीनृसिंहपादुकासेवक श्रीवण् शठकोप श्रीशठकोपरामानुजयतीन्द्रमहादेशिकाय नमः

श्रीरस्तु

श्री वीरराघवशठकोपयतीन्द्रमहादेशिक-

विरचिता

# दासदासीसमर्थनी

यामुनार्यपदाम्भोजदास्यैकरतमानसः ।

रामानुजार्यो हृदि मे सन्निधेयाच्छ्रियै सदा ॥ १ ॥

श्रीमद्यामुनसूरिसूक्तकमलास्तोत्रे चतुश्श्लोकिने

'दासीदास' पदप्रतीपपठनं शास्त्रोज्झम् एके विदुः ।

शेषस्येह 'पुमान् स्त्रिया' व्यकरणाद् व्यूहे गवाश्वादिके

सावस्कादि यथोदितं हि वहतेऽयं चैकवत्त्वार्हताम् ॥ २ ॥

सत्यं तत्र गणे यथा पठितमेवैकत्वशिष्टिर्भवेद्

नात्रैकत्वविधिप्रवृत्तिः, अपि तु द्वन्द्वो मिथो योगभाक् ।

दासीशब्दगदीर्घहानिरुदियाद् व्यर्था गणोक्तिस्तदा

तद् द्वन्द्वात्तय एकशेषविरतिर्व्यूहे निपात्येप्यताम् ॥ ३ ॥

नन्वेवं तु निपातनं च न यथापाठं कथं स्यात्? तदा

सूक्तौ द्वन्द्वकथा कुतः? तत इदं विध्युज्झमेवेति चेत् ।

मैवम्; प्रागुदितैकशेषविधिना निर्लक्ष्यनित्यैकता

ह्यर्थापत्तिमुखाद्विरुद्धपदयोर्द्वन्द्वार्हतां ज्ञापयेत् ॥ ४ ॥

ज्ञाप्यार्थोऽपि समानदेशम् अयतामित्युक्त्यनर्हा वृथा

स्यादेवं सति कूडिधानगमिताऽसिद्धत्वनित्यादिका ।

अव्यापिन्युदियाद् व्यवस्थितमिदं तन्नेति काणोदितं

भाष्योक्तोऽत्र यथोदितत्वनियमो भत्वादि तत्सूत्रगम् ॥ ५ ॥

किञ्चात्रत्ययथोदितत्वनियमव्यावर्त्यरूपं गणे
दासीदासपदेऽपि तुल्यनयतो वाच्यं हि तत्सिद्धये ।
द्वन्द्वार्हं प्रतिलोमरूपमनुशन्नप्याश्रयेद् अन्यथा
सङ्कोचो नियमस्य वाच्य इति तद् द्वन्द्वोऽत्र भाष्याशयः ॥६॥

तत् सिद्धं गुरुवर्ययामुनचतुःश्लोकीस्थदास्यन्तिम-
द्वन्द्वः साधुरिति प्रवीणपदविद्गोष्ठीविमर्शक्षमम् ।
गोनर्दीयवचोऽनुसारपदवीदूरैर्यद् आपातधी-
तुष्टैः शङ्कितमत्र, तन्न मनुमो ब्रह्माद्वयोक्त्यादित् वत् (वत्) ॥७

इत्थं यामुनयोगिवर्यचरणाम्भोजद्वयीभृङ्गराट्-
श्रीरामानुजपादपद्मजरजोनिर्धूतपङ्कात्मना ।
वीक्षांशेन शठारिलक्ष्मणमुनेः सत्ताजुषेयं कृतिः
गोपालाभिधसूरिणा विरचिता श्रीयामुनामोदिनी ॥ ८ ॥

जयति हि यामुनसूक्तिर्निगमशिरस्सूरिबृंहितातिशया ।
सदयितसुरगणसिद्धयद्दासीदासा हरिप्रिया जयति ॥ ९ ॥
श्रीमान्नृसिंहः श्रयतां भवतापहरो हरिः ।
यामुनामोदिनाऽनेन कर्मणा मोदतां विभुः ॥ १० ॥

इति श्रीवीरराघवशठकोपयतीन्द्रमहादेशिक-
विरचिता दासदासीसमर्थनी समाप्ता ।
श्रीमते यामुनार्यमहागुरवे नमः ।
श्रीमते रामानुजाय नमः ।
श्रीशठकोपरामानुजयतिवरमहादेशिकाय नमः

---

श्रीवीरराघवशठकोपयतीन्द्रमहादेशिक-
विरचिता

## मकाररक्षा

श्रीरामानुजसिद्धान्तरक्षायै भुवि लक्षितम् ।
प्रणम्य निगमान्तार्यं कुर्वे रक्षां मकारगाम् ॥ १ ॥

प्रणवगतमकारे कश्च्य औणादिको ड्विः
ज्ञ इति पदसमार्थः सोऽत इत्युक्तमार्यैः ।
विडुपगमबलात् स्यान्मन्यतेर्मस्यतेर्वा
'यचि भ' विधिविदूरस्यापि टेर्लोपशिष्टिः ॥ २ ॥

नन्वेवं मान्तधातोर्नविधिरिह भवत्वेकवर्णास्यतत्त्वं
ह्याद्यन्तत्वातिदेशात् सुलभम् असहिते ज्येष्ठतावच्च पुत्रे ।
मैवं ; शङ्कादि यद्वत् विकृतिविरहितं कार्यबाहुल्यशिष्टेः
भाष्याद्युक्तं, तथेयं प्रकृतिरपि जहात्यत्र तादृग्विकारम् ॥ ३ ॥

स्यात् तत्रोणादयः स्युर्बहुलमिति विधेः प्रत्ययानां तथात्वं
न ह्येवं प्रकृत्या विकृतिरिह भवेद् दुर्निरोधेति चेन्न ।
मैवं कौतेः कलप्रत्ययविधिगमिते कोमले कित्त्वबाध्यं
बाहुल्यात् साधयन्तो गुणविधिमखिलाः प्रातिकूल्यं भजेरन् ॥४

नन्वत्रोणादिबाध्यो गुणविधिरिति हि स्पष्टकित्त्वादिसिद्धं
तद्वद् मान्तस्य धातोर्नविधिमपवदेद् ड्विः स्फुटं साधयेद् वा ।
मैवं ; तेनैव साध्यो नविधिरिति नहि ड्विप्रवलसेरभावे
धातोर्मान्तत्वलाभः सति हि टिविलये तस्य तत्त्वं न नो चेत् ॥

एषा रीतिर्मघोनस्तृबहुलविषये नान्ततहेतुर्दीर्घे
संयोगान्तस्य लोपे प्रसजति विधिना सिद्धवत्त्वादलभ्ये ।
बाहुल्यात् प्राप्तिरुक्ता प्रथितबुधवरैस्तत्र न त्रासदीर्घः
स्पष्टं बाध्योऽपि तृक्तान्वयतदितरतः सिद्धहेतुत्वमात्रात् ॥ ६ ॥

नन्वेवं यद्यपीदं ङिपरिकलनया साधनार्हं, तथाऽपि
स्याद् अज्योगं विना हल्पठनमपि न हीत्येवमुच्चैरुवाचे ।
सूत्रे भाष्यान्मकारः पठितुमसुशकः, का कथा साधुतायाः !
तस्माद् अत्रत्यसूक्तिर्बुधजनसुगमा स्यात् कथा हीति चेन्न ॥ ७

ब्रह्म स्याल्लक्ष्यम् आत्मप्रणवशरणवृत्त्युक्तयो बाणचाप-
व्याधव्यापाररूपा इति विवृतिपराम्नायवाक्यात् प्रमाणात् ।
जीवैकार्थो मकारः सुगम इति बलाद् उक्तभाष्यस्य यस्मात्
प्राक् पश्चाद् वाऽच्चयोगे न यदि स खलु हल् नेति भावोऽत्र
नैवम् ॥ ८ ॥

इत्थं चम्पककाननस्थविबुधैः वेदान्तसूरीशितुः
सूक्तिस्वादुसुधारसोर्मितरलैर्विद्यापयोराशिभिः ।
श्रीरामानुजयोगिदृष्टिविषयो गोपालदासः स्वयं
प्रेम्णा पृष्ट इमां मकारविषयां रक्षां व्यधात् सन्मुदे ॥ ९ ॥

चम्पकारण्यरक्षायै रुक्मिण्या भामया च यः ।
दृश्यते स सहेमाब्जः प्रीयतां रक्षयाऽनया ॥ १० ॥

इति श्रीवीरराघवशठकोपयतीन्द्रमहादेशिक-
विरचिता मकाररक्षा समाप्ता ।

श्रीमत् - पिळ्ळैपाक्कम् कौशिक बालधन्वि गोपालार्येण
(श्रीमदहोबिलमठीयदिव्यास्थानीनिर्वहणधुरन्धरैः श्रीवीरराघव-
शठकोपयतीन्द्रमहादेशिकैः) विरचितः—

## स्थेमदर्पणः

आस्थे पञ्चास्यदास्यैकरसिकान् निजदेशिकान् ।
नत्वा गोपालसुधिया तन्यते स्थेमदर्पणम् (णः) ॥ १ ॥

श्रीमद्भाष्याद्यपद्ये स्थितिवचनतया स्थेमशब्दो विवव्रे
तत्रोणादिप्रसिद्धं त्विमनम् अभिदधुस्तिष्ठतेर्वेम्नि यद्वत् ।
नैतद् रम्यं ह्युणादौ निद् इमनिन् अकथि प्रक्रमात् तस्य वेञः
सूत्रे स ह्याद्युदात्तः पठति तु निगमः स्थेम्न इत्यन्तमुच्चैः ॥ २ ॥

अयमर्थः—‘ अखिल ’—इत्यादिश्लोके स्थितः स्थेमशब्दः स्थितिवचनतया संरक्षणफलभूतकालान्तरानुवृत्तिपरतया विवव्रे-व्याख्यातः । श्रुतप्रकाशिकायामिति शेषः । ‘स्थेमा=स्थितिः’ इति तन्नोक्तेरिति भावः । तत्र स्थेमशब्दे । उणादिप्रसिद्धम् इमनं ‘वेञः सर्वत्र’ इत्युणादिसूत्रेण विहितमिमनिनं ‘ जनिमृङ्भ्यामिमन्’ इत्यतस्तदनुवृत्तेः ‘ सर्वत्र ’ इत्यनेन लोकवेदयोस्तत्प्रवृत्त्युक्तेश्च । वेम्नि वेमशब्दे यद्वत् , तद्वत् अत्र तिष्ठतेरभिदधुः । बहुलवचनादिति शेषः । अत्र तु ना स्थिरशब्दात् पृथ्वादित्वादिमनिचि निश्चलत्वरूपस्थिरत्व-परतद्धितान्तस्थेमशब्दो व्यवच्छिद्यते । स्थिरशब्दस्य पृथ्वादिगणे

पाठाभावस्य वृत्त्याद्युक्तत्वेन तस्य दौर्लभ्यात्। एवञ्च अगत्या बाहुलकात् स्थाधातोर्वेमवद् इमनिन् एवाश्रयणीय इति आशयः। यद्यप्यत्र 'हृभृजृसस्तृशृभ्य इमनिच्' इति उणादिसूत्रेण विहित इमनिजेव भरिमादिवत् स्वीकर्तुं युक्तः, तथा सति श्रुतौ 'सन्नह्यत्येवैनमेतया स्थेम्ने' इत्यन्तोदात्तश्रवणं च सिद्धं भवति। इमनिजन्तो हि 'ञ्नित्यादिर्नित्यम्' इत्यनेनाद्युदात्तः स्यात्। इमनिचि हि 'चितः—' इति अन्तोदात्तत्वे स्थेमन्शब्दात् ङयि 'अल्लोपोऽनः' इत्यल्लोपे तस्य वक्ष्यमाणरीत्या उदात्तनिवृत्तिस्वरेण उदात्तत्वसिद्धिरिति स्पष्टमेव। तथाऽपि 'हृभृ—' इति सूत्रे 'अशिशकिभ्यां छन्दसि' इति पूर्वसूत्रात् 'छन्दसि' इत्यनुवृत्त्या छान्दसस्थेमशब्दस्य स्वरसिद्ध्यर्थं बाहुलकात् सम्भवेऽपि, तस्य लोकसाधारणत्वाय 'वेञः सर्वत्र' इत्यनेन विहित इमनिन् एव बहुलग्रहणात् तिष्ठतेरपि स्वीकर्तव्यः। 'छन्दसि' इत्यस्य प्रायविषयत्वं तु 'वेञः सर्वत्र' इत्यत्र 'सर्व' ग्रहणवैयर्थ्यापत्त्या दुर्वचम्—इति हृदयम्।

उत्तरार्धेनोक्तां व्युत्पत्तिमुपक्षिपति—**नैतद् रम्यमिति**। विदुषामिति शेषः। हृदयङ्गमं नेत्यर्थः। कुत इत्यत्राह—**हीति**। हि यतः **उणादौ नित्**—नकारेत्कः **इमनिन्** इमनिन् इत्याकारकः। 'गवित्ययमाह' इत्यादिवत् अविभक्तिको निर्देशः। तेन डमुडादिकं न। **अकथि**—'वेञः सर्वत्र' इत्यनेनोक्तः। **तस्य** इमनिन एव वेञः सूत्रे—'वेञः सर्वत्र' इति लोकवेदसाधारणसूत्रे। **प्रक्रमात्**



'जनिमृङ्भ्यामिमन्' इति प्रकृतत्वात्। अस्तु, को दोषः? इत्यत्राह-**स हीति**। **आद्युदात्त इति**। 'ञ्नित्यादिर्नित्यम्' इत्यनेन। ततो वा का हानिरित्यत्राह—**पठतीति**। **निगम इति**। 'सन्नह्यत्येवैनमेतया स्थेम्ने' इति तैत्तिरीयरूप इत्यर्थः। अपौरुषेयवाक्यत्वद्योतनाय अधिकरणस्य 'स्थाली पचति' इतिवत् स्वतन्त्रत्वविवक्षा। **स्थेम्न इत्यन्तम्**—'स्थेम्ने' शब्दे अन्तवर्णमेकारम्। **उच्चैः**—ऊर्ध्वभागे निष्पन्नम्। उदात्तमिति यावत्। **पठति** श्रावयतीत्यर्थः।

अयं भावः—स्थेमशब्दस्य वेमवत् इमनिन्नन्तत्वाभ्युपगमे तस्य आद्युदात्ततया उक्तश्रुतौ तस्य अन्तोदात्तश्रवणं विरुद्ध्येत।

यद्यप्यन्त्यस्योदात्तत्वेऽपि ङयि 'अल्लोपोऽनः' इत्यल्लोपे उदात्तभूताकारो न श्रूयते, तथाऽपि तस्योदात्तलोपत्वेन 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन यस्मिन् अनुदात्ते परे उदात्तो लुप्यते ततः परस्यानुदात्तस्य उदात्तः, इत्यर्थकेन विभक्त्युदात्तश्रवणं सिध्यति॥ आद्युदात्तत्वे तु न तत् सिध्येत्। तस्मात् तत्प्रयोगबलादेव स्थिरशब्दस्य पृथ्वादिषु दृढादिषु वा पाठभ्रंशानुमानात् 'पृथ्वादिभ्यः' इत्यनेन 'वर्णदृढादिभ्यः' इत्यनेन वा 'तस्य भावस्त्वतलौ' इत्यधिकारस्थेन भावे इमनिचि स्थेमशब्द इत्येष्टव्यम्। तथा सत्येव 'सन्नह्यत्येवैनमेतया स्थेम्ने' इति ब्राह्मणविवरणीयतया गृहीते पूर्वपक्षाशङ्काग्रिमे 'स्थिरो भव वीड्वङ्ग' इति मन्त्रे प्रतिपन्नस्थिरशब्द-

प्रत्यभिज्ञानुग्रहश्च सिद्धयति। इमनिचि च चित्त्वात् स्थेमशब्दान्तोदात्तत्वं च सिद्धम्।

एतेन भरिमादिवत् बाहुलकात् तिष्ठतेश्छान्दसेमनिच आश्रयणेन श्रूयमाणान्तोदात्तसिद्धौ पृथ्वादिगणपाठभ्रंशकल्पनं निर्मूलमित्यपास्तम्। ब्राह्मणस्य मन्त्रवर्णप्रत्यभिज्ञापकत्वं च 'प्र मातृभ्यो अधि कनिक्रदद् गाः' इति मन्त्रोपात्तमातृशब्दभूतप्रातिपदिकस्य समनन्तरपूर्वब्राह्मणे 'ओषधयो वा अस्य मातरः' इत्यादौ प्रत्यभिज्ञानेन 'अग्न आयाहि वीतये' इति मन्त्रोपात्तक्रियाशब्द-वीतिपदोपात्तव्युपसृष्टेण्धातोरिति वा 'इमौ लोकौ व्यैताम्' इति ब्राह्मणे प्रत्यभिज्ञानेन च, अश्वमेधप्रथमप्रश्ने 'बहुर्वै बहुश्वायै बहुजाविकायै' इत्यादिवाक्यगतानेकबहुशब्दस्य "भूमा वै होता" इत्यादिवाक्येषु असकृदुपात्तभूमशब्दे दृश्यमानबहुशब्दादेशभूशब्देन(ब्द)प्रत्यभिज्ञानेन च प्रसिद्धम्। नचात्र "अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरशिबिर" इत्युणादिसूत्रेण स्थाधातोः किरच्प्रत्ययान्ततया निपातितस्य स्थिरशब्दस्य क्रियाशब्दत्वेन तद्गतस्थाधातोरिमनिजन्तस्थाधातुना प्रत्यभिज्ञानसंभवेन ब्राह्मणस्य मन्त्रवर्णप्रत्यभिज्ञापकत्वसिद्ध्या न स्थिरशब्दस्य पृथ्वादिपाठभ्रंशकल्पनावश्यकतेति वाच्यम्। "आयनेयीनी" इति सूत्रे भाष्ये शङ्कादिषु खादीनामीनाद्यादेशमाशङ्क्य 'प्रातिपदिकविज्ञानात् सिद्धम्' इत्युक्तत्वेन अखण्डप्रातिपदिकतयैवोणाद्यन्तानां साधुत्वम्, इत्यर्थकामेनाव्युत्पत्तिपक्षस्यैव पाणिन्यभिमतत्वसिद्ध्या, व्युत्पत्तिपक्षेऽपि



वक्ष्यमाणरीत्या रूढिस्वीकारावश्यकत्वेन च क्रियाशब्दत्वदौर्लभ्येन प्रातिपदिकप्रत्यभिज्ञानस्यावश्यकत्वात् प्रागुक्तरीत्या लोकसाधारण्याय भरिमादिवदिमनिजन्तत्वानौचित्येन वेमवदिमनिनन्तत्वस्यैव वक्तव्यत्वेन पठ्यमानान्तोदात्तत्वस्यासिद्ध्यापत्तेश्च। वेमादिवदिमनिन्नन्तत्वे 'कर्तरि कृत्' इति प्राप्तकर्त्रर्थकत्वात्यागेन भावार्थकस्थितिशब्दपर्यायत्वसिद्धेश्च। बाहुलकात् 'कर्तरि' इत्यस्यापि त्यागे तु अनिर्दिष्टार्थत्वेन स्वार्थिकतया भावार्थत्वसम्भवेऽपि

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥"

इति भाष्यसिद्धस्य उणादीनां रूढ्यर्थपरभूतसञ्ज्ञाशब्दविषयत्वस्य विरोधापत्तिः। स्थिरशब्दस्याप्यौणादिकान्तत्वेन रूढशब्दत्वात् अपायविशेषनिवृत्तिरूपनिश्चलत्वस्य च तद्रूढिनिमित्ततया तदुत्तरभावप्रत्ययेनापि तस्यैव बोधेन जगति तदबाधेन तद्धितस्वीकारे न विरोधः। श्रुतप्रकाशिकायां स्थितिरित्यनेन तद्विवरणं तु स्थाधातोर्गतिनिवृत्तिपरतया, गतेश्च विषयविशेषपुरस्कारे अपायरूपतया तन्निवृत्तेरेव "एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यादिश्रुत्युपात्तस्थाधातुना प्रशासनविधृतपदार्थान्वितेन प्रत्यायनात् तत्प्रत्यभिज्ञासहकारेण प्रकृतस्थितिशब्दगतस्थाधातुनाऽपि तत्प्रतीतिलाभेन तस्य तत्समानार्थत्वलाभादुपपन्नमेव।

एतेन स्थेमेत्यस्य स्थितिरिति विवरणेन स्थिरत्वव्यवच्छेद इति नाशङ्कनीयम्। एवं विवरणाभावे सत्तास्थित्योः पर्यायतया लोकव्यवहारेण सत्ताया एव प्रतीत्यापत्तौ वस्तुमात्रस्य क्षणिकत्वादिमतव्यावृत्त्यनापत्तिः। क्रियते च, स्थित्या तद्व्यावृत्तिः। यथा **न्यायतात्पर्यटीकायाम्** 'स्थेमा च भावनामुपपादयिष्यति'; **तात्पर्यपरिशुद्धौ** च संशयपरीक्षायां 'बौद्धादेर्निश्चितक्षणिकत्वादेरपि झटिति विघटितसाधनात् परितो निरस्तविभ्रमशङ्कात् संशयं विनैव स्थेमादिनिर्णयोत्पत्तेः' इति। एवञ्च श्रुतिप्रसिद्धा स्थितिरेव (स्थिरत्वरूप) स्थेमशब्दार्थो न त्वन्यादृश इति ज्ञापनाय स्थितिरिति विवरणमिति सिद्धम्।

"स्थिरशब्दादिमनिचो भावात् तत्प्रसक्तिशङ्कानिवृत्त्यर्थं विवरणम्" इति तु न सम्यक्। पृथ्वादिष्वपाठेन तत्प्रसक्त्यभावेन तच्छङ्काया अनुदयात्। उक्तश्रुतिप्रयोगबलात् तत्पाठानुमानात्। तत्प्रसक्तिसम्पादने तु प्रकृते तदर्थस्वीकारे उक्तरीत्या विरोधाभावेन तद्व्यावृत्तेर्विफलत्वेन तदर्थत्वासम्भवाच्च। तद्धितान्तपक्ष एव स्थिरशब्दार्थनिश्चलत्वस्य स्तम्भादिवृत्तिवृक्षादिव्यावृत्तचलनराहित्येऽपि दर्शनेन निखिलचिदचित्साधारणतया प्रयोगप्राचुर्येण अपायविशेषनिवृत्तिरूपनिश्चलत्वमेव तन्निमित्तमिति बोधयितुं स्थितिरिति विवरणमर्थवत्तरम्॥

अत एव 'प्रकृत्यैकाच्' सूत्रे भाष्ये 'प्रकृत्यैकाजिष्ठेमेयस्सु चेत् (अथ इष्ठेमेयस्सु प्रकृतिभावे) किमुदाहरणम्? प्रेयान्, प्रेमा, प्रेष्ठः, स्थेयान्, स्थेमा स्थेष्ठः', इत्युदाहृतम्।



यद्यपि इदानीन्तनकाशीमुद्रितदेवनागर**भाष्यकोशे** 'प्रेयान् प्रेष्ठः' इत्येव पाठो दृश्यते, तथाऽपि **दाक्षिणात्यपुरातनतालपत्रग्रन्थाक्षरलिपिभाष्यकोशेषु** मदुक्तरीत्या पाठो दरीदृश्यत एव। अयमेव च युक्ततरः पाठः। अन्यथा अग्रे एतदुपक्षेपपरे 'प्रादीनामसिद्धत्वात् टिलोपो न भविष्यति' इति **भाष्ये** 'प्रादीनाम्' इत्यादिपदोपादानवैयर्थ्यं स्यात्। तस्यानुदाहृतस्थेयःप्रभृतिविषयतायां तु तादृशविषयस्य **कैयटादिभिरप्रदर्शनेन** न्यूनतापत्तिः। इष्ठादिषु त्रिष्वपि पृथगेकजातीयोदाहरणद्वयदानस्य 'निपात एकाज्' इत्यादौ 'निपात इति किमर्थं? चकारात्र जहारात्र' इत्यादिवद् **भाष्यकारशैलीसिद्धस्य** 'नैकमुदाहरणम्' इति न्यायप्रसरशङ्कानिवृत्त्यत्यर्थस्य प्रथमदर्शितकोशपाठ एव सिद्धेश्च। प्रियशब्दस्य पृथ्वादिपाठे विवादाभावेन **काशीकोशे** तत्त्यागासङ्गतिश्च। न च तदग्रे **भाष्ये** प्रेयानित्यादेः 'प्रादीनामसिद्धत्वात्' इत्यादिनोपक्षिप्तत्वेनासिद्धत्वाविषयमुदाहर्तुमुपात्ते 'श्रेयान् श्रेष्ठः' इत्यत्र इष्ठयसोरेव सम्भवात् तच्छायया प्राक् सम्भवतोऽपीमनिचः त्याग इति वाच्यम्। **वेदोपक्रमाधिकरणसिद्धान्तविरोधात्**। तत्र हि "अग्ने ऋग्वेदः" इत्यादिवाक्यगतवेदपदस्य 'उच्चैः ऋचा क्रियते' इत्यग्रिमसमानप्रकरणवाक्यगतकेवलऋगादिपदानुसारेण शाखाविशेषपरत्वबाधमाशङ्क्य, शाखामात्रस्य स्तोत्रसाधनत्वादिप्रतीतिविरोधस्याग्रिमवाक्यप्रतिपन्नस्य उपक्रमे असञ्जातविरोधितया वेदपदस्य तत्परत्वबाधाऽयोगेन शाखाविशेषपरत्वमेवेति सिद्धान्तितम्। अनेन औपरिष्टवाक्यविषयतया

भाविविरोधसम्भावनया प्रागुपस्थितार्थबाधो न युज्यत इति स्पष्टं सिद्धम्। तस्मात् काशिकोक्तपाठोऽपपाठ एवेति वैदिकप्रयोगानुगुणदाक्षिणात्यकोशपाठस्यैव साधीयस्त्वेन पृथ्वादिषु, 'ष्ठा स्थैर्ये' इति प्रयोगबलेन दृढादिष्वेव वा स्थिरशब्दपाठः स्थित एवेति सिद्धम् ॥

ब्राह्मणादेराकृतिगणत्वेऽपि सति गमके तत्र गणे पाठानुमानस्यैव 'न नञ्पूर्वात्' इति सूत्रशेखररीत्या वक्तव्यत्वेन वैदिकप्रयोगानुगुण्येन दृढादिपाठानुमानस्यैव युक्तत्वात्। 'आकडार' सूत्रभाष्यरीत्या गुणवचनत्वात् ष्यञः स्वीकारे तु शास्त्रद्वयव्यापारात् तदनाश्रयणलाघवेन तदैवौचित्याच्च। इत्थं सति "पृथ्वादिषु स्थिरशब्दपाठाभावादिमनिच् नोदाहियते" इति वृत्तिग्रन्थोऽपि पृथ्वादीमनिजन्ततया नोदाहियत इत्येवंपरतया कथञ्चिद् योज्यः। दृढादिषु पाठस्य कल्पनीयतया क्लृप्तेनोदाहरणसम्भवे कल्प्यस्य तत्त्वानौचित्यमिति तदाशयाच्च। 'नचोदाहरणमादरणीयम्' इति तु उदाहरणान्तरव्यवच्छेदपरतया नादरणीयमित्यर्थकम्। न तु तस्य साधुत्वनियामकतया अनादरणीयमित्यर्थकम्। तस्य तत्त्वाभावे उदाहरणत्वस्यैव भङ्गापत्तेः। नहि तस्य स्थादेशप्रकृतिभावमात्रे साधुत्वनियामकतया तत्त्वसिद्धिः। स्थिरशब्दादिमनिचो भावे तत्र स्थादेशस्याप्रसङ्गेन प्रकृतिभावस्य सुतरामप्रसङ्गात्, प्रकृतिभावेन तदाक्षेपमन्तरा तत्त्वासिद्धेः।

उदाहृतश्रुतिप्रयोगश्च प्रकृतसूत्रभाष्यग्रंथे स्थेमेत्युदाहरणसद्भावे अनुकूलः, तस्य श्रुतिमात्रविषयत्वे मानाभावात्।



न च श्रौतप्रयोगस्य स्वतः साधुत्वेन, शास्त्रान्वयानपेक्षणेन तस्य उक्तरीत्या इमनिजन्तत्वसाधकत्वं न युज्यत इति वाच्यम्। "उणादयो बहुलम्" इति सूत्रे भाष्ये बहुलग्रहणफलकथनाय प्रवृत्तेन

"बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्।
कार्यसशेषविधेश्च तदुक्तम्।"

इति श्लोकवार्त्तिकपादत्रयेण परिपूर्णप्रकृतिप्रत्ययतत्कार्याणां विशिष्य विधाने सर्वेष्टसङ्ग्रहसिद्ध्या तत्सङ्ग्रहाय वैदुर्थ्यादानपरबहुलग्रहणमित्युक्त्वा, 'यथाविध्येव प्रकृत्यादीनां परिपूर्णत्वं स्यात्' इत्याशङ्क्य, वैदिकानां लौकिकरूढिशब्दानां च भूयस्तया तेषां साधुत्वान्वाख्यानस्यावश्यकतया तदलाभे शास्त्रस्य न्यूनतापत्त्या तस्याश्च यथाविध्येव तेषां स्वीकारे दुष्परिहरतया तेषां यथाविधि पूर्णत्वं वक्तुमशक्यमित्यर्थस्य 'नैगमरूढिभवं हि सुसाधु' इति चतुर्थपादेन बोधनेन नैगमशब्दस्य साधुमूर्धन्यस्यापि शास्त्रान्वयनियमलाभेन तदनुरोधेन स्थेमशब्दस्य वैदिकस्य शास्त्रान्वयान्वेषणे तस्य विनिगमनाविरहेण लोकसाधारणतया उक्तरीत्या सिद्धौ बाधकाभावेन लघवेन च तस्य पृथ्वादिषु दृढादिषु वा पाठकल्पकत्वस्यावश्यकत्वात्।

यद्यपि श्रीमत्तत्त्वटीकायां स्थेमशब्दस्य स्थाना(मा?)दिवत् प्रसिद्धकृदन्तत्वस्य प्रेमादिवत् पृथ्वादीमनिजन्तत्वस्य चासम्भवमाशङ्क्य

" प्रयोगतः स्थितिः स्थेमा प्रत्ययाद्यूहशासनात् ।
अखण्डितो वा शब्दोऽयमधातूद्भवपक्षतः ॥ "

इत्युणादिव्युत्पन्नत्वाव्युत्पन्नप्रातिपदिकत्वान्यतराश्रयणेन समाहितं, तत्साधुत्वञ्च प्रयोगभूयस्तया साधितं; तथाऽप्युक्तवैदिक-भाष्यप्रयोगस्य लोकसाधारणशास्त्रान्वयनियमाभावमापाततदृष्ट्या शङ्कमानं प्रत्यपि ऋफिड-ऋफिड्डादौ भाष्यप्रयुक्ते प्रसिद्ध-ऋधातुमादाय अप्रसिद्ध-फिडादिप्रत्ययोहवत् स्थेमशब्दे प्रसिद्धस्थाधातुमादाय तस्य उक्तरूढ्यर्थपरत्वं स्वीकृत्य भावे इमनिच्प्रत्ययोहस्य स्वीकारेणापि समाधानसौकर्यसम्भवपरस्तद्ग्रन्थः । न ह्युणादौ भावे लोकसाधारण इमनिच् क्वचिद् दृष्टः, येन तमादाय शङ्कुलवत् प्रकृत्यूहपरत्वं तस्य शङ्क्येत । शङ्काग्रन्थे ' स्थाना(मा?)दिवत् ' इत्यनुग्रहेण स्थाधातोः स्थेमशब्दे सत्तानिर्णयलाभेन तत्र ऊहाप्राप्तेश्च । इत्थञ्च सर्वसाधारण्येन शङ्कानिराकरणनिपुणभावार्थौणादिकेमनिच्प्रत्ययोहपर एव तद्ग्रन्थ इति न कश्चिद् दोषः ।

एतेन "जनिम - वेमादिवत् स्थेमशब्द औणादिकेमनिजन्तः" इत्येवंपरा भावप्रकाशिकाऽपि व्याख्याता । तत्र 'वेमादिवत्' इति इमनिन्नन्तशब्ददृष्टान्तकथनं तु साधनीयनकारान्तशब्दत्वसाम्याभिप्रायेण । तच्च उणादीनामव्युत्पत्तिपक्षस्यैव मुख्यत्वसूचनाय प्रत्ययस्वरूपविशेषानादरपरमिति बोध्यम् । 'कथञ्च स्थित्यर्थः?' इति श्रीसूक्तिस्तु उणादीनामपि 'कर्तरि कृत्' इत्यनेन



कर्त्रर्थकतया स्थितिमात्रपरत्वासम्भवशङ्कापरा, न तु सर्वदा स्थितिप्रतीत्यलाभपरा । एवञ्च उणादिस्वीकाराङ्गतया रूढिस्वीकार आवश्यक इति सूचितम् । उत्तरत्र 'यत्र विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्' इति वार्त्तिकोपन्यासेन प्रकृतिप्रत्यययोर्दृष्टान्यतरविषये सन्दिग्धान्यतरोहस्वीकारपरत्वलाभेन स्थेमशब्दे स्थेत्यस्य निश्शङ्कदर्शनेन परिशेषात् प्रत्ययोहस्यैवात्राश्रयणलाभेन तस्य भरिमादिवद् विशिष्यविहितेमनिजन्तत्वाश्रयणे तद्ग्रन्थविरोधो दुर्वार एव । एवमभ्युपेत्यवादेन सर्वसाधारण्येन समाधाय उक्तवैदिक-भाष्यादिप्रयोगबलादेव पृथ्वादीमनिजन्तस्थेमशब्दसाधनसंभवे तदसम्भवपरशङ्काग्रन्थासाङ्गत्यमेव ।

अन्ते,

" ईदृशानां प्रयोगाणामबहिष्कारसिद्धये ।
बहुधा बहुलादीनामष्टाध्याय्यामुपक्रमः ॥
नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे ।
शब्दासाधुत्वमाहुर्ये शाब्दिकांस्तान् न मन्महे ॥

विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः ।
अविगीतप्रयोगेषु विगानं नैव साम्प्रतम् ॥ "

इत्युपसंहारे स्पष्टं सङ्ग्रहेणानुगृहीतम् ।

नहि उणादिव्युत्पत्तिकल्पस्यैव मुख्यतया अभिमतत्वे पुनस्तदर्थमष्टाध्याय्यां बहुलादीनां बहुधोपक्रमबलेन विशिष्टोक्त्यनुसारिव्युत्पत्तिस्मरणबलेन च साधुत्वसमर्थनप्रयासो युज्यते। स्थेमशब्दासाधुत्वशङ्कानौचित्यमेव च 'नानाव्याकरणाभिज्ञ' इति श्लोकेन कण्ठतः सूक्तम्। तत्र शब्दासाधुत्वं = इदानींतनकोशेषु पृथ्वादिगणे स्थिरशब्दपाठादर्शनमात्रेण तदिमनिजन्तासाधुत्वम्, शाब्दिकान् = लोक-वेदभवशब्दानुशासनपरत्वप्रकारेण विशिष्टशब्दशास्त्रज्ञान्, न मन्महे। अपितु प्रयोगफलकशब्दोत्पादनपरत्वरूपशास्त्रयाथात्म्यप्रकारेण विशिष्टशब्दशास्त्रज्ञान् एव मन्मह इत्यर्थः। एवञ्चोक्तलोकवेदप्रसिद्धिबलेन पृथ्वादिषु वा पाठभ्रंशानुमानेन इमनिजन्तस्थेमशब्दसाधुत्वसिद्धौ तदसाधुत्वशङ्का शब्दशास्त्रप्रकारानभिज्ञताविजृम्भितैवेत्याशयः।

यद्यपि 'नैगमरूढिभवं हि सुसाधु' इति भाष्यवार्त्तिकेन अशक्यानन्तप्रकृतिप्रत्ययकार्यविशेषकल्पनानिरपेक्षं वैदिकानां लौकिकरूढिशब्दानाञ्च समुदायरूपस्यैव साधुत्वमित्यभिप्रेतम्, 'नाम च धातुजमाह निरुक्ते' इत्यादिना नैरुक्त-शाकटायनादिमत एव प्रकृत्यादिकल्पनपूर्वकं साधुत्वप्रतिपादनाभिधानेन पाणिन्यादिमते समुदायरूपेणैव साधुत्वाभिधानमित्यस्य लाभात्; तदेतत् तत्रैवानुगृहीतम्—

"मा भूद् वा प्रकृत्यादिविभागः, मतभेदेनाखण्डितप्रातिपदिकभाषणात् 'नाम च' इत्यादिना तत्सूच्यते" इति। तथाऽपि धातुप्रकृतिकशब्दानां तथात्वेऽपि नामप्रकृतिकपदानां प्रकृत्यादिकल्पनाया



अन्ततः प्रातिपदिकत्वेनानुगमयितुं शक्यानन्तप्रातिपदिकोद्देशेनापि स्वादिप्रत्ययविधानादवर्जनीयत्वेन स्थिरशब्दाद् इमनिच्प्रत्ययकल्पनेनैव स्थेमशब्दसाधुत्वमावश्यकमबाधितञ्च। नहि रूढिशब्दमात्रान्वयी कश्चिदौणादिको धातुमात्राद् विहितः कल्प्यो वाऽस्ति, येन तद्विषयेऽपि समुदायरूपेण साधुत्वं बाध्येत। अनन्तनैगमादिशब्दानां प्रकृत्यादिकल्पना विशिष्य अशक्येति हि अर्धजरतीयानौचित्येन समुदायरूपेण सर्वस्य साधुत्वं बहुलग्रहणेन बोधितम्। अत एव 'अतिशायने' इति सूत्रे आतिशायनिकादातिशायनिकस्य अनभिधानमुक्त्वा 'श्रेष्ठतमाय कर्मणे' इति श्रुतिप्रयोगविरोधमाशङ्क्य, 'आतिशायनिकाच्छन्दसि स्वार्थे तमब्दर्शनम्' इति समाहितं भाष्ये। न तु अखण्डस्य स्वतः साधुत्वं दर्शितम्। 'तावेव सुप्तिङौ यौ ततः परौ; सैव च प्रकृतिराद्या' इति भाष्यं तु विशिष्य विहितकृत्तद्धिताद्युपलक्षणपरम्।

तत्र 'नानाव्याकरणाभिज्ञ' इत्यनेन 'ओमाङोश्च' इति सूत्रे 'एङि पररूपम्' इत्यतः एङि इत्यनुवृत्त्यर्थं कृतचकारस्य 'अद्यर्शाद्' इत्यादौ सवर्णदीर्घ[र्घा]साधुत्वफलकस्य 'चोऽनर्थकोऽनधिकारादेङः' इति सौनागपाठानुसारेण पररूपस्यैव साधुत्वे इष्टापत्तिकरणेन प्रत्याख्यानपरभाष्यकृदादिर्विवक्षितः। तेन प्रकृतसूत्रासम्मतस्यापि सूत्रान्तरमतानुसारेण साधुत्वस्य यथेष्टं स्वीकारो हि निश्शङ्कं कृतः। नचेह तथा स्थेमशब्दस्य तदसम्मतत्वमण्वपि दृश्यते। 'प्रकृत्यैकाच्' सूत्रभाष्यबलेन पृथ्वादिषु दृढादिषु वा स्थिरशब्दस्य पाठलाभेन तत्सम्मतत्वमेव हि स्पष्टं लभ्यते। तथाच गणरत्नमहोदधौ दृढादिगणविषयौ श्लोकौ पठ्येते—

"दृढपरिवृढौ मूकश्चुको विशारदसम्मती
बधिरमधुरौ बालो मूलं कलो जडपण्डितौ ।
लवणतरुणावुष्णः शीतः स्थिराम्लकृशा वृढो
विमतिविमनोमन्दा मूर्खो वियातभृशं तथा ॥ ३९३ ॥

त्रिकातः स्यात् तथा शुकदीर्घसम्मनसो मताः ।
ताम्रमाम्रं तथा तृष्णां प्राह श्रीशाकटायनः ॥ ३९४ ॥" इति

एतेन 'नवतरुणिमलक्ष्मीनन्दनीयम्' इत्यादौ तरुणिमशब्देऽपि तरुणशब्दस्य पृथ्वादिष्वपाठादिमनिजप्राप्तिरिति शङ्काऽपि प्रत्युक्ता । तस्यात्र श्लोके स्पष्टं दर्शनादित्याशयः ।

भाष्यग्रन्थपाठान्तरं च अशुद्धमिति प्रागेव दर्शितम् । एतेन श्रौतप्रयोगनिर्वचनमहिम्नैव स्थेमशब्दस्य स्थिरशब्दादिमनिजन्तत्वं सूत्रानभिमतमपि स्वीकर्तुं शक्यम् , किं पुनस्तदभिमतमनुभयं वेति सूचितम् । 'बहुविद्वद्' इत्यनेन विद्याविशेषपारगपरेण 'पृषोदरादीनि' इति सूत्रे "यदि तर्हि शिष्टाः शब्देषु प्रमाणं? किमष्टाध्याय्या क्रियते? शिष्टपरिज्ञानार्था अष्टाध्यायी । कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुं? अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानं, येऽत्र विहिताः शब्दाः तान् प्रयुञ्जानं स पश्यति । नूनमस्य दैवानुग्रहः स्वभावो वा । योऽयं नचाष्टाध्यायीमधीते, ये चास्यां विहिताः शब्दास्तांश्च प्रयुङ्क्ते । नूनमयमन्यानपि जानाति" इति भाष्योक्ता भगवदनुग्रहायत्तशास्त्रा-



ध्ययनादिदृष्टकारणनिरपेक्षशास्त्रसिद्धसाधुशब्दप्रयोगस्वभावाः विशिष्य शास्त्रापरिज्ञातसाधुत्वानामपि शब्दानां स्वप्रयोगमहिम्ना यथाकथञ्चित् शास्त्रविशेषान्तर्भावसद्भावनिर्णयहेतवः अष्टाध्यायीफलभूतज्ञानविषयाः शिष्टा गृह्यन्ते । ते च न केवलं व्याकरणाभिज्ञपतञ्जलिप्रभृतयः, अपि तु आर्यावर्तादिदेशविशेषवास-कुम्भीधान्यत्वाद्याचारविशेषयुक्ताः 'किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारं गतास्तत्रभवन्तश्शिष्टाः' इति भाष्योक्ताः सर्वेऽपि, वैयाकरणानामेव शिष्टत्वपक्षस्य 'शास्त्रपूर्विका शिष्टिः, शिष्टिपूर्वकं शास्त्रमिति तदितरेतराश्रयं भवति' इति पूर्वभाष्येण कण्ठतः खण्डितत्वात् । एवं च ईदृशशिष्टपरिग्रहेणैव साधुत्वनिर्णये आवश्यके किं पुनर्व्याकरणाभिज्ञतत्परिग्रहेण । तत्रापि नाना-व्याकरणाभिज्ञतत्परिग्रहेण इत्याशयः ।

अयमत्र भाष्याशयः । अशास्त्रीयाचारमात्रप्रतिबन्धक-भगवदनुग्रहरूपसुकृतविशेषवत्त्वं शिष्टत्वम् , तादृशाचारहेतुभूत-भगवन्निग्रहरूपदुरितसामान्याभाववत्त्वं वा । अस्य च शास्त्रीया-चारप्राचुर्यपटुत्वादिना ज्ञेयतया आर्यावर्तरूपदेशविशेषनिवासिषु तादृशाचारप्राचुर्यपटुत्वनियमेनोक्तशिष्टत्वस्य तद्देशनिवासमात्रेण सुग्रह-त्वेऽपि अन्येषु तत्त्वस्यानियमेन शास्त्रीयाचारप्राचुर्यदर्शनेनैव ग्राह्यतया अपभाषणरूपाशास्त्रीयाचारप्रतिबन्धकभगवदनुग्रहवत्त्वस्य शास्त्रसिद्धशब्दप्रयोगरूपशास्त्रीयाचारप्राचुर्येणैव ग्राह्यतया 'अमुक एवं-भूतः साधुर्भवति, स च प्रयोक्तव्यः' इत्येवम् अष्टाध्याय्या विशिष्य

शब्दविशेषविधानमन्तरा तस्य दर्शनासम्भवेन शिष्टत्वस्य ग्रहणाभावे विशिष्य शास्त्रानुक्तानां तत्प्रयोगमहिम्ना शास्त्रीयत्वनिर्णयासिद्धौ हंससिंह-गूढात्मादीनां शास्त्रीयत्वानापत्तिः। शिष्टत्वग्रहप्रकारश्च 'अयमपभाषण-रूपाशास्त्रीयाचारप्रतिबन्धकभगवदनुग्रहवान् अष्टाध्यायीरूपशास्त्रज्ञान-निरपेक्षं तद्बोधितानामेव तदविरुद्धानामेव वा प्रायः प्रयोगसमर्थत्वात्, यथा आर्यावर्तनिवासिनः' इति। ते हि अष्टाध्यायीपर्यालोचन-निरपेक्षं तद्विहितानामेव तदविरुद्धानामेव वा शब्दानां प्रायः प्रयोगसमर्थाः निवृत्ताशास्त्रीयाचाररूपापभाषणाः, तत्त्वे दृष्टकारणान्त-रानुपलम्भान्निश्चितभगवदनुग्रहरूपसुकृतैककारणाश्च। ये तु न तादृशाः म्लेच्छास्तेऽनियताशास्त्रीयाचाररूपापभाषणाः, तत एव तद्विरोधिभगवदनुग्रहप्रसक्तिशून्याश्च दृश्यन्ते। तद्धेतुभूतदुरितभूम-वन्तो वा। यद्वा, दृष्टसाधननिरपेक्षशास्त्रीयाचारप्रचुरत्वहेतुभूत-भगवदनुग्रहवत्त्वमेव शिष्टत्वम्। तत्र विशिष्टबुद्धिनियामकशास्त्री-यत्वरूपविशेषणज्ञानसम्पादनेन शास्त्रभूताष्टाध्याय्याः सप्रयोजनत्वम्।

एवमष्टाध्याय्या शास्त्रेण शिष्टत्वे निश्चिते तदाचारविषयाणां विशिष्य शास्त्रानुक्तानामपि शास्त्रीयाचारविषयत्वावश्यंभावेन पृषोदरादि-त्वादिकल्पनाया शास्त्रीयत्वकल्पनमावश्यकम्। तत्प्रकारश्च— अयं शब्दः शास्त्रीयः शिष्टाचारविषयत्वात् पाचकादिवत्, अयं नाशास्त्रीयः, शिष्टप्रयुक्तत्वात्, गाव्यादिवत्, यथा गाव्यादयोऽशास्त्रीया न शिष्टप्रयुक्ताः न तथाऽयमिति च। एवमन्वयव्यतिरेकाभ्यां



शास्त्रीयसाधुशब्दत्वनिर्णय इति। एवं निर्णीतशास्त्रीयत्वोपपत्तये पृषोदरादित्वादिकल्पनया शास्त्रविशेषान्वयसिद्धिरिति।

यद्यपि भाष्ये वैयाकरणानामेव शिष्टत्वमिति मतं निरस्य "एवं तर्हि निवासतश्चाचारतश्च, स च आचार आर्यावर्त एव। कः पुनरा-र्यावर्तः? प्रागादर्शात् प्रत्यक् कालकवनात्। दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन् आर्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टाः" इत्युक्तत्वेन देशविशेषवासिनामेव ब्राह्मणानां शास्त्रीयाचारप्रचुराणां शिष्टत्वमिष्टमिति प्रतीयते। तथाऽपि तस्य भाष्यस्य शास्त्राभ्यासादिदृष्टकारणनिरपेक्षशास्त्रीयाचारप्रचुरदेश-विशेषवासिपुरुषदृष्टान्तीकरणमुखेनान्येषामपि तादृशाचारविशेषस्वरूप-निर्णयपूर्वकशिष्टपदार्थत्वनिर्णयपरत्वेन अन्येषामपि सति आचारविशेषे शिष्टत्वमस्त्येवेति तदाशयः। तत्र 'स चाचार आर्यावर्त एव' इत्यस्य तु शास्त्रज्ञानाद्यनधीनाचार आर्यावर्ते दृश्यत इत्यर्थः। प्रसिद्ध्यैवकारः। तेन न प्राग्वदाचारस्य शास्त्रपूर्वकत्वादितरेतराश्रयतादवस्थ्यमिति शङ्क्यमिति तदाशयः। तत्रत्याचारे तादृशत्वस्य सन्निकर्षेण योगादिना वा पतञ्जलिप्रभृतिभिर्ग्रहीतुं शक्यत्वेन तस्य दृष्टान्तत्वसिद्धिः। अस्मादृशां तु तद्वचनप्रामाण्यात् तस्य तत्त्वनिश्चयेन दृष्टान्तत्वसङ्गतिः स्पष्टैव। अत एवाग्रे भाष्ये अष्टाध्याय्याः शिष्टज्ञानार्थत्वोक्तिः सङ्गच्छते। अन्यथा इहत्यैरस्मादृशैरार्यावर्तवासिनां दुर्दर्शत्वेन तद्विशेषेषु संशय्य

दृष्टशास्त्रीयसाधुशब्दप्रयोगभूमहेतुना शिष्टत्वानुमानासम्भवेन तस्यास्तत्फलत्वासिद्ध्यापत्तेः। नहि देशविशेषसन्निकर्षवतामेव अष्टाध्यायी सफलेति वक्तुं शक्यम्। निरस्ततद्गन्धानामस्मादृशामष्टाध्याय्यामनधिकारप्रसङ्गात्। न चेष्टापत्तिः; 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुत्या सामान्यतस्तदध्ययनविधानविरोधात्। अङ्गानां सति सम्भवे दृष्टद्वारैवादृष्टफलकत्वेन तदलाभेऽङ्गि(ङ्ग)त्वालाभाच्च। अङ्गेऽधिकाराभावेऽङ्गिन्यप्येकविध्युपात्तत्वेनानधिकारप्रसङ्गाच्च। अत एव 'शास्त्रपूर्विका हि शिष्टिः' इत्युपक्रमे उक्तम्। तेन हि शिष्टलक्षणे शास्त्रीयाचारस्यैव प्रवेशनियमः, न तु देशविशेषवासादेरिति लभ्यते। तत्र तु शास्त्रस्य वस्तुसत्तयैव प्रवेशो न विशिष्य ज्ञायमानतयेति तु अन्यत्। तेन 'निवासतः' इत्यग्रिमभाष्येण 'शास्त्रपूर्विका शिष्टिः' इत्येतन्निरस्तमिति न भ्रमितव्यम्। अत एव तत्र पक्षे इतरेतराश्रयदोषेणैव विरोध उक्तः, न तु देशविशेषवासनियमाभावेन। अत एव पस्पशायां भाष्ये 'अस्त्यप्रयुक्तः' इति प्रघट्टके 'शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एवैनमार्या भाषन्ते शव इति। गमिमेव तु आर्याः प्रयुञ्जते' इत्युक्तम्। तेन हि आर्यावर्तभिन्नानां कम्बोजादीनां प्रयोगस्यापि साधुत्वनियामकत्वमस्तीति लभ्यते। 'गतिकर्मा' इत्यनेन एतच्छास्त्रविषयत्वप्रतीत्या तत्र साधुत्वस्य दुरपह्नवत्वात्। शास्त्रस्याप्रयुक्तविषयत्वशङ्कापरिहारायैव तद्भाष्यप्रवृत्तेश्च। एवञ्च आर्याणामेव शिष्टत्वे तदप्रयुक्तत्वस्य कम्बोजप्रयोगेण वारयितुमशक्यत्वेन तत्प्रदर्शनस्य विफलत्वापत्तिः। अशिष्टप्रयोगाणामपि शास्त्रविषयत्वे शास्त्रस्य



शिष्टव्याप्यत्वाभावेनाष्टाध्याय्याः शिष्टानुमानार्थत्वासम्भवेन दर्शितपृषोदरादिसूत्रभाष्यासाङ्गत्यमिति यथोक्तमेव युक्तमिति सिद्धम्। अत एव आर्यप्रसिद्ध्यविरुद्धम्लेच्छप्रसिद्धिबलेन पिकनेमादिपदानां कोकिलार्धादिपरत्वं स्वीकृतं तान्त्रिकैरित्यलम्।

तत्र श्रीसूक्तौ 'परिग्रह' इत्यनेन विहितशाखाविशेषाध्ययनरूपेण स्वतन्त्रप्रयोगरूपेण वा उच्चारणेन साधुत्वाङ्गीकारो विवक्षितः। श्रुतिस्थस्य स्थेम्न इत्यस्य तैत्तिरीयैरध्ययनेन, 'स्थेमा च भावनामुपपादयिष्यति' इत्यादिषु तत्पदस्य बहुभिः स्वतन्त्रप्रयोगेण च शिष्टैस्तस्य तत्त्वाङ्गीकारः स्पष्ट एवेति तद्भावः। तदेतत् सर्वं हृदि निधाय प्रक्रमे 'बहुधा बहुलादीनामष्टाध्याय्याम्' इति, अग्रे 'विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते' इति च अनुगृहीतम्। 'बहुलादीनाम्' इत्यादिपदेन 'पृषोदरादीनि यथोपदिष्टम्' इत्यादयः। एवञ्च शिष्टप्रयुक्तशब्दज्ञानायैव शास्त्रप्रवृत्तिः, न तु शास्त्रानुसारेण शिष्टैः प्रयोगः कर्तव्य इत्यर्थः स्पष्टमेव भाष्यसम्मत इति स्थेमशब्दासाधुत्ववादः शब्दशास्त्रप्रकारानभिज्ञताविजृम्भित एवेति निगमयन्ति।

'अविगीतप्रयोगेषु' इति 'नैव साम्प्रतम्' इति लोकवेदप्रसिद्धशाखाविरुद्धप्रयोगेषु शास्त्रसद्भावानुमाननियमार्हेषु विगानं गणपाठाभावादिकथनमुखेन शास्त्रान्वयाभावकथनं न युक्तमेवेत्यर्थः। एवकारेण तत्सम्भावनाया अपि 'नापभाषितवा' इति श्रौतनिषेध-

विषयापभ्रंशभूताशास्त्रीयाचाररूपवचनीयकथनपरतारूपतया तस्याः सामान्यतोऽपि "वैष्णवे परिवादाच्च पतत्येव न संशयः" इति वचनेन पतनहेतुत्वस्मरणेन निखिलमुनिजनवचननिचयमहितनिगममकुटनन्दनीयविचित्रचारित्रमहिमशालिनि भगवति साधुत्वप्रमाणशिरोमणिभूतमनुप्रवरायमाणतनुप्रवचने रामानुजमुनिप्रवरे लीलालापशकलबोधितविदितपरमधर्मे कैमुतिकसिद्धसद्यःफलजनननिपुणपतनभयहेतुतया सैव सुदूरपरिहार्येति बोधितम् ।

अनेनापि शङ्काग्रन्थस्यगणपाठाभावादिकथनरूपमेव विगानं परिहार्यतया विवक्षितमिति ध्वनितम् । एवं च उणादिव्युत्पत्तिपक्षे 'मा भूद् वा प्रकृत्यादिविभागो मतभेदेनाखण्डितप्रातिपदिकभाषणात्' इत्यादिना उपक्षिप्य, पुनः 'विशिष्टोक्त्यनुसारेण व्युत्पत्तिः' इति सूक्तत्वेन तत्र व्युत्पत्तिपदेन प्राग् विशिषद्योपक्षिप्तस्य पुनर्ग्रहीतुमयुक्तत्वेन 'स्वरूपव्याक्रियैव पराक्रिया' इति न्यायेनोपक्षिप्तशङ्काग्रन्थस्थेमनिजन्तस्थिरशब्दस्वीकार एव दर्शितलोकवेदप्रसिद्धशिष्टपरिग्रहबलेन युक्त इति सिंहावलोकितकेन शङ्काग्रन्थनिराकरणस्थिरीकरणमेव कविकथकसिंहहृदयपरिगृहीतमिति सिद्धमिति सुधियो विभावयन्तु ॥

परे तु 'ईदृशानां प्रयोगाणाम्' इति श्लोकेन 'न स्थानादिवत् तिष्ठतेर्निष्पन्न' इति शङ्काग्रन्थस्यास्य प्रथमाक्षेपस्य विशिष्य कृत उपक्षेपः प्रकारान्तरेणापि तत्सम्भवबोधनपूर्वकं स्थिरीकृत इति 'बहुधा बहुलादीनाम्' इत्यनेनावगम्यते । 'उणादयो बहुलम्' इत्यत्र



भाष्योक्तस्य 'यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्' इति प्रकृतिप्रत्ययोरूहप्रकारस्य तयोरन्यतरद् दृष्ट्वा सन्दिग्धान्यतरस्य निर्णयकल्पनारूपतया कैयटोक्तत्वेन श्रूयमाणं स्थाधातुं दृष्ट्वा भावे इमनिचः कल्पनया स्थेमशब्दसाधनसम्भवात्, बहुलग्रहणं कुर्वतः सूत्रकृतो मते च समुदायरूपेण साधुत्वाश्रयणात् प्रयोगबलेन स्थाधातुवत् स्थितौ वृत्तिकल्पनया स्थित्यर्थस्थेमशब्दोपपत्तेश्च तत्स्थिरीकारसिद्धेः । तत्र आदिना एवमस्य साधुत्वे 'पृषोदरादीनि यथोपदिष्टम्' इत्यादयश्चानुकूला इति बोधितम् । 'बहुधा' इत्यनेन 'कृत्यल्युटो बहुलम्' इत्यत्र कृतो बहुलमिति भाष्यसम्मतन्यासेन पादहारकादिषु कर्मणि ण्वुलादिपरिग्रहवदिह कफिडादौ फिडादिकल्पनवत् तिष्ठतेर्भावे इमनिच्रूपकृद्विशेषकल्पनया स्थितिपर्यायस्य स्थेमशब्दस्य साधनसम्भव इति प्रकारान्तरं बोधितम् । 'नानाव्याकरणाभिज्ञ' इति श्लोकेन तु 'न पृथ्वादिभ्य इमनिज् वा' इत्यस्य विषय' इत्यस्य शङ्काग्रन्थस्थद्वितीयाक्षेपस्य प्रयोगमहिम्ना पाठकल्पनावश्यकत्वेन 'स्वरूपव्याक्रियैव पराक्रिया' इति न्यायेन प्रसिद्धोपक्षेपः स्थिरीकृतः । उक्तरीत्या शिष्टप्रयुक्तशब्दान्वाख्यानपरत्वाच्छास्त्रस्य लोकवेदसिद्धस्यास्य स्थिरशब्दे पृथ्वादिपाठानुमानेन साधुत्वस्य निर्बाधत्वात् । शास्त्रलभ्यस्यापि हि शब्दस्य शिष्टाप्रयोगे शास्त्रेणानन्वाख्यानमेव 'हल्ङ्या' दिसूत्रादौ 'रान् सस्य' इत्यत्र तकारप्रश्लेषे कीर्तयतेः क्विपि कीर्त् इति न सिध्यतीत्याशङ्क्य 'यथालक्षणमप्रयुक्ते' इति भाष्ये तत्रतत्रासकृदुक्तम् । अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणस्येति तदर्थ इति स्पष्टं

शब्देन्दुशेखरे। तत्र यथाशब्दस्यालक्षणपदेन 'अव्ययं विभक्ति' इत्यादिना यथार्थेऽव्ययीभावः। अनेन शास्त्रापेक्षया शिष्टप्रयोगस्य प्राबल्यं मूलत्वं च दर्शितम्। एवमेव तत्रतत्र भाष्यसूत्रमतयोः फलवैषम्याभावः। शब्दशास्त्रविषयस्यैव शिष्टापरिग्रहेण तदविषयत्वकल्पनस्योक्त-भाष्यसम्मतत्वे शास्त्राविषयस्यापि शिष्टपरिग्रहेण तद्विषयत्वकल्पनस्य 'उणादयो बहुलम्' इति सूत्रभाष्यसम्मतत्वे च गणपाठाकृतिगणत्वादि-कल्पनया स्थेमशब्दसाधनावश्यकत्वरूपशब्दशास्त्रप्रकारविशेषाभिज्ञा एव शाब्दिकाः नान्ये, इति 'शाब्दिकांस्तान् न मन्महे' इत्यनेन दर्शितम्। इदञ्च वैदिकस्य स्वमात्रसाधुत्वसाधकत्वमापाततः शङ्कमानं प्रत्यपि, न केवलं वैदिकः, अपि तु लोकेऽपि विदित इति प्रतिपादनमुखेनाभ्युपेत्यवादपरं पूर्ववदिति बोध्यम्। 'विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते' इति श्लोकेन तु शङ्काग्रन्थे यद्यपि 'प्रियस्थिर' इत्यादिना स्थिरशब्दस्य स्थादेशो विहितः। तत्र 'तुरिष्ठेमेयस्सु' इति त्रयं प्रकृतम्; तथाऽपि 'प्रियोरुबहुलगुरुदीर्घाणामेवादेशेष्विमनिजू भवति, नान्येषां पृथ्वादिष्वपाठात्, नचासावाकृतिगणः' इति ग्रन्थेन उपात्ततृतीयाक्षेपस्य विशिष्यादेशविधिबलेन स्थिरशब्दादि-मनिच्कल्पनमावश्यकमिति शब्दत उपक्षेपः क्रियते। स्थिरशब्दस्य पृथ्वादिगणे पाठाभावात् तस्याकृतिगणत्वाभावाच्च 'पृथ्वादिभ्यः' इति सामान्यविधिना तस्मादिमनिचोऽप्राप्तावपि इष्ठादिषु विशिष्य स्थिरशब्दस्य स्थादेशविध्यनुसारेण तस्मादिमनिचः सुलभत्वात् तत्कल्पनारूपव्युत्पत्तिः सुलभा। स्मर्यते च ईदृशव्युत्पत्तिः 'प्रशस्यस्य श्रः' इति सूत्रे 'प्रशस्य-



शब्दस्य क्रियाशब्दस्यागुणवचनत्वेऽपि इष्ठेयसोः परतः श्रादेशविधिसाम-र्थ्यात् तयोर्लभ' इति भगवता भाष्यकृता इत्यर्थस्य पूर्वार्धेन प्रतीतेः। विशिष्टस्य=स्थादेशविधौ स्थिरशब्दत्वरूपविशेषधर्मवतः सम्बन्धितया उक्तेः=प्रकृतेमनिजुक्तेः, तदनुवादस्येति यावत्। अनुसारेण=सामर्थ्येन, व्युत्पत्तिः इमनिच्प्रत्ययकल्पनारूपा, भवतीति शेषः। बुधैः=भगवत्पतञ्ज-लिभिः, 'प्रशस्यस्य' इति सूत्र इति शेषः। इत्थंभूताः स्मर्यते हीति तद-क्षरार्थः। न च इष्ठादिषु त्रिष्वपि स्थादेशविधानेऽपि स्वतः प्राप्तयोरिष्ठेय-सोस्तस्य चारितार्थ्यादप्राप्तमिमनिचं स्थादेशविधिर्न कल्पयितुं शक्नोतीति वाच्यम्। स्थिरशब्दस्य आकस्मिकापायनिवृत्तिरूपनिश्चलत्वप्रवृत्तिनिमित्त-कतया तस्य च आगन्तुकापगामुकत्वलक्षणगुणलक्षणाभावेन गुणप्रवृत्ति-निमित्तकत्वरूपगुणवचनत्वाभावात् 'अजादी गुणवचनादेव' इति नियमेन इष्ठेयसोरपि दुर्लभत्वेन स्थादेशविधेस्तत्र चारितार्थ्यस्य दुर्वचतया तत्सामर्थ्येनाविशेषादगुणवचनत्वेऽप्यपृथ्वादित्वेऽपि च इष्ठेमेयसां त्रयाणां कल्पनमावश्यकमित्यर्थस्याश्रयणीयत्वात्। न हि तत्सामर्थ्यात् अगुण-वचनत्वेऽपीष्ठेयसावेव कल्प्येते, न तु इमनिजित्यत्र नियामकविशेषोऽस्ति। प्रत्युत दर्शितवैदिकप्रयोगबलेन तत्सामर्थ्यात् अपृथ्वादित्वेऽपीमनिज् भवतीत्येवावश्यकल्प्यमित्यत्रैव तद्विशेषोऽस्ति। 'प्रकृत्यैकाच्' सूत्रभाष्ये त्रयाणामविशेषोदाहरणसामञ्जस्याय त्रयाणामविशेषतः सामर्थ्यात् कल्पनमावश्यकमिति चेत्-अस्तु, इष्टमेव, इमनिच्कल्पनस्य न किञ्चिदपहीनम्। नचाकस्मिकापायनिवृत्तेरपि द्रव्यधर्मत्वाद् गुणत्वेन

स्थिरशब्दो गुणवचन एवेति वाच्यम् । 'वोतो गुणवचनात्' इति सूत्रे 'को गुणो नाम?' इत्याशङ्क्य

"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥"

इति भाष्योक्त्या आगन्तुकापगामुकत्वभिन्नजातीयद्रव्यवर्तित्व-निष्पाद्यानिष्पाद्यत्वद्रव्यस्वभावरहितत्वरूपविशेषणयुक्तपदार्थस्यैव गुणत्व-बोधनात् । तत्र वृत्तित्वान्तस्य पूर्वार्धोपात्तविशेषणस्य उपादानम् यावद्द्रव्यभाविभिन्नजातीयद्रव्यावृत्तिगोत्वादिषु जातिव्यवच्छेदाय । निष्पाद्यानिष्पाद्यत्वविशेषणं तु क्रियाव्यावृत्तये । तस्याः सर्वदा निष्पाद्यत्वेन कदाचिदपि महत्त्वादेराकाशादाविव क्वचिन्नित्यत्वाभावेन द्विरूपत्वरूपतद्विशेषणाभावात् अवयविद्रव्यस्यावयवद्रव्येषु निवेशाद-समवायिकारणसंयोगनिवृत्तौ च विनाशाद्, भिन्नजातीयहस्तपादादिषु दर्शनाच्च निरवयवद्रव्यभूतात्मपरमाण्वादेः नित्यत्वादन्यस्यानित्यत्वाच्च द्रव्यत्वावच्छेदेन दर्शितविशेषणद्वयस्य द्रव्ये सत्त्वात् तद्व्यावृत्तये द्रव्यस्वभावरहितत्वविशेषणं द्रव्यभिन्नत्वपर्यवसितमिति तत्रैव **कैयटे** स्पष्टम् । सर्वस्य वस्तुनः यावत्स्वरूपं प्राथमिकावस्थानुवृत्तिरूपस्थिरत्वस्य उत्पत्त्यनन्तरभावित्वादागन्तुकत्वेऽपि स्वरूपनाशसामग्रीं विना अवस्थायाः स्वरूपसम्बन्धिकालावच्छिन्ननिवृत्त्ययोगेन तदनुवृत्तेरपगामुकत्वाभावाद-भावरूपापायनिवृत्तेरधिकरणद्रव्यरूपत्वेनापि गुणत्वासम्भवाच्च । क्वचिद् गुणरूपाधिकरणरूपत्वेऽपि गुणत्वव्याप्यधर्मावच्छिन्नप्रवृत्तिनिमित्तकत्व-



रूपगुणवचनत्वालाभाद् वस्तुन उत्पत्त्यैव तस्योत्तरकालसम्बन्धित्वसिद्ध्या तद्रूपस्थिरत्वस्य पृथङ् निष्पादकान्तरेण निष्पत्त्यभावेन निष्पाद्यत्व-रूपाधेयपदार्थालाभाच्च । तस्य भगवत्सङ्कल्पाधीनत्वकथनं तु तस्य प्रणाशाभावरूपत्वेन, तस्य च प्रणाशप्रतिबन्धकसङ्कल्पप्रयोज्यत्वेन वस्तुभेदेन स्थितिभेदस्य सङ्कल्पभेदनिबन्धनत्वेन च बोध्यम् । वस्तुसत्तामात्रस्य तत्प्रणाशप्रतिबन्धकभगवत्सङ्कल्पानुविधाय्यन्वयव्य-तिरेकत्वमात्रेण वा सत्ताविशेषस्थितेस्तदधीनत्वम् । एतावदेव "एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यादिश्रुतिशतबोधितम् । नैतावता निष्पाद्यत्वं, अवस्थान्तरकल्पनया अनवस्थापत्तेः । यद्यपि 'आकडार' सूत्रे भाष्ये 'अर्थवत्' सूत्रानन्तरं 'गुणवचनञ्च' इति न्यासकरणेनार्थवन्मात्रस्य प्राति-पदिकसंज्ञया सह गुणवचनसंज्ञां विधाय समस्तकृदन्ततद्धि-तान्ताव्ययसर्वनामजातिसङ्ख्यासंज्ञाशब्देषु तत्तत्संज्ञानां विशेषतो विधानेन गुणवचनसंज्ञाया बाध उक्तः । कैयटेन च चित्रगुत्वं पाचकत्वमौपगवत्वं उच्चैस्त्वं सर्वत्वं गोत्वं बहुत्वं पञ्चत्वं डित्थत्वम् इत्यादौ 'गुणवचनब्राह्मणादिभ्यः' इत्यनेन ष्यञभावस्तत्फलतयोक्तः । ऐक्यं राजपौरुष्यमित्यादौ ब्राह्मणादेराकृतिगणत्वात् ष्यञिति च तत्रैव स्पष्टम् । एवञ्च तद्रीत्या स्थिरशब्दस्याव्युत्पन्नत्वपक्षे कृदन्तत्वाभावात् 'अर्थवत्' सूत्रेणैव प्रातिपदिकत्वाद् गुणवचनसंज्ञायाः प्राप्त्या 'अजादी गुणवचनादेव' इत्यत्र तस्यैव ग्रहणेन इष्ठेयसौ निर्बाधाविति वक्तुं शक्यम् । तथाऽप्यत्र 'कृतिमाकृत्रिम' न्यायेन तस्यैव गुणवचनपदेन ग्रहणे

‘प्रियस्थिर’इति अत्रोपात्तप्रियबहुलवृद्धवृन्दारकशब्दानां कृत्तद्धितान्ततया प्रसिद्धानां तत्त्वानापत्त्या इष्ठेयसोर्दुर्लभत्वेन प्रियबहुलयोः पृथ्वादित्वेन इमनिचि तत्र प्राद्यादेशविधानेन तद्ग्रहणचारितार्थ्येन तत्सामर्थ्योपक्षयात् इष्ठादिकल्पनानापत्तौ ‘प्रकृत्यैकाच्’ सूत्रभाष्ये सर्वसिद्धप्रेयानित्याद्युदाहरणस्य विरोधापत्त्या “यद् बंहिष्ठं नातिविदे सुदानू” इति श्रुतिप्रयोगविरोधापत्त्या च ‘विप्रतिषिद्धं चानधिकरणवाचि’ इत्यादाविव ‘उभयगतिरिह भवती’ति न्यायेन अकृत्रिमस्यैव ग्रहणमिति वक्तव्यत्वेन स्थिरशब्दस्योक्तरीत्या तत्त्वाभावेन इष्ठादेरपि दौर्लभ्ये स्थादेशविधौ तद्ग्रहणवैयर्थ्येन तत्सामर्थ्यात् त्रयाणां सिद्धिर्निर्बाधैव। एतदेवाभिप्रेत्य भगवता पृथ्वादिषु स्थिरशब्दो न पठितः। अन्यथा तत्र चारितार्थ्येन इष्ठाद्यनापत्तेः। श्रीमद्गद्यादौ स्थैर्यस्य भगवद्गुणत्वकथनं तु भरन्यासकालोत्पन्नभरस्वीकारादेः यावद्विषयसिद्धि आश्रितदोषप्रदर्शकान्तरङ्गादिभिरपि त्यागसम्भावनानिवृत्तिसङ्कल्परूपप्राक्स्थितधर्मत्यागनिवृत्तिसङ्कल्पलक्षणस्थिरव्यापारवाचिष्यञन्तस्थैर्यशब्दाभिप्रायेण। तस्य तत्र कृत्रिमगुणवचनतया गुणवचनत्वेन ष्यञः सत्त्वात्। प्राक्स्थितधर्मत्यागनिवृत्तौ स्थिरशब्दस्यैव लक्षणया ततो भावे ष्यञेव वा। तदेतदभिप्रेत्य “स्थैर्यं=शरणागतदोषप्रदर्शकान्तरङ्गैरप्यकम्पनीयत्वम्, “मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन” इत्युक्तलक्षणम्’ इत्यनुगृहीतं श्रीमद्गद्यभाष्ये। इत्थमिष्ठेयसन्तस्थेयस्थेष्ठशब्दवदिमनिजन्तस्थेमशब्दस्यापि स्थादेशविधिबलादबाधितत्वेन तस्य बाधितत्वशङ्काऽपि त्याज्येत्याह—अविगीतप्रयोगेष्विति। स्थेयान् स्थेमा स्थेष्ठ इति



त्रिष्वपि प्रयोगेषु उक्तरीत्या प्रशस्तेष्वेकतमस्य स्थेमशब्दस्य परं विगानं नैव युक्तमित्यर्थः। तस्य विगाने इतरयोर्द्वयोरपि विगानापत्तिः। इतरयोरविगाने अस्याप्यविगानं सिद्धमिति भावः। इत्थं सर्वसाधारणप्रथमशङ्कापरिहारः कण्ठोक्तः इह प्रथमश्लोकेन स्थिरीकृतः। प्रकृष्टशाब्दिकसमधिगम्यद्वितीयतृतीयशङ्कापरिहारौ उत्तरश्लोकद्वयेन प्रतिपादिताविति सूक्ष्मधियो विदांकुर्वन्त्विति प्राहुः।

अत्रायं सङ्ग्रहः।

उणादित्वेन भावार्थलोकार्हेमनिजूहनात्।
स्थाना(मा)दिवत् तिष्ठतेर्वा कृद्विशेषस्य कल्पनात्॥
कृत्यल्युट्सूत्रभङ्गो हि कृतो बहुलमित्ययम्।
स्थिरशब्दस्य पृथ्वादिदृढाद्योः पाठकल्पनात्॥
‘प्रियस्थिरा’दिसूत्रेण स्थादेशस्य च शासनात्।
इष्ठेमेयस्त्रयस्यात्र निमित्तत्वाविशेषतः॥
एवं त्रिधा सुसाधौ हि स्थेमशब्देऽपि शङ्कनम्।
शब्दविद्यापरिज्ञानमात्राभावनिबन्धनम्॥
तमेनमर्थं श्रीमन्तः श्रुत्यन्तगुरुशेखराः।
‘ईदृशानाम्’ अनुक्रम्य त्रिश्लोक्या समगृह्णत॥ इति॥

अत्रेदं बोध्यम्। आकस्मिकापायश्चोत्पत्त्युत्तरकालिकविनाशः। स च भावान्तराभावसिद्धान्तमते उत्पत्तिलब्धावस्थस्य वस्तुन उत्तरावस्था-

सम्बन्धरूपः, तन्निवृत्तिश्च पूर्वावस्थाया उत्तरकालसम्बन्धरूपा। न तु तदुत्तरावस्थासम्बन्धरूपा। वाक्यार्थान्तर्गतोत्तरावस्थापदेन नियताकाङ्क्षितपूर्वावस्थासम्बन्धरूपत्वस्यैव उचितत्वात् निवृत्तेः प्रागभावरूपतया विवक्षितत्वेन तस्यास्तद्रूपत्वस्यैव सिद्धेश्च। एवञ्च सर्ववस्तुन उत्तरावस्था प्रागभावाधिकरणकालसम्बन्धिपूर्वावस्थासम्बन्ध एव स्थितिरिति फलितम्। तदेतदनुगृहीतं श्रीमत्तत्त्वटीकायाम्, "उत्पत्तिलब्धाकृतेरर्थस्य आप्रणाशसामग्र्या स्थितिरिह स्थेमा" इति। तत्र प्रणाशपदेन उत्तरावस्थासम्बन्धरूपापायशब्दार्थ उक्तः। स्वविनाभावविशिष्टावधिपरेण आङा तत्प्रागभावरूपनिवृत्तिशब्दार्थ उक्तः। सामग्रीपदेन निवृत्तिप्रतियोगिप्रणाशे आकस्मिकत्वलाभः, वस्तुनः सामग्र्यैव अपायो न अकस्मात्, प्रतिक्षणमिति प्रतीतेः, षष्ठ्यन्तप्रथमान्ताभ्यां तस्या उक्तभावान्तररूपत्वं उत्पत्तिलब्धाकृतेः स्थितिरित्यनेन प्राप्तपूर्वावस्थस्य विनाशसामग्रीप्राक्कालसम्बन्धप्रतीतेः, तस्य च उत्तरकालावच्छिन्नपूर्वावस्थासम्बन्धित्वपर्यवसितत्वात्। सामग्र्यधीनविनाशप्रागभावविशिष्टजन्मसिद्धाकृतिसम्बन्ध एव वा स्थितिः। यद्वा प्रणाशपदेन कालसम्बन्धनिवृत्तिरेव बोध्यते। तन्निवृत्तिश्च कालसम्बन्धनियमरूपेति ष्ठाधातुना स्थितिपदेन च सैव प्रतिपाद्यते। निवृत्तिसामग्रीपर्यन्तं वस्तुनः पूर्वावस्थायाः कालसम्बन्धनियमसिद्ध्या प्राप्तपूर्वावस्थवस्तुप्रतियोगिकोत्पत्त्युत्तरकालसम्बन्धनियम एव स्थिरशब्दप्रवृत्तिनिमित्तमिति सिद्धम्।



एतेन "स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्" इत्यत्र "स्थितिर्नाम कालान्तरानुवृत्तिः" इति श्रीसूक्तिर्व्याख्याता। वस्तुमात्रस्य लब्धावस्थाया उत्तरकालसम्बन्धित्वस्यैव कालान्तरानुवृत्तिपदार्थत्वात् तस्याश्च तत्तद्वस्त्वानुगुण्येन भिन्नभिन्नत्वाद् मुक्तेषु प्राप्तपूर्वावधिकस्वरूपाविर्भावस्य उत्तरावधिराहित्येन अवस्थितेस्तद्भेदत्वमनुगृहीतम्। अत्र षष्ठ्यन्तेन पूर्वावस्थासम्बन्ध उक्तः। 'उत्तरावधिराहित्येन' इत्यनेन वस्त्वनुरूपतया व्याप्तिरूपोत्तरकालसम्बन्धस्य नियमोऽभिमतः। एवञ्च सैद्धान्तिकप्रसिद्धार्थपरस्थितिपदेनानुपयुक्तचलनक्रियानिवृत्तिलक्षणनिश्चलत्वपरतया शङ्कितस्थेमशब्दस्य विवरणमर्थवत्तरम्। यत्र तु पूर्वावस्थासम्बन्धस्य बाधः स्थितिव्यवहाराश्च, तत्र पूर्वावस्थाजातीयव्यापारविशेषः परिगृह्यते। अत एव नित्येषु अनाद्यनुवृत्तभगवदनुभवस्यैव स्थितिभेदत्वमनुगृहीतमिति दिक्।

यद्यपि स्थिरपर्यायध्रुवशब्दस्य 'ध्रुवमपाये' इत्यत्र प्रयुक्तस्य सूत्रस्थापायशब्दार्थविभागविषयोदासीनत्वलक्षणत्वपरत्वं "अपाये यदुदासीनं निश्चलं यदि वा चलम्। ध्रुवमेवातदावेशात्" इति हरिकारिकायामुक्तं, तत्र 'चलम्' इत्यनेन निश्चलत्वलक्षणमुख्यार्थस्यापायशब्दार्थान्वयानुरोधादत्र त्याग इति सूचितश्च;

एवञ्च चलनक्रियानाश्रयत्वमेव तस्य मुख्यं निमित्तमिति लभ्यते, तथाऽपि "ध्रुवा द्यौर्ध्रुवा पृथिवी, इन्द्र इवेह ध्रुवस्तिष्ठ, अश्मेव त्वं स्थिरा भव" इत्यादिप्रचुरप्रयोगबलेन उत्तरकालानुवृत्तेरेव मुख्यनिमित्तत्वं वाच्यं, 'ध्रुवमपाये' इत्यत्र तु अपायशब्दार्थान्वयबलेनैव मुख्यपरित्यागेन प्रकृतधात्वर्थक्रियानाश्रयत्वलक्षणप्राक्स्थितधर्मस्य अपायशब्दार्थविभागकाले अनुवृत्तिरूपस्थिरसदृशत्वपर एव ध्रुवशब्द इति वक्तुं शक्यम्। हरिकारिका च तस्य स्थिरपर्यायत्वसिद्धये चलनानाश्रयत्वस्यापि मुख्यनिमित्तत्वालाभेन तत्त्यागावश्यकत्वे तत्परत्वाय च स्थिरसदृशपरत्वाश्रयणावश्यकत्वे च प्रकृतोदासीनत्वमेव तत्सदृशत्वं विवक्षितुमुचितमित्येवंपरेति न कश्चिद् विरोधः। एतदेवाभिप्रेत्य तत्र शब्देन्दुशेखरे "अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वं ध्रुवत्वम्" इत्युक्तम्। न प्राग्गृहीतधर्मातिरिक्तधर्मानाश्रयत्वरूपः उक्तस्थिरपदार्थसादृश्योपयोगिसाधारणधर्मः स्पष्टमेव बोधितः। अत एव 'ष्ठ स्थिरे' इति सूत्रे कैयटे "स्थिरशब्देन कालान्तरस्य प्रापकोऽर्थ उच्यते" इत्युक्तं, न तु निश्चलमुच्यत इति। तत्रार्थपदेन प्रवृत्तिनिमित्तं वस्तुमात्रस्य कालान्तरप्राप्तिहेतुभूतजन्मसिद्धाकृतिसम्बन्धित्वरूपञ्च तदिति तदर्थः। यदा तु प्रपूर्वादाप्नोतेरण्यन्तादाश्रये ण्वुलि आसकादिवत् प्राप्त्यर्थः, तदा कालान्तरप्राप्तिविशिष्टोऽर्थः धर्मितया बोध्य इत्यर्थः



जन्मसिद्धाकृतिसम्बन्धरूपविशेषणलाभस्तु अन्तरपदेनाक्षिप्तजन्मकालोक्त्या तदन्वितधातुना अनुवृत्तिपरेणाक्षिप्तसिद्धाकृतिसम्बन्धोक्त्या च तस्य, 'परे तु'मतोक्तरीत्या निष्पाद्यत्वाभावेऽपि धात्वर्थतायां कालान्वयानुरोधेन फलावच्छिन्नव्यापारपर्यन्ततया बोधेन आत्मधारणानुकूलव्यापारपरास्त्यादिवत् साध्यत्वरूपक्रियात्वसिद्धिः। एवमेव 'बिदि अवयवे' इत्यादीनां क्रियावाचकत्वनिर्वाहः, द्रव्यस्य क्रियात्वासम्भवेन तत्साधकव्यापारपर्यन्तपरत्वस्वीकारस्य सर्वसम्मतत्वादिति सर्वं सिद्धम्।

इत्थं श्रीलक्ष्मणार्यश्रुतिशिखरगुरूत्तंसभास्वन्मनीषा-
मञ्जूषागर्भभूषायितमहिमरुचिस्थेमवृत्तिप्रकर्षम्।
आदर्शं दर्शनीयं सुदृगमलमुखोल्लासदीक्षास्ववीक्ष्य
लक्ष्मीलाक्षाङ्कलक्ष्यो हृदि सुचिरमिमं लालयन् पालयेन्नः॥१

पतञ्जलौ नित्यकृताञ्जलिः स्यामपाकृतस्वान्तवचोऽङ्गदोषे।
योगेन शब्देन च वैद्यकेन प्रेम्णा भुवि स्थेमकृति द्विजिह्वे॥२॥

यतीन्द्रवाणीमणिभूषणश्रीश्रुत्यन्तसूरीश्वरदिव्यसूक्तिः।
जयत्यमोघौघसुरस्रवन्तीवीचीचिरस्पर्धिविसीमवेगा॥ ३ ॥

जयति निगमान्तसूरिर्यतिपतिवाणीसुधोरणी जयति ।
जगति फणितिः पुराणी सप्रेमस्थेमधारिणी जयति ॥ ४ ॥

गोपालसूर्याशयशोभमानमेवापरिष्वङ्गविराजिताङ्गम् ।
स्थेमाभिधादर्पणमर्पणेन जीयाच्चिरं श्रीनृहरेः पदाब्जे ॥ ५ ॥

॥ श्रीमते नृसिंहपरब्रह्मणे नमः ॥

हरिः ओम् ॥

इति श्री पिळ्ळैपाक्कम्, वाळ्वन्ति गोपालाचार्य-(श्रीमदहोबिलमठीयश्रीलक्ष्मीनृसिंहदिव्यास्थानीनिर्वहणधुरन्धर-श्रीमद्वेद-मार्गप्रतिष्ठापनाचार्य श्रीपरमहंसपरिव्राजकाचार्य-उभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीमन्निगमान्तमहादेशिक-प्रवर्तितसत्सम्प्रदायनिर्वहणधूर्वह श्रीवीरराघवशठकोपयतीन्द्रमहा-देशिक) कृतिषु स्थेमदर्पणः समाप्तः ।

---

॥ श्रीः ॥

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

श्रीमते श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकाय नमः ॥

श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकवैभवम् ।

कदाचिच्छ्रीनरहरौ स्वराद्धृजनवर्जिते ।
श्रीवण्शठारिमुनिना कश्चिद् यत्नः प्रचक्रमे ॥ १ ॥

सद्यः प्रस्थाप्य गाथाप्रवचननिपुणस्वात्मकाचार्यदेशं
नीत्वा भक्तं प्रबन्धं मधुरकविकृतं लक्ष्मणान्तादिकं च ।
कन्यामास्यात्मतारे क्वचन शरदि तेनात्मनाऽनुप्रविश्य
प्रेम्णोपादेशयन्मे नृहरिपदमयश्रीशठारिश्रियवाप्त्यै ॥ २ ॥

सन्धायैनं प्रबन्धं प्रतिदिनमनुसन्धाप्य तत्सेवनोक्तं
दासं कृत्वा विकृत्याह्वयशरदि निजे कन्यकामासि यात्राम् ।
आरभ्याहीन्द्रपुर्यां श्रुतिशिखरगुरोरुत्सवादीन् निषेव्य
श्रीमद्रङ्गं क्रमेणानयत दिननिशापङ्क्तिनामोत्सवादौ ॥ ३ ॥

द्वौ मासौ रङ्गनाथं शरणमुपनयन् पौषतीर्थोत्सवान्तं
गोष्ठीनाथं सपूर्णं शरशयनहरिं वारिधौ सेतुवीक्षाम् ।
प्रापय्य श्रीनगर्यां शठरिपुमुनिमप्येतदर्चावतारे
माघे मास्युत्सवाहेष्वनयत शरणं तत्प्रबन्धानुबन्धैः ॥ ४ ॥

तत्र स्वस्मिन् शठारेः प्रसदनविभिदां हंसमुद्राङ्कनादिं
सन्दर्श्यास्यावतारस्थलमभिगमयन् पद्मनेत्रादिकांश्च ।
स्वस्थाने स्वस्य चार्याचनु(?)दिनभजनयुक्श्रीशठार्यङ्घ्रिसेवां
निन्येऽह्नां विंशतौ सन्मधुरकविवचोऽनेकसाहस्रजप्यैः ॥ ५ ॥

एवं नत्वा शठारिं प्रसदनवसनादि अस्य दत्तं गृहीत्वा
तोताद्रीशं प्रणम्य क्रमश उपगतः श्रीकुरङ्गेशपूर्णम् ।
यस्यापूर्वावतारः शठरिपुमुनिरित्युच्यते विद्वदग्र्यैः
यत्क्षेत्रे रङ्गनाथादिमशठजिदिति ख्यात आचार्य आसीत् ॥६॥

तत्रत्ये सिन्धुतीरे यतिपतिमभियन् मीनसङ्क्रान्तिकृत्यं
निर्वर्त्यास्वाद्य तीर्थं मधुरमतिचिरं वस्तुमैच्छं कुरङ्गे ।
सद्यः श्रीभूतपुर्यां यतिपतिरिममादिक्षद् आत्मान्तिकं द्राक्
आगच्छेति स्वमातुः चरमसमयसम्बोधपत्रं विलेख्य ॥ ७ ॥

मातुः कैङ्कर्यलब्ध्यै शरणवृतिकृतौ स्वीकृतार्थे कुरङ्ग-
क्षेत्रेशेऽप्यस्तधैर्ये द्रुततरगमनेनागतेऽनुग्रहार्थम् ।
श्रीमद्रामानुजेच्छां सफलयितुमपि ख्यातभाष्यादिकोशान्
विस्मार्याप्योद्य सद्योऽनयत यतिपतेरन्तिकं पूर्ण एनम् ॥ ८ ॥

दासेनास्मिन् यतीन्द्रे प्रसदनविधिना प्रार्थितेऽनेकमासान्
कश्चित् श्रीभाष्यकोशं सविषमुपनयन् नन्दनोर्जे गुरोर्मे ।
आदौ जन्मोत्सवानां निजकरनिहितं दापयित्वा समग्रं
भाष्यं चाध्यापयन्मामखिलमवसितौ पर्यवासाययच्च ॥ ९ ॥



गोदावत् श्रीशमेनं यतिनृपतिमहं मार्गशीर्षेऽथ मासे
त्रिंशच्छ्लोक्या प्रसाद्य श्रुतिशिखरगुरोः सूक्तिसुस्निग्धभावम् ।
अन्यस्मिन् मार्गशीर्षे द्रमिडनिगमचूडावसाने शठारि-
प्रादुर्भावे यतीन्द्रान्निजजनमुखतः तामगृह्णां सटीकाम् ॥ १० ॥

ख्यातादाचार्यवंश्यात् द्रमिडनिगमचूडादिमप्यध्यगीषि
ह्यध्वेंऽब्दे तूर्जहस्ते वरदनियमनात् अन्त्यभिक्षोर्गुरोर्मे ।
मित्रादैकान्त्यनिष्ठादिषु शठरिपुयोगीन्द्रपादाश्रयात् श्री-
काञ्चीपूर्णान्तिकस्थात् यतिपतिदयया प्रेषमन्त्रं ह्यगृह्णाम् ॥ ११

सोऽयं रामानुजार्यः शठरिपुफणितेः अन्त्यपङ्क्तेरधीतौ
स्वप्ने श्रीवण्छठारेः महितमठगतः श्रीमहाभूतपुर्याम् ।
स्वाख्यप्रव्राजकात्मा तमिममुपगतं दासमुद्वीक्ष्य सोऽयं
सद्यो भावी परिव्राट् स्थिर इति वचसा सादरं ह्यन्वगृह्णात् ॥ १२

इत्थं श्रीवण्छठारिः शठमथनमुनेः पूर्णकारुण्यपात्रं
दासं कृत्वा स रामानुजमुनिमुखतः श्रीमहाभूतपुर्याम् ।
आर्द्रातारोत्सवान्ते मिथुनजुषि रवौ हेमलम्बाह्वयाब्दे
प्रव्रज्याम् आदिशन्मे यतिपतिविधृतं प्राप्य काषायमेकम् ॥ १३ ॥

इत्थं रामानुजार्यात् नियमनमधियन् किङ्गृहेशस्य धाम
प्राप्य प्रार्थ्याभ्यनुज्ञां शिरसि दधदहं सद्य आषाढमासे ।
पूर्णायां सौम्यघस्रे गुरुजन....पराषाढाऋक्षे गुरूणां
सिद्धिस्थाने तदाज्ञां मनसि विरचयन् प्राव्रजं श्रीशवृद्ध्यै ॥ १४

## प्रार्थनाप्रकारः

स्वामिन् किंगेहधामन् तव पदकमले चापलात् लोलुपं मां
नैव ब्रूषेऽनुगृह्णाम्यहमिति कृपया मेदुरां सादरोक्तिम् ।
किं नाभिज्ञायते तन्निजकरकमलोपद्रवे द्राग्विषादं
संसार्येमं जनं प्राक् सुदृढमिव करौ संस्करिष्यस्यमू त्वम् ॥१५

सुप्तः स्वप्ने कदाचित् त्वमिममुपगतं दासमुद्वीक्ष्य हस्तौ
उद्यम्योत्थातुकामः तदशकनवशात् उच्छ्वसन् क्लेशभूम्ना ।
आनीयेमं सुशिल्पे निपुणमिह करौ कारयेतेति भृत्यान्
आहूयोद्घोषयन् स्वं सपदि जनमिमं घोषयामासिथाहो! ॥१६॥

शोकार्ते दासवर्ये त्वथ सदसि हरिर्हस्तरोगादतीव
क्लिश्यन्नुद्घोषतीति द्रुतमिह कमपि प्रेषयेतेति घोषम् ।
कुर्वत्यास्थानपाले स्थपतिवरमुपानीय सज्जस्करुद्राक्
साक्षीकृत्यैव दासं स्मरति खलु भवान् सर्वमेतत् दयालो ! ॥१७

इत्थं सम्प्रार्थितस्त्वं श्रुतजनसुलभः किङ्गृहेश प्रभो मां
प्रव्रज्यामन्त्रघोषं नियमयितुमनाः स्वीयचिह्नारवेण ।
अभ्याशस्थैः श्रुतेन प्रकृतमनुवचोऽर्थानुसन्धानविज्ञात
भीत्या त्वश्रावितेन प्रमुदितहृदयं प्रेरयन् अन्वगृह्णाः ॥ १८ ॥

स्वामिन्नेवं पुराऽनर्गलविसरदयासारपूरैरपारैः
बाह्यान्तस्स्थैः कवाटैः पिहितपरिसरे सन्निधावन्तिकं द्राक् ।



आपय्येमं जनं द्राक् निजवचनसुधास्वादधन्यं विधातुः
किं ते पादाब्जसेवां विघटयितुमयं दण्ड एषोऽर्गलात्मा ॥१९॥

तत्रोषित्वा त्रिमासीं करिगिरिवसतिश्रीदयाधीशसेवाम्
ऊर्जे हस्तेऽधिगम्य प्रतिदिनभजने कुम्भसङ्क्रान्तिरात्रौ ।
स्वप्ने श्रीवण्छठारिर्नृहरिजिगमिषुं दासमावेद्य सर्वान्
भाद्रो मासोऽद्य वेदाञ्चलगुरुरुदियात् इत्युवाचात्मवाचा ॥२०॥

काले श्रीवण्छठारिः स्वजनिमहदिने वेदचूडार्यमर्चा-
रूपं दासेन नेतुं स्वजनमिममुपानीय किंगेहपुर्याम् ।
तत्रस्थैः तत्प्रतिष्ठाम् अकुरुत स गुरुश्चात्र किंगेहनाथं
सङ्ग्रामे पुङ्गव त्वत्स्तुतिपरवचनैः मङ्गलान्याशशंसे ॥ २१ ॥

सोऽपि प्रस्थाप्य दासं वृषगिरिसविधं तत्र वेदान्तसूरिं
गोदां च श्रीशुकाम्भां महितजनिमहे श्रीनिवासं च शश्वत् ।
सेवाभिः संप्रसाद्य स्वनिलयमलयत् मार्गशीर्षेऽन्तिमाह्ने
गोदोद्वाहे विनम्रं दयितजनमिमं किञ्चिदन्वग्रहीन्माम् ॥ २२ ॥

गोदोद्वाहेऽद्य भूषा न भवति कियती श्रीनृसिंहास्पदस्था
तत्राधीनं शठारेरिति तदुपगतं मां च मद्भक्त ऐतु ।
इत्याह त्वं हि सैष त्विति समचकथं भृत्यवाचं हि सत्यं
कर्तुं व्याप्तिं समस्तेष्वपि स नरहरिर्द्रक्ष्यते स्तम्भभूते ॥२३॥

एवं सत्यत्र कृष्णो नृहरिरपि रवौ नक्रगे कृष्णतारे
स्वानीयैकत्र सर्वाः स्वजनपरिषदः तासु चानुप्रविश्य ।
अस्मच्छ्रीभूतलोकप्रथितगुरुपदं वीररघ्वीट्छठारेः
आयत्तं स्यादितीदं शठजिदभिमतं वेद्यमित्यादिदेश ॥ २४ ॥

ज्ञात्वेदं किंगृहेशः स्ववशमिति धिया स्वेष्टपूर्तिं विदन् सन्
अस्मच्छ्रीभूतमेतद् नृहरिपदमितो लेख्यतां वण्छठारे ।
इत्यादिश्यादसीयं जनमभिमुखयन् मत्सकाशं मदीय-
श्रीभूतं श्रीनृसिंहास्पदमिह गमयेत्यादरेणादिदेश ॥ २५ ॥

इत्यादिष्टः स दासो नरहरिवसतिं दक्षिणाहोबिलाख्यं
कञ्चिद् ग्रामं प्रयातो वरिवसकजनान्विच्छुरेनं हि वीक्ष्य ।
त्वय्यर्चां कर्तुकामं सफलमिममवेक्षस्व मामित्यपेक्ष्य
श्रीमद्धस्तीशशेषाद्यधिपविषयकं सुप्रभातं सिषेवे ॥ २६ ॥

तच्छ्रुत्वा श्रीनृसिंहः प्रमुदितवदनो दिव्यगाथाप्रबन्धान्
गोदाश्रीमच्छठार्याद्यनुभवविशदीकारसिद्धान् विशुद्धान् ।
भृत्यैरध्याप्य तेन प्रथितनरहरिं सम्यगाराध्य तस्मै
दत्त्वा द्राग्घंसमुद्रादिकमधिपतितामस्य निन्ये पदस्य ॥ २७ ॥

तस्मिन् काले करीशो नरहरिवरदो हस्ततारेऽवतीर्णः
स्वे हस्ते दासमेनं विदधदभिमतं हस्तगं मेऽन्वगृह्णात् ।



अन्येद्युश्चापरेद्युर्नरहरियजनं कारयित्वा प्रयाप्य
स्वीयं मां किंगृहेशः स्वजनिमहदिने पौषदर्शे ददर्श ॥ २८ ॥

विष्वक्सेनादिपूर्वं शठरिपुभजने संस्मरन् हंसमुद्रां
प्रागन्मत् श्रीप्रधानं नृहरिपदमिदं निर्वहेत्वद्गृहीता(?) ।
सैनां मत्तो गृहाणेत्यतिशयगमिताम् अङ्गुलिस्थां विजानन्
सद्यो रामानुजार्यः स्वकलितविधिना स्वे गृहेऽयाजयन् तम् ॥ २९

इत्थं वीररघूद्वहस्य यतनाल्लब्धं नृसिंहास्पदं
श्रीमद्वीररघूद्वहश्च्यभिधया तस्याज्ञया योजयन् ।
तद्भक्तात् शठकोपसूरिवरतः श्रीहंसमुद्रां भजन्
प्राचीं श्रीशठकोपलक्ष्म्यभिहितां संज्ञां समन्वर्थये ॥ ३० ॥

एवं श्रीवीरराघवदिव्याज्ञालब्ध - श्रीवीरराघवशठकोपनामा "श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्र-स्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीवण्शठकोपश्रीवीरराघवशठकोपस्वामी" इति ।

इति श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकवैभवं सम्पूर्णम् ।

श्रीमते श्रीवण्शठकोपश्रीवीरराघवशठकोप-
यतीन्द्रमहादेशिकाय नमः

மன்னார்கோவில் மஹாராஜ ராஜஸ்ரீ ராஜு சாஸ்த்ரிகளுக்கு, கொடவாசல் வித்வான், உபய ராமபத்ராசார்யர் எழுதின பத்திரிகை.

*பார்த்திவ வர்ஷம். கார்திகை மாதம். 15தேதி.*

—o—o—

श्रीमद्वेदमार्गचञ्चूर्यमाणमानसपरिरम्भजरीजृम्भ्यमाणविततमतिविलसितानवरतरचितपरिचयाद्वैतमततमालतरुतलनित्यनिलयकोकिलाभिलपनायमानसकलतन्त्ररङ्गस्थलकलितनटनचटुलागणितविभवफणितिगणचणानां क्षमादयादिनिखिलगुणगणमणिमहोदधीनां निखिलनिगमविहितानभिसंहितफलविशेषसुचरितनिरन्तररसभरितसञ्जातवैदिकसाम्राज्य - लक्ष्मीशालितया अन्वर्थितराजाभिख्यानां शास्त्रिगणशिरोमणीनां बहुविनतिततिपुरस्सरीयं रामभद्राचार्यकृता भवदीयनिरुपधिप्रेमभरप्रेरिता विज्ञप्तिः । किङ्गृहपुरे कुशलं भवदीयसुहृद्वर्गस्य । तत्रत्यनित्यनैमित्तिकादिवैदिकाचरणसरणिनिरन्तरसञ्चरणादिवर्तमानकुशलवृत्तपरिज्ञापक - वदनरसपरिमललवम् अनुकलमभ्यर्थये ।

अस्मन्मतविजयध्वजायमान-श्रीरामानुजमुनि-निगममकुटगुरुशेखरादिमबहुमर्वज्ञशिरोमणिपरिगृहीतस्थेमशब्दस्य स्थिरशब्दाद् इमनिच्प्राप्तिगन्धरहितस्य, तथाविधभवतीपादशब्दादेः दुर्वारपुंभावविधिगन्धदूरस्य च साधुत्वनिर्वाहः क इव तत्रभवद्भिर्दरीदृश्यत इति सन्दिहतेऽत्र श्रीमन्तोऽस्मद्गुरुचरणाः, तदीयनियमनधुरन्धराः गोपालाचार्याश्च । तत्र भवद्भिरभिमतः कश्चन निर्वाहः आज्ञाप्यताम्— इति सविनयं तत्रभवतामभ्याशमभ्यर्थये—

इति, कोडवाशल्ल - रामभद्राचार्यः ।



*1885 ஸம். நெல (வருஷம்) 6 தேதி மன்னார்கோவில் ம.ரா.ரா ஸ்ரீ. ராஜுசாஸ்த்ரிகள் கொடவாசில் ராமபத்ராசார்யருக்கு எழுதினது: —*

पुष्यच्चम्पकसारसौरभझरीपारीणमन्दानिल-
स्पन्दान्दोलितकुञ्चितालककलसत्सम्पूर्णचन्द्राननम् ।
शृङ्गारैकरसाङ्कुरार्पणमहीं सौन्दर्यरत्नाकरं
वन्देऽकिञ्चनवल्लवीजनतपस्सन्दोहसारं महः ॥ १ ॥

श्रीराजगोपचरणाम्बुजभक्तिभूम-
निर्धूतपापनिचयो रचयेन्ममान्तः ।
लक्ष्मीनृसिंहललिताङ्घ्रियुगं प्रसन्ने
प्रह्लादमानस इव स्थिरसन्निधानम् ॥ २ ॥

श्रीमद्वेङ्कटनाथसत्कविकृतस्तुत्योर्दयापद्ययोः
पुंवद्भावविनाकृतस्य भवतीशब्दस्य वृत्तौ कथम् ।
साधुत्वं भवितेति संशयजुषस्त्वेवं प्रबोध्या बुधाः
भाष्येष्ट्या हि विभावितो विधिरसौ वैभाषिकी सात्विति ॥३॥

"भवतीपादलाक्षारसाङ्कम्", "भवतीमाश्रयते (-माद्रियते) भवत्यधीनैः" इति श्रीस्तुति - दयाशतकयोः श्रीवेदान्ताचार्यकृतपुंवद्भावरहितसर्वनामप्रयोगे "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति

भाष्येष्टया पुंवद्भावे कर्तव्ये तदकरणात् तस्यासाधुत्वमाशङ्कमानाः वैयाकरणाः तस्या इष्टेर्वैभाषिकत्वात् इहाप्रवृत्तिरितीममर्थं बोधयितव्याः। सा हि "दक्षिणोत्तराभ्यामतसुच्" (५ ३-२८) इति सूत्रेऽतसुचः स्थाने तसुजेवोच्यताम्, लाघवात्-इत्याशङ्क्य समाधानावसरे "लिङ्गविशिष्ट" परिभाषया दक्षिणोत्तराशब्दाभ्यां स्त्रीलिङ्गाभ्याम् अतसुचि, "यचि भम्" (१-४-१८) इति भत्वे टिलोपात् 'दक्षिणतः, उत्तरतः' इति समीहितं रूपं सिध्यति। तसुचि क्रियमाणे तु टिलोपाभावात् नैतत् सिध्यति। किं तु 'दक्षिणातः इति उत्तरातः' इत्येव स्यात्। अतसुजेव यथासूत्रमस्तु-इत्युक्त्वा, तसुचि क्रियमाणेऽपि "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" (वा.५.३.२८) इति पुंवद्भावादिष्टरूपसिद्धिरिति भाष्येऽभिहिता। तस्याश्च प्रयोजनानि—सर्वमयः, सर्वकभार्यः, सर्वप्रिय इत्यादीनि। अस्याश्च इष्टेरनित्यत्वं "भवतष्ठक्छसोः" (४-२-११०) इति वार्तिकारम्भेण इति भाष्यकृता 'सर्वनाम्नः–' इतीष्ट्या तदप्रत्याख्यानेन च अवगम्यत इति "दक्षिणापश्चात्पुरतस्त्यक्' (४-२-९८) इत्यत्र शेखरे स्पष्टम्।

पुंवद्भावविनाकृतस्तु भवतीशब्दः समासोदर-
स्थायी यस्तदसङ्गतिं समुदितां द्वेधा समाधाम ताम्।
एकाऽभाणि विधा, परा तु डवतौ भातेः परे प्रत्यये
निष्पन्नः सुभगार्थकस्त्विति मया भङ्गीयमङ्गीकृता ॥ ४ ॥



'समाधाम' इति लुङ्। प्रकारद्वयेन समाधानमकार्ष्म-इत्यर्थः। इष्टेः अनित्यत्वमिति प्राथमिकः प्रकार उक्तः। द्वितीयस्तु–'भातेर्डवतुः' इति शाकटायनसूत्रव्युत्पादितो भवच्छब्दो न सर्वनामगणान्तर्गतः। तत्र गणे पठितस्य 'भवतु' इत्युगन्तप्रातिपदिकस्य त्यदाद्यन्तर्गतस्य डवत्वन्ताभेदे प्रबलप्रमाणानुपलम्भात्। सर्वनामसंज्ञकभवच्छब्दो हि युष्मच्छब्दपर्यायतया सम्बोधने चेतनैकान्तवृत्तिः। न सम्बोधनविभक्त्यर्हः। न हि 'हे त्वम्!' इति सम्बुद्ध्यते कुत्रचित् केनचित् कश्चित्। अत एव 'त्यदादीनां सम्बोधनं नास्ति' इत्युत्सर्गः।' इति प्राचां प्रवादः। नच उत्सर्गत्वादेव 'क्वचित् सम्बोधनमस्ति' इति गम्यते, अत एव भाष्ये 'हे स' इति सम्बोनमप्रथमा तच्छब्दादुदाहृतेति वाच्यम्—अथापि सम्बोध्यार्थकभवदादिशब्दादुत्सर्गप्रवृत्तेरविघातात्, युष्मच्छब्दवत् डवत्वन्तभवच्छब्दस्तु भासमानार्थकः सम्बोधनविभक्त्यर्ह एव। अत एव "भवति भिक्षां देहि' इत्यत्र "सततमनभि.... भवति भवत्सुहृज्जनः सकामः' (7 - 9) इति माघकाव्यादौ सम्बुद्ध्यन्तस्य तस्य प्रयोगो दृश्यते। अत एव तादृशमाघश्लोकव्याख्यायां भवतीत्यस्य 'सुभगे' इति व्याख्यानं कृतम्। ततश्च डवत्वन्तभवतीशब्दघटितस्यास्य प्रयोगस्य साधुतां निर्विवादं वदामहे। 'मयाऽङ्गीकृतेयं भङ्गी' इत्युक्त्या बवाचिरक-ग्रन्थान्तरसंवादादिकमस्तु वा मा वेति व्यञ्जितम्। किञ्च,

भगवच्छब्दवत् पूज्यवाच्यप्यस्ति भवत्पदम् ।
तत्पर्यायतया तस्य श्रुतिस्मृत्योः प्रयोगतः ॥ ५ ॥

"अधीहि भगव इति होपससाद", "अधीहि भगवो ब्रह्म" इत्यादिवत् श्रुतौ दृष्टस्य भगवत्पदस्य स्थाने, "अधीहि भो आमन्त्रयेत गुरुम्" इत्यादिसौत्रप्रयोगात् तयोः पर्यायत्वमवसीयते "विभाषा भवद्भगवदघवताम् ओच्चावस्य" (3-8-17) इति वार्त्तिकेन 'भो' इत्यस्य भवच्छब्दनिष्पन्नत्वात् । इत्थं च तादृश-भवच्छब्दप्रकृतिकङ्यन्तस्य सर्वनामत्वाभावेन पुंवद्भावप्रसक्तिरेव नेति वक्तुं शक्यम् । नच तर्हि भवतीशब्दे केन सूत्रेण ङीप् स्यादिति वाच्यम् । गौरादेराकृतिगणत्वेन ङीषा तदुपपत्तेरिति सङ्क्षेपः ॥ श्रीः ॥

—०—०—

## अनुबन्धः २

(स्थेमशब्दविषये श्री मन्नार्कोविल् राजुशास्त्रिणां आशयः ।)

स्थाधातोः सति शाकटायनमुनिप्रोक्ते किरच्प्रत्यये
निष्पन्नः स्थिरशब्द एष यदतो भावेमनिच्प्रत्यये ।
सिद्धं स्थेमपदं स्थितिं तु गमयेच्छक्त्याऽन्यवृत्त्याऽथ वा
सम्भूते प्रलयस्य मध्यपठितं तद् बोधयेत् किं परम् ॥ १ ॥

पृथ्वादिराकृतिगणो यदि शब्द एष
स्थेमेति साधुरिमनिच् कथमन्यथा स्यात्? ।
नापाठि तत्र यदसाविति चेन्न तस्य
तत्त्वं प्रकल्प्यमभियुक्ततरप्रयोगैः ॥ २ ॥

किं बहुना? । 'प्रकृत्यैकाच्' (६-४-६३) इति सूत्रे भाष्ये—"सत्यपि इष्टेमेयस्तु प्रकृतिभावे किमुदाहरणम्? प्रेयान्, प्रेमा, प्रेष्ठः; स्थेयान्, स्थेमा, स्थेष्ठः" इति प्रयोगेण, "जन्मस्थेमलयं समस्त—" इति, "जगज्जन्मस्थेमाप्यय-नियमनान्" इति, "अखिलभुवनजन्मस्थेमभङ्गादिलीले" इत्यादि-प्रयोगैश्च आकृतिगणत्वमवसीयते । अत एव "तरुणिमकरुणापूरां" "नवतरुणिमलक्ष्मीनन्दनीयं शरीरं" इत्यादिप्रयोगा उपपद्यन्ते ।

श्रीमन्नृसिंहकरुणाकलितावलोक-

सद्यस्समुन्मिषदमोघमनीषयैषा ।

वृत्तिः समस्तभवतीरदभूषणाख्या

चाम्पेयकाननजुषा विदुषा व्यतानि ॥ ३ ॥

पन्थाः साधुरसाविहेति भगवल्लक्ष्मीनृसिंहानुगैः

पक्षश्चेदयमङ्ग्यकारि विबुधैः प्रीणाति बाणौ(णा)हितः(!)।

रुक्मिण्या सह भामया सकनकाम्भोजाम्बयाऽऽलिङ्गितः

विष्णुर्द्वारवतीमिमामधिवसन् विस्मापितास्माकधीः ॥ ४ ॥

लक्ष्मीनृसिंहशासनसादरमनसोऽपि मे विलम्बोऽयम् ।

प्रतिपत्रलेखनविधौ बाढं साढव्य एव गुणविद्भिः ॥ ५ ॥

चम्पकारण्यवास्तव्यः त्यागराजाभिधो बुधः ।

राजुशास्त्र्यपराभिख्यः पत्रमेतद् व्यलीलिखत् ॥ ६ ॥

உத்தரவுப்படி சிஷ்யன் सुब्रह्मण्यशास्त्री

---

## अनुबन्धः २

श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकानां विषये प्रशस्तिश्लोकाः—

धिक्कृतधिषणमनीषोऽधःकृतदुर्वादिघुष्टजयघोषः ।

स्वीकृतयतिवरशेषः लोकानुजिघृक्षयाऽऽदिमः शेषः ॥ १ ॥

शैशवविदिताशेषः शठजिल्लक्ष्मणयतीशपदशेषः ।

वीररघूद्वहशठरिपुनामविशेषो विभातु गुरुरेषः ॥ २ ॥

तस्य गुरोः श्रीसूक्तिः चुलकितदुर्वादिखर्वगर्वोक्तिः ।

प्रौढप्रवितितयुक्तिः जीयाद् नितरामतीतवाग्विचितिः ॥ ३ ॥

वीररघूद्वहशठारातियतिधुर्याय मङ्गलम् ।

ज्ञानभक्तिविरक्त्यादिसद्गुणायास्त्वनर्गलम् ॥ ४ ॥

## (आदेशमणिग्रन्थोपक्रमे मुद्रिताः श्लोकाः ।)

जयति जगति प्रतीता भूतपुरी नाम शुभकरी नगरी ।
यत्र पतञ्जलिरुदभूत् भगवद्रामानुजार्यमुनिवपुषा ॥ १ ॥

तस्याः शाखानगरं जयतितरां 'पिळ्ळपाक्क' नामवरम् ।
अभिजनविद्यावृत्तैर्यत्र प्रथिता वसन्ति विष्णुपराः ॥ २ ॥

श्रीरामानुजयोगी भाष्यं विरचय्य वादिनो जित्वा ।
जगति विशिष्टाद्वैतं निरवद्यं सर्वतः प्रतिष्ठाप्य ॥ ३ ॥

निचखान तत्रतत्र प्रतिदेश प्रतिदिशं जयस्तम्भान् ।
तदुपज्ञमेव दर्शनमेतच्छाखोपशाखमभिववृधे ॥ ४ ॥

तच्छोधिते मतेऽस्मिन् जित्वा दोषाभिधायिमायिजनान् ।
कविकथककेसरिगुरुः ग्रथति स्म परश्शतं प्रबन्धमणीन् ॥५॥

तत्र विचार्यान् अंशान् विचार्य पुनरुद्दिधीर्पुरात्ममतम् ।
तस्मिन् शाखानगरे यतिपतिरवतारमैच्छद् अंशेन ॥ ६ ॥

शुभधीभासंख्याकेषु (४९४५) अब्देषु कलेः क्रमादतीतेषु ।
क्रोध्यब्दमाघपुष्ये कौशिकगोत्रे स एष संजज्ञे ॥ ७ ॥



पूर्वाचार्यादिष्टाः गाः पालयितुं प्रवृत्त एष इति ।
गोपालनाम विदधे तस्य पिता वीरराघवार्याख्यः ॥ ८ ॥

आजन्मनः सुशीलो विदिताखिलवेदितव्य एष गृही ।
नित्यं स्वकर्मनिरतो निवृत्तचेता बभूव भवमार्गे ॥ ९ ॥

परिणतभक्तिविरक्तिः सन्न्यस्य, गुणाधिकेषु विन्यस्यन् ।
सत्सम्प्रदायमेतं प्रणिनाय प्रौढधीः प्रबन्धगणम् ॥ १० ॥

तत्र ग्रन्थविशेषाः अशेषदोषज्ञविहितसन्तोषाः ।
भूतपुरीवसतिजुषा देशिकविदुषा विशोधितश्लेषाः ॥ ११ ॥

किडम्बिगृहपुरवरजनुषा तत्तादृशदेशिकाङ्घ्रिभक्तिजुषा ।
रङ्गाचार्याह्वजुषा तद्गुर्वाज्ञामुपेयुषा शिरसा ॥ १२ ॥

श्रीकुम्भघोणनिलये श्रीविद्याभिख्यमुद्रणनिकाय्ये ।
विश्वावसुवर्षेऽस्मिन् ऊर्जे संमुद्रिता जयन्तितराम् ॥ १३ ॥

श्रीः

# अनुबन्धः ५

# पदसंस्कारः

(उद्यानपत्रिका September 1930)

श्री. V. R. श्रीनिवासताताचार्यः, व्याकरण - वेदान्त - साहित्य-शिरोमणिः, व्याकरणप्रधानाध्यापकः, तिरुवैयार् संस्कृतकलाशाला)

"प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः
अव्यात् त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनाद् अवन्ध्यजठरा यादृच्छिकाद् वेधसां
या काचित् सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥"

इतीदं श्रीमन्निगमान्तमहादेशिकविरचिते दशावतारस्तोत्रे पञ्चमं पद्यम्। अत्र 'गृहशशाभ्यां क्लीबे' इति लिङ्गानुशासनस्थाधिकार (९—२२) सूत्रेण 'महासुरगृहस्थूणं' इति नपुंसकत्वमुचितम् - इत्याशङ्क्य, तद्व्याख्याने समाधानद्वयमुक्तम्। अयमत्र व्याख्यानग्रन्थः—"महासुरगृहस्थूणेति। अत्र 'गृहशशाभ्यां क्लीबे' इति केवलगृहशब्दात् परस्यैव स्थूणाशब्दस्य नपुंसकत्वविधानात् अत्र अतथात्वात् स्त्रीलिङ्गता। अथवा 'गृहशशाभ्यां



क्लीबे' इति सूत्रात् गृहस्थूणशब्दस्य नित्यनपुंसकत्वेऽपि 'शलाका स्त्रियां नित्यम्' (९—३४) इत्यत्र नित्यग्रहणम् — अन्यत्र क्वचित् व्यभिचारं ज्ञापयति - इति पूर्वसूत्रविहितानामपि अनित्यत्वज्ञापनात् गृहस्थूणेत्यपि रूपं सिद्ध्यति" इति।

प्रथमसमाधानग्रन्थस्यायं भावः—'स्थूणोर्णे नपुंसके च' इति सूत्रं 'गृहशशाभ्यां—' इत्यस्मात् प्राक्तनम्। तेन सूत्रेण स्थूणोर्णाशब्दयोः स्त्रीत्वं नपुंसकत्वं च अनुशिष्यते। 'गृहशशाभ्यां क्लीबे' इत्यत्र 'स्थूणोर्णे' पदमनुवर्तते। अस्य सूत्रस्येयं वृत्तिः—नियमार्थमिदम्। गृहशशपूर्वे स्थूणोर्णे यथासङ्ख्यं नपुंसके स्तः। गृहस्थूणम्। 'शशोर्णं शशलोमनि' इति अमरः। इति। पूर्वसूत्रात् नपुंसकपदानुवृत्तौ सम्भवन्त्यां पुनः प्रयुक्तं क्लीबपदं नियमार्थं भवति— गृहशशाभ्यां परे स्थूणोर्णे नपुंसक एव भवतः; नतु कदाचित् स्त्रीलिङ्गे भवतः— इति। एवं सति 'महासुरगृहस्थूणा' इति स्त्रीलिङ्गप्रयोगः कथमुपपद्यते? इति चेत्— न। 'गृहशशाभ्यां—' इत्यस्य विशेष्यासन्निधानेन तदन्तविधिलभ्यस्य 'गृहान्तशशान्तशब्दाभ्यां परे' इत्यर्थस्यासमर्पकतया गृहान्तमहासुरगृहशब्दपूर्वकत्वे प्रकृतसूत्राप्रवृत्तेः। सति गमके विशेष्याध्याहारेणापि तदन्तविधिप्रापणं युज्यते। यथा—'सर्वादीनि सर्वनामानि' इत्यत्र 'द्वन्द्वे च' इति ज्ञापकात् शब्दस्वरूपाध्याहारेण सर्वाद्यन्तार्थबोधनम्। प्रकृते तु न किञ्चिदपि गमकं दृश्यते। अतो 'गृहशशाभ्यां—'

इति नपुंसकौचित्यशङ्का न युक्ता— इति । 'तुष्यतु दुर्जनः' इति न्यायेन समाधानान्तरमुक्तम् । तस्यायं भावः—तत्र स्त्र्यधिकारे 'शलाका स्त्रियां नित्यम्' इत्यन्तिमं सूत्रम् । 'शलाका स्त्रियाम्' इत्येतावतैव शलाकाशब्दस्य नित्यस्त्रीत्वलाभे, नित्यग्रहणं व्यर्थमिति कौमुदीकार आशङ्क्य, "नित्यग्रहणमन्येषां क्वचिद् व्यभिचारं ज्ञापयति" इति लिलेख । अत्र भैरवमिश्रः 'क्वचिद् व्यभिचारं' इति प्रतीकं धृत्वा "तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितम्— तथाऽन्येषां अन्यलिङ्गत्वेऽपि साधुत्वमिति सूचयति" इति कौमुदीकाराशयमाविश्चकार । ततश्च लिङ्गानुशासने केषाञ्चिच्छब्दानां कस्यचित् लिङ्गस्यानुशासनेऽपि प्रामाणिकाभिज्ञप्रयोगस्थं लिङ्गान्तरमपि साधु एव इति सूत्रकारेण नित्यपदेन सूचनात्, भाष्यकारेण "लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य" इति लिङ्गानुशासनस्य प्रत्याख्यानाच्च 'महासुरगृहस्थूणा' इति स्त्रीलिङ्गप्रयोगो निर्बाध एव—इति ॥

---

अनुबन्धः ६

## समासे भवतीशब्दः

(उद्यानपत्रिका March-April 1948)

(श्री. V. R. श्रीनिवासताताचार्याः व्याकरणप्रधानाध्यापकाः, संस्कृतकलाशाला, तिरुवैयारु, व्याकरणवेदान्तसाहित्यशिरोमणिः)

वेणीसंहारपञ्चमाङ्कनवमश्लोके 'एकोऽहं भवतीसुतक्षयकरः' इति प्रयोगोऽस्ति । अत्र व्याख्याता जगद्धरः भवतीशब्दे पुंवद्भावमाशङ्क्य एवं समाधत्त—"भवतीत्यत्र पुंवद्भावाभावः प्रियादिपाठात्, 'स्त्रियाः पुंवत्—' (६-३-३४) इति योगविभागाद्वा" इति । समाधानमेतन्न हृद्यम् । तथाहि—कौमुद्यां बहुव्रीहिप्रकरणे 'स्त्रियाः पुंवत् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' (६-३-३४) इति सूत्रस्य "भाषितपुंस्कादनूङ्=ऊङोऽभावो यस्यामिति बहुव्रीहिः, निपातनात् पञ्चम्या अलुक्, षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः...... चित्रगुः, रूपवद्भार्यः" इति व्याख्यानं दृश्यते । 'भवतीसुतक्षयकरः' इत्यस्य भवत्याः सुताः भवतीसुताः - तेषां क्षयः, तस्य कर इति विग्रहः कार्यः ।

सुतशब्दस्य भवतीशब्दसमानाधिकरणस्त्रीलिङ्गोत्तरपदरूपत्वाभावात् तस्मिन् परे भवतीशब्दे चित्रगुरित्यादिषु चित्रादिपदेष्विव पुंवत्त्वप्राप्तिरेव नास्ति । अतः तत्प्रतिषेधार्थम् अनाकृतिगणप्रियादौ सुतशब्दपाठकरणं न युज्यते । अपि च तत्र तत्पाठकरणेऽपि सर्वप्रिय इत्यादिवत् 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवत्त्वं वारयितुं न शक्यते । 'स्त्रियाः पुंवत्–' इति योगविभागो भाष्यादिषु न लक्ष्यते । किञ्च, नञ्रहितेन तेन पुंवद्भाव एव साधयितुं शक्यते । न त्वदभिमतस्तदभावः । अथोच्येत 'योगविभागादिष्टसिद्धिः' (प. १२५) इति परिभाषया प्रकृते पुंवद्भावस्यास्य अप्रवृत्तिरिति— एतदपि न हृदयङ्गमम् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्ट्या पुंवद्भावस्य दुर्वारत्वात् । किञ्च, 'स्त्रियाः पुंवत्–' इत्यस्य विभक्तोत्तरयोगेन अगतार्थत्वसिद्धये समानाधिकरणभिन्नस्थले प्रत्ययेऽप्रत्यये वा परे स्त्रीवाचकशब्दस्य पुंवद्भाव इत्यर्थो व्याप्तिन्यायेन आश्रयणीयो भवेत् । तथा सति तत्र प्रत्ययेऽप्रत्यये वा परे पूर्वस्य स्त्रीवाचकशब्दस्य पुंवद्भावं विदधतां बहूनां वैयर्थ्यं प्रसजेत् । अतः 'स्त्रियाः पुंवत्–' इति योगविभागाश्रयणमपि न साधु भवति । श्रीस्तुतौ—

"यत्सङ्कल्पाद् भवति कमले यत्र देहिन्यमीषां
जन्मस्थेमप्रलयरचना जङ्गमाजङ्गमानाम् ।
तत् कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ
पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम् ॥" (श्लो. ४)



इति श्लोकोऽस्ति । तद्व्याख्याने 'भवतीपादलाक्षारसाङ्कम्' इत्यत्र भवतीशब्दस्य सर्वनामत्वेन 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भवत्पादलाक्षेति स्यादिति चोदयन्ति । 'एकोऽहं भवतीसुतक्षयकरः' इति वेणीसंहारे, 'भवतीसंहार (सम्बन्ध?) दृष्ट्या हरिम्' इति श्रीगुणरत्नकोशे (श्लो. ५९) अत्र च बहुशः प्रयोगदर्शनेन भवच्छब्दसर्वनाम्नः शतृप्रत्ययान्तभिन्नस्य सम्भावितत्वात् अन्यथा गत्यन्तराभावात् इति परिहरन्ति' इति अभ्यधीयत । अत्रत्यपरिहरणं न चोद्यानुगुणम् । भवतीपादलाक्षेत्यत्र 'सर्वनाम्नो वृत्तिमात्रे' इत्यस्य प्रवृत्त्या भवत्पादलाक्षेति स्यादिति चोद्यम् । तदप्रवृत्त्या भवत्पादलाक्षेति न स्यादित्येव तदनुरूपमुत्तरम् ; न तु "भवच्छब्दसर्वनाम्नः शतृप्रत्ययान्तभिन्नस्य सम्भावितत्वात्' इत्यादिप्रतिपादनम्'। श्रीरङ्गनाथपादुकासहस्रे—

''द्वितयं प्रतियन्ति रङ्गभर्तुः कतिचित् काञ्चनपादुके शरण्यम् ।
अभयान्वितमग्रिमं करं वा भवतीशेखरितं पदाम्बुजं वा ॥''

इति नवषष्टितमपद्यव्याख्याने 'भवतीशेखरितं.... 'सर्वनाम्नो वृत्तिमात्रे पुंवत् —' इत्येतत् भवतीशब्दविषये प्रायिकम्, 'ठक्छसोश्च' इति भवतीशब्दस्य पुंवद्भावविधायकात् वार्त्तिकात् ज्ञापकात् । अतो भवच्छेखरितमिति नाशङ्कनीयम्' इति व्याक्रियत । कौमुद्यां बहुव्रीहिप्रकरणे 'ठक्छसोश्च'—भवत्याः छात्राः भावत्काः, भवदीयाः ।

एतद् वार्त्तिकं 'एक तद्धिने च' इति सूत्रं च न कर्तव्यम् ॥ 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्ट्या गतार्थत्वात्' इत्यगदत । लघुशब्देन्दुशेखरे 'गतार्थत्वात्' इति प्रतीकमुपादाय, 'न च एकशब्दात् अकचि स्यादौ एकिकत्वम् इत्यादौ पुंवत्त्वे इकारो न श्रूयेत — पाचकजातीयेतिवत् । ह्रस्वे तु प्राप्तजीविकवत् तच्छ्रवणम् इति 'एक तद्धिते च' इति न गतार्थम् । एक इत्यविभक्तिको निर्देशः, 'न लोपः प्रातिपदिकान्तस्य' इतिवत्, न स्वरूपविवक्षार्थः इति वाच्यम् । तादृशप्रयोगाणामनभिधानम् इत्यभिमानात्' इति आ(व्या)ख्यायत । अत्र 'अभिमानात्' इति व्याहारेण एकिकत्वम् इत्यादिप्रयोगसिद्धये 'एक तद्धिते च' इति सूत्रस्यावश्यकत्वात् कौमुद्युक्तं भाष्यकारेष्ट्या तत्सूत्रस्य गतार्थत्वमयुक्तम् — इति शेखरकाराशयः प्रतीयते । पादुकासहस्रव्याख्याने पूर्वोक्तवार्त्तिकस्य इष्टिप्रायिकत्वज्ञापकत्वोक्त्या, तज्ज्ञापनार्थमावश्यकस्य वार्त्तिकस्य कौमुद्युक्तं गतार्थत्वमनुचितमिति पादुकासहस्रव्याख्याकाराभिप्रायोऽवगम्यते । अयमेवाभिप्रायो दुर्घटवृत्तौ षष्ठाध्याये तृतीयपादे 'स्त्रियाः पुंवत् —' इत्यादिसूत्रे कथं 'एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः!' इति वेणी; 'भवतीप्रसादात्' इति चण्डी (4-16)! 'सर्वनाम्नो वृत्तिमात्रे पुंवत्' इति वचनात् ॥ उच्यते । 'पुंवत्' इति योगविभागसाध्यं क्वचिदेव । अत एव वृत्तौ न लिखितम्' इति 'स्त्रियाः पुंवत् —'



इति योगविभागमभ्युपगम्य वदतः शरणदेवस्य, 'दक्षिणापश्चात् — पुरसस्त्यक्' (४-२-९८) इति सूत्रे 'केचित्तु 'ठक्छसोश्च' इति वार्त्तिकारम्भेण भाष्यकृता 'सर्वनाम्नः —' इतीष्ट्या तदप्रत्याख्यानेन च इष्टेरनित्यत्वात्' इत्यादिकमाचक्षाणस्य शेखरकारस्य च अस्तीत्यवसीयते । कौमुद्युक्तरीत्या सूत्रवार्त्तिकयोः गतार्थत्वाङ्गीकारे एकिकत्वम् इत्यादीनां 'भवतीसुतक्षयकरः', 'भवतीपादलाक्षारसाङ्कम्' इत्यादीनां च शिष्टप्रयोगाणामसिद्धिः स्यात् । शिष्टप्रयोगसंग्रहे तु 'सर्वनाम्नः —' इतीष्टेः भवच्छब्दाविषयकत्वमुपपाद्य, 'भवतीभागधेयेन' 'भवत्यधीनैः' (दयाशतके - २७) इत्यादिप्रयोगाः असाध्यन्त । लिङ्गसामान्ये नपुंसकत्वमाश्रित्य 'सततं भावो भवत्कुन्तले' इति प्रयोगः समार्थ्यत च । वृत्तौ भवतीशब्दस्य उपसर्जनत्वेनासर्वनामत्वेऽपि 'इष्टौ मात्रग्रहणात् यस्य क्वचित् सर्वनामत्वं दृष्टं तस्य वृत्तौ पुंवत्त्वमित्यर्थः' इति शेखरे इष्ट्यर्थवर्णनेनात्र वृत्त्यनन्तर्भावे भवच्छब्दे स्थितं सर्वनामत्वं वृत्त्यन्तर्भावे ङीप्प्रकृतौ तस्मिन् भूतपूर्वगत्या स्वीकृत्य 'लिङ्गविशिष्ट' परिभाषया भवतीशब्दस्य 'सर्वनाम्नो वृत्तिमात्रे' इत्यत्रत्यसर्वनामपदेन ग्रहणमनुसन्धाय च पुंवत्त्वाशङ्का कृतेति विभावनीयम् ॥

## अनुबन्धः ७

(श्रीमत् - श्रीभाष्यसिंहासनं तिरुमङ्गलम् नडादूर् नरसिंहाचार्यैः (मद्रास् प्रेसिडेन्सी कालेज् संस्कृतप्रधानपण्डितैः) कृतात् शिष्टप्रयोगसङ्ग्रहात् प्रकृतोपयुक्तो भागः प्रकाश्यते।
—सम्पादकः चेट्लूर् वा. श्रीवत्साङ्काचार्यः)

१२. 'अखिलभुवनजन्मस्थेमभङ्गादिलीले' इत्यत्र श्रीभाष्यप्रथमश्लोके प्रयुक्तस्य स्थेमन्शब्दस्य पृथ्वादिगणे स्थिरशब्दस्य पाठाभावात् तस्याकृतिगणत्वाभावाच्च असाधुत्वं मन्यन्ते माध्वादयः प्रतिपक्षिणः। इदञ्चातीव चित्रम्। कुत इति चेत्–तस्य महाभाष्य - महाकविप्रयोगाः प्रथमं प्रदर्श्यन्ते। तथाहि महाभाष्ये- 'प्रकृत्यैकाच् इष्ठेमेयस्सु चेत्-किमुदाहरणम्? स्थेयान्, स्थेमा, स्थेष्ठः' इत्यादि। 'जन्मस्थेमप्रळयरचना जङ्गमाजङ्गमानाम्' इति श्रीस्तुतौ निगमान्तदेशिकः। श्रीगीतार्थसंग्रहे श्रीमद्यामुनाचार्यैः—

'दे(दै)वासुरविभागोक्तिपूर्विका शास्त्रवश्यता।
तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते॥' (श्लो. २०)

इति। श्रीकण्ठचरिते (४-५६) 'रोहद्दीर्घजटास्तटेषु तपसि स्थेम्नेव यस्य द्रुमाः' इति। 'निस्स्थेमानो दशाननकीर्तयः'



इति अनर्घराघवे मुरारिः। 'जगज्जन्मस्थेमप्रळयविधयो धीविलसितम्' इति वरदराजस्तवे कूरेशः (प. ६४) 'सर्गस्थेमप्रभृतिषु सदा नागरा नाघटीति' इति श्रीरङ्गराजस्तवे (२.४६) 'त्रिभुवनजननस्थेमसंहारधुर्या' इति सुदर्शनशतके-(प. ५९) कूरनारायणः। श्रुतिप्रयोगोऽपि प्रदर्श्यते—का. ६. प्र. १. प. २४. 'स्थिरो भव वीड्वङ्ग इति गर्दभ आसादयति, सन्नह्यत्येवैनमेतया स्थेम्ने।' इति। ब्राह्मणस्य मन्त्रवर्णप्रत्यभिज्ञापकत्वात् पूर्वोपात्तस्थिरशब्दस्य स्थेम्ने इति भावार्थकेमनिजन्तेनानुवादः। एवं लोकवेदयोर्भाष्ये चासकृत् प्रयुक्तस्यास्य साधुत्वे ये संशेरते, तेषां संशयालुत्वमेव प्रकटीभवति। किञ्च, भाष्ये 'उणादयो बहुलम्' इत्यत्र

'बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु॥'

इति सिद्धान्तितत्वेन शिष्टप्रयुक्तास्सर्वेऽपि शब्दा अनुशासनाभावेऽपि प्रकृतिप्रत्ययकल्पनेन साधवो मन्तव्या इति तात्पर्यम्।

किंच, अस्माकं शब्दशास्त्रगुरुभिः पिळ्ळैपाक्कं श्रीमद्गोपालाचार्यैः स्थेमदर्पणेऽस्य साधुत्वं बहुधा प्रपञ्चितमिति तत्सर्वं तत्रैव द्रष्टव्यमिति नेह प्रतन्यते। किंचायं स्थिरशब्दः 'वर्णदृढादिभ्यः ष्यञ् च' इति सूत्रेण प्रत्ययद्वयप्राप्त्यर्थं दृढादौ पठितः। तथाहि—गणरत्नमहोदधौ—

“दृढपरिवृढौ मूकश्चुको विशारदसंमती
बधिरमधुरौ बालो मूकं कको बहुपण्डितौ ।
लवणतरुणावुष्णः शीतस्थिराम्लकृशा वृढो
विमतिविमनोमन्दा मूर्खौ वियातभृशौ तथा ॥

विलातः स्यात् तथा शुक्रदीर्घसंमनसो यताः ।
ताम्रमाम्रं तथा तृष्णां प्राह श्रीशाकटायनः ॥”

इति । एतेन पृथ्वादिपाठे ‘स्थेमन्’ शब्द एक एव सिद्ध्येत् दृढादिपाठेन स्थेमा, स्थैर्यम्, इति रूपद्वयं सिद्धमिति अपरामृश्य-वादिनः पुरोभागिनः परस्ता इति वेदितव्यम् । अत एव निगमान्त-देशिकैस्तत्त्वटीकायाम्—

‘ईदृशानां प्रयोगाणामबहिष्कारसिद्धये ।
बहुधा बहुळादीनामष्टाध्याय्यामुपक्रमः ॥

नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे ।
शब्दासाधुत्वमाहुर्ये शाब्दिकांस्तान् न मन्महे ॥

विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः ।
अविगीतप्रयोगेषु विगानं नैव सांप्रतम् ॥” इत्युक्तम् ।

१२. संप्रति, ‘सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः’ इति भाष्येष्टिः सप्रपञ्चं विचार्यते । सा हि—‘दक्षिणोत्तराभ्यामतसुच्’



इति सूत्रे अतसुचः स्थाने तसुजेव विधीयतां लाघवादित्याशङ्क्य ‘लिङ्गविशिष्ट’ परिभाषया ‘दक्षिणा’ ‘उत्तर’ इति शब्दाभ्यामतसुचि भत्वाद् ‘यस्येति’ लोपे ‘दक्षिणतः’ ‘उत्तरतः’ इति इष्टं रूपं सिध्यति । तसुचि क्रियमाणे तु भत्वाभावात्—‘उत्तरातः’ इत्यनिष्टरूपापत्तिरित्युक्त्वा, ‘सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः । तेनैव पुंवद्भावाद्भत्वाभावेऽपि ‘दक्षिणतः’ ‘उत्तरतः’ इतीष्टं रूपं सिद्ध्यति, ततः तसुचि कृतेऽपि दोषो नास्ति’ ‘इत्युक्तम् । तस्याश्चेष्टेः प्रयोजनानि ‘सर्वस्या आगतः सर्वमयः । सर्विका भार्या यस्य सः सर्वकभार्यः । सर्वा प्रिया यस्य सः सर्वप्रियः । सर्वामात्मन इच्छति सर्वकाम्यति’ इत्यादीनि । कौमुद्यां दीक्षितः बहुव्रीहिप्रकरणे ‘ठक्छसोश्च’ ‘भवत्याश्छात्राः भावत्काः भवदीयाः’ इत्युक्त्वा, ‘एतद्वार्तिकम्, ‘एक तद्धिते च’ इति सूत्रं च न कर्तव्यम् । ‘सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः’ इति भाष्यकारेष्ट्या गतार्थत्वात्’ इति सिद्धान्तमाह ॥ एवं सर्वत्र सर्वनाम्नां पुंवद्भावाभ्युपगमे वक्ष्यमाणानां महाकविप्रयोगाणां का गतिः ! । तस्मान्महाकविप्रयोगान् अपरिज्ञाय भाष्येष्टेरभिप्राय—मज्ञात्वाऽतिरभसोक्तिर्दीक्षितस्येति सम्यङ् निरूपयामः । तथाहि—पिळ्ळैपाक्कं अस्मच्छब्दशास्त्रशिक्षकैः श्रीमद्–गोपालाचार्यस्वामिभिः श्रीमन्निगमान्तदेशिकादिप्रयोगसाधुत्वप्रदर्शनार्थं वादतरङ्गिणीति ग्रन्थः कृतः । तत्र विस्तरेण अस्या भाष्येष्टेराशयवर्णनपूर्वकं दीक्षिताभिप्रायं दूषयित्वा उक्तेषु प्रयोगेषु पुंवद्भावाभावसाधुत्वं

निगमयामासुः । तस्य ग्रन्थस्यातिविस्तृतत्वाद् द्रष्टॄणां शिरश्शूलं जायेत । ततः तस्य निगमनमार्गं सङ्ग्रहेण दर्शयामि ॥

'दक्षिणोत्तराभ्यामतसुच्' (५-३-२८) इति सूत्रे प्रसक्तानुप्रसक्त्या अस्याः इष्टेरुदाहृतत्वात् तत् सूत्रं अस्या इष्टेर्वक्तव्यस्थानं न भवति। किं वक्तव्यस्थानम्? इति परामर्शे पुंवद्भावविधायकत्वात् पुंवद्भावविधिप्रकरणे वक्तव्या । तथा च 'स्त्रियाः पुंवत्' इति प्रकरणे 'तसिलादिष्वा कृत्वसुचः' इति सूत्रानन्तरं अस्या इष्टेः स्थानम्। कुत इति चेत् - तसिलादीनां 'प्राग् दिशो विभक्तिः' इत्यधिकारे विहितत्वात्, तेषां च विभक्तिसंज्ञकत्वात्, तेषां च प्रायेण सर्वनामभ्यो विहितत्वात्, तत्रैव पुंवद्भावप्रवृत्तेः स्थानत्वात्। तथाच तत्र 'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' इत्यधिकारात् वक्ष्यमाणाः प्रत्ययाः सर्वनामभ्यो भवन्ति। 'अद्व्यादिभ्यः' इति पर्युदासात् किंशब्दस्याप्राप्तौ किंशब्दस्य ग्रहणम्। बहुशब्दस्य सर्वनामत्वाभावात् अप्राप्तौ ग्रहणम्। इत्थं च भवच्छब्दस्य द्व्यादिवत् अनया इष्ट्या पुंवद्भावप्रसक्तिरेव नास्ति। अत एव भवतीशब्दस्य पुंवद्भावार्थं 'ठक्छसोश्च' इति वार्त्तिकारम्भः। अत एव च अस्य वार्त्तिकस्य भाष्ये प्रत्याख्यानं न कृतम्। एवं च अनया इष्ट्या पुंवद्भावः त्रल् तसिल् दा था थम् थाल् हिंल् अतसुच् इत्यादिविभक्तिसंज्ञकप्रत्यययोग्यद्व्यादिभिन्नकिंसर्वनामभ्यो भाषितपुंस्केभ्यः वृत्तिमात्रे (वृत्तिसामान्ये) भवतीत्यर्थः। मात्रशब्दस्य



कार्त्स्न्यार्थकस्य प्रयोगात् यस्य क्वचित् सर्वनामता दृष्टा— तस्यापि पुंवत्त्वं भवतीति भाष्याभिप्रायः। ('सर्वनाम्नः' इत्यत्रोदाहृतः 'प्रथमद्वितीयकक्ष्ययोः' इति प्रयोगः इदानीन्तनमुद्रितभाष्यपुस्तके न दृश्यते।) अत एव 'णेरणौ —' इति सूत्रे 'प्रथमद्वितीयकक्ष्ययोः' इत्यत्र पुंवत्त्वं सिद्धम् - इति **शेखरकारः**। इत्थं च द्व्याद्यन्तर्गतस्य भवच्छब्दस्य पुंवद्भावाप्रसक्तेः 'ठक्छसोश्च' इति वार्त्तिकारम्भः, भाष्ये तदप्रत्याख्यानम् च उपपद्यते।

एतद्विषये महाकविप्रयोगान् प्रदर्शयामः। तथाहि— हंससन्देशे निगमान्तमहादेशिकस्य 'पश्चादेवं कथय भवतीभागधेयेन जीवन्' (श्लो. 2-31) इति। श्रीस्तुतौ तस्यैव— 'भवतीपादलाक्षारसाङ्कम्' (श्लो. 4 ) इति। **दयाशतके** (श्लो. 27 ) तस्यैव 'भवतीमाद्रियते भवत्यधीनैः' इति। **श्रीगुणरत्नकोशे भट्टः**— 'भवतीसम्बन्धदृष्ट्या' (श्लो. 51 ) इति। **वेणीसंहारे** (59 ) **भट्टनारायणः** 'एकोऽहं भवतीसुतक्षयकरः—' इत्यादयः। एवंच पूर्वोक्ताः शिष्टप्रयोगाः सर्वेऽपि संगताः, दीक्षितोक्तिरसङ्गता इति च सिद्धम्।

भवतीशब्दस्य पुंवद्भावविषये मार्गान्तरमप्युक्तम्, तत् सर्वं क्लिष्टमिति नेह प्रदर्श्यते।

किञ्च, मन्नार्कोविल् महामहोपाध्यायैः **राजुशास्त्रिभिः** 'भवतीपादलाक्षारसाङ्कम्' इत्यादिप्रयोगसाधुत्वसम्प्रत्ययार्थमुपायान्तर-

मुक्तम् - "दक्षिणापश्चात् पुरसस्त्यक्" इति सूत्रे 'दक्षिणा' इत्यनव्ययस्य टाबन्तस्य ग्रहणेऽपि भाष्येष्ट्या न पुंवद्भावः। इष्टैवैकल्पिकत्वात्। वैकल्पिकत्वं च 'ठक्छसोश्च' इति वार्त्तिकस्य अनया दृष्ट्या अप्रत्याख्यानात् ज्ञायते इति शेखरे तस्मिन् सूत्रे उक्तत्वात् इति ॥ इदं न सम्यक्। दक्षिणाशब्दस्य दिग्वाचकस्य भाषितपुंस्कत्वाभावात् नित्यस्त्रीलिङ्गत्वात् पुंवद्भावप्रसक्तिरेव नास्ति। व्यवस्थाशब्दस्यैव भाषितपुंस्कत्वं सर्वनामत्वं च। अत एव भाष्ये—'दक्षिणा पूर्वा इति दिक्छब्दौ। दक्षिणः पूर्वः इति व्यवस्थाशब्दौ' इति उक्तम्। अत एव श्रुतौ 'प्राच्यै दिशे स्वाहा। दक्षिणायै दिशे स्वाहा। दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम् अपरायाम्' इति च प्रयोगः। दिङ्नमस्कारे च 'प्राच्यै दिशे नमः, दक्षिणायै दिशे नमः' इति च। अतः दक्षिणाशब्दस्य नित्यस्त्रीलिङ्गस्य पुंवद्भावप्रसक्त्यभावात् मूलोक्तम् आजन्तत्वमपि माऽस्तु। 'ठक्छसोश्च' इति वार्त्तिकस्य सप्रयोजनत्वात् प्रत्याख्यानप्रसक्तिरपि नास्ति। अतः शेखरोक्तिरपि शिष्टप्रयोगापरामर्शविजृम्भितेति सर्वं समञ्जसम्। **यतिराजविजयनाटके घटिकाशतम् अम्माल् - प्रयोगः—**

'पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले' इति। स दीक्षिताभ्युपगतमतानुसारेण पुंवद्भावमकरोत्। तत्तु "लिङ्गसामान्ये नपुंसकम्" इत्युक्त्वा समर्थयितुं शक्यते ॥

## अनुबन्धः ८

## "भवतीभागधेयेन"

(श्रीकृष्णब्रह्मतन्त्रपरकालमहादेशिकविरचितायां हंससन्देशव्याख्यायां (2-31) रसास्वादिन्यां दृष्टो विचारः प्रकृतसङ्गतत्वात् प्रकाश्यते—सम्पादकः, चेट्लूर् - वा. श्रीवत्साङ्काचार्यः)

नन्वत्र 'भवतीभागधेयेन' इत्यत्र भवतीशब्दस्य सर्वनामतया समासवृत्तौ 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्ट्या पुंवत्त्वेन भवितव्यमिति चेन्न। तस्या अनित्यत्वात्। तथा हि—सा हि 'दक्षिणोत्तराभ्यामतसुच्' इति सूत्रे भाष्ये अतसुचः स्थाने तसुजेवोच्यताम्, लाघवात्—इत्याशङ्क्य समाधानावसरे "लिङ्गविशिष्ट" परिभाषया दक्षिणोत्तराशब्दाभ्यां स्त्रीलिङ्गाभ्यामतसुचि 'यचि भम्' (1-4-18) इति भसंज्ञायां 'यस्येति च' इत्याकारलोपे 'दक्षिणतः उत्तरतः' इत्यभीष्टरूपसिद्धिः। तसुचि क्रियमाणे तु भसंज्ञाभावप्रयुक्तावर्णलोपायोगात् 'दक्षिणातः उत्तरातः' इत्यनिष्टरूपं स्यात्। अतोऽतसुजेव यथासूत्रमस्तु—इत्यभिधाय, तसुचि क्रियमाणेऽपि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावादिष्टसिद्धिरिति भाषिता। तस्याश्च प्रयोजनानि 'सर्वमयः, सर्वकाम्यति, सर्वकभार्यः, सर्वप्रियः' इत्यादीनि। पूर्वस्यैवेदं 'भस्त्रैषाजाद्वा' इति लिङ्गात्। तेन अकचि एकशेषवृत्तौ च न सर्विका सर्वा इति। इयं

च इष्टिरनित्या, 'भवतष्ठक्छसौ' इति विहितठगादिविषये 'भवत्याः छात्राः भावत्काः, भवदीयाः' इत्यत्र पुंवद्भावाय 'तसिलादिष्वा कृत्वसुचः' (6-3-35) इति सूत्रे 'ठक्छसोश्च' इति वार्तिकारम्भात्, तस्य च अनया भाष्यकारैः अप्रत्याख्यानात्। इष्टेरेव नित्यताभिसन्धौ तु अवश्यमिदं प्रत्याख्यायेत। अत एव 'दक्षिणापश्चात्--' (4-2-98) सूत्रशेखरे 'आजन्तं' इति मूलप्रतीकमादाय, "अव्ययसाहचर्यात्, नतु टाबन्तो दक्षिणाशब्द इति भावः। अत एव 'दाक्षिणात्यः' इत्यत्र न पुंवत्त्वम्। केचित् तु 'ठक्छसोश्च' इति वार्तिकारम्भेण भाष्यकृता 'सर्वनाम्नः' इतीष्ट्या तदप्रत्याख्यानेन च इष्टेरनित्यत्वात् अनव्ययस्य ग्रहणेऽपि न दोषः। अत एव अनव्ययात् प्रत्ययान्तरेण रूपान्तरं न इत्याहुः" इति निरूपितं सङ्गच्छते॥ एतेन "एतद् वार्तिकं, 'एक तद्धिते च' इति सूत्रं च न कर्तव्यम्, 'सर्वनाम्नो वृत्तिमात्रे' इति भाष्यकारेष्ट्या गतार्थत्वात्" इति कौमुदीग्रन्थपरिशीलनेन 'भवतीपादलाक्षारसाङ्कम्' इत्याद्याचार्यपादप्रयोगेषु पुंवद्भावाभावाद-साधुतां मन्यमाना अनादरणीयाः॥

अन्ये तु 'भातेर्डवतुः' इति शाकटायनसूत्रव्युत्पादितो भवच्छब्दो न सर्वनामगणान्तर्गतः। न च तत्र गणे पठितस्य 'भवतु' इत्युगन्तप्रातिपदिकस्य त्यदाद्यन्तर्गतस्य विशेषाभावात् डवत्वन्तेनाभेद इति वाच्यम्। तादृशप्रबलतरप्रमाणानुपलम्भाद् विशेषसद्भावाच्च। सर्वनामसंज्ञकभवच्छब्दो हि सम्बोध्यचेतनैकान्तवृत्तिः' न सम्बोधनविभक्त्यर्हः। नहि तस्य 'हे भवन्' इति सम्बोधनं



क्वचित् केनचिद् दृष्टमिष्टं वा कस्यचित्। अत एव 'त्यदादीनां सम्बोधनं नास्तीत्युत्सर्गः' इति प्राचां प्रवादोऽपि सङ्गच्छते। ननु उत्सर्गत्वादेव क्वचिद् सम्बोधनसद्भावोऽवगम्यते, अत एव भाष्ये 'हे स!' इति तच्छब्दात् सम्बोधनप्रथमोदाहृतेति चेत्—सत्यम्। यद्यपि भाष्ये तच्छब्दात् सम्बोधनविभक्तिरुदाहृता; तथाऽपि सम्बोध्यार्थकभवच्छब्दाद् युष्मच्छब्दादिव सम्बोधननिषेध-स्योत्सर्गप्रवृत्तिर्न विहन्यते। डवत्वन्तभवच्छब्दस्तु भासमानार्थकः सम्बोधनविभक्त्यर्ह एव। अत एव 'परस्य पत्नी या स्त्री स्यात् असम्बन्धा च योनितः। तां ब्रूयाद् भवतीत्येवं सुभगे भगिनीति च', 'कृतदारोऽस्मि भवति! भार्येयं दयिता मम', 'भवति भवत्सुहृज्जनः स कामः', 'भवति मा विषीद, सर्वं भद्रं भविष्यति', 'भवति भिक्षां देहि' इत्यादि-मनु-वाल्मीकि-माघ-मुरारिमिश्रादि-सम्बुद्ध्यन्तभवतीशब्दप्रयोगाः प्रामाणिकाः सङ्गच्छन्ते। अत एव 'भवति' इत्यस्य 'सुभगे' इति व्याचख्युः मल्लिनाथादयः। किञ्च, भगवच्छब्दवत् डवत्वन्तो भवच्छब्दः पूज्यवाचकोऽपि दृश्यते; 'अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्। भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित्॥' इति मनुना भोभवदन्यतरशब्देन पूज्यतमदीक्षिताभिभाषणस्य स्मरणात्। अत एव हि श्रुत्यादौ पूज्यताभिधायिभगवच्छब्दस्थाने भोशब्दप्रयोगश्च संगच्छते। तथाहि-'अधीहि भगव इति ह उपससाद,' 'अधीहि भो इत्युपसीदेत्', 'अधीहि भो आमन्त्रयेत गुरुम्' इत्यादिसौत्रप्रयोगात् तयोः

पर्यायत्वमवसीयते । भोश्शब्दश्च भवच्छब्दसमानार्थक एव, "विभाषा भवद्भगवदघवताम् ओत् च अवस्य" इति वार्त्तिकेन तस्य भवच्छब्दनिष्पन्नत्वात् । अस्मिन् एव काव्ये आचार्यैः 'भवता-माधिराज्याभिषेकात्' इति भवच्छब्दः पूज्यार्थकतया प्रयुक्तोऽग्रे (श्लो. 2 44)। तस्मात् 'स भवान्, तत्रभवान्, ततो भवान्' इत्यादिप्रसिद्धार्थकतच्छब्दसमभिव्याहृतभवच्छब्दवत् केवलभव-च्छब्दोऽपि पूज्यवाचकोऽस्त्येवेति बोध्यम् । एवं च तादृश-भवच्छब्दप्रकृतिकस्य ङ्यन्तस्य सर्वनामत्वाभावेन पुंवद्भावप्रसङ्ग एव नास्तीत्यपि वक्तुं शक्यम् — इत्याहुः ॥

'देवः प्रमाणम्' 'यदाज्ञापयन्त्यार्यमिश्राः' 'यदभिरुचितं तातान' 'भगवन्तावग्रे वदताम्' 'भगवांस्त्वेव मे तद् ब्रवीतु' इत्यादाविव गौरवातिशयद्योतनाय समक्षमेवानामन्त्रणनिर्देश इति द्रष्टव्यम्। एतेनैव 'भवतीशेखरितं' (पादुकासहस्रे 69) 'भवत्यधीनैः' (दयाशतके 27) एकोऽहं भवतीसुतक्षयकरः (वेणीसंहारे 5-9) 'भवतीकचमण्डलेन' 'भवतीस्मितचन्द्रिका रमे' (लक्ष्मीसहस्रे) इत्यादयोऽपि व्याख्याताः। 'पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुण्डले नीले मुह्यति' (यतिराजविजये 1-1) 'भवद्दिव्या-पाङ्गलवस्य वर्णनविधौ' इत्यादिपुंवद्भावघटिताः प्रयोगाः अपि उदाहृतभाष्यकारेष्टेरनित्यतयैव सिद्ध्यन्ति, इति अन्यत्र विस्तरः ॥



## ஸ்ரீபாஷ்யகாரரின் விசேஷாநுக்ரஹம்

அந்த ஸம்வத்ஸரம் மார்கழி மாஸத்தில் இராப்பத்து உத்ஸவம் சாற்றுமுறை யானதும், ஸ்வப்நத்தில் ஸ்ரீபாஷ்ய காரர் ஸந்யாஸாச்ரமத்துடன் அஹோபில மடத்தில் எழுந்தருளி யிருந்ததாகவும், தாம் அந்த ஸ்வாமியை ஸேவிக்கப் போனபோது தம்மைப் பார்த்து "स्थिरपरि-व्राड् भव" (நல்ல ஸந்ந்யாஸி யாவீர்) என்று அனுக்ர ஹித்ததாகவும் கண்டு ஸந்தோஷத்துடன் எழுந் தருளியிருந்தார். அநந்தரம் தை மாஸத்தில் தேவப் பெருமாள் ஸந்நிதிக்கு எழுந்தருளி, அவ்விடத்தில் ஸ்வீக்ருத குமாரனுக்கு உபநயநம் செய்து, அவ்விடத் திலேயே பங்குனி உத்தர உத்ஸவம் வரை எழுந்தருளி யிருந்து, தமக்கு அந்தரங்கர்களான சில ஸ்வாமிகளை அடுத்த ஆடி மாஸத்தில் தாம் ஆச்ரம ஸ்வீகாரம் பண்ணிக்கொள்ளப் போவதாயும் அதற்கு வேண்டிய ஸாதநங்களைச் சேர்த்து வைத்துக் கொண்டும், டெங் கிணிக் கோட்டை (தேன் கனிக்கோட்டை ஸ்ரீநாராயண ஸ்வாமி) ஸ்ரீவரதராமானுஜ மஹாதேசிகன் என்கிற ஸ்வாமியை எழுந்தருளப் பண்ணிக்கொண்டு திருவெவ் வுளூருக்கு வரும்படியும் நியமித்துவிட்டு, சைத்ரோத்ஸவத் திற்காக ஸ்ரீபெரும்பூதூர் எழுந்தருளினர்.

பூர்வாச்ரம வைபவம் முற்றிற்று.

सोऽयं रामानुजार्यः शठरिपुफणितेरन्त्यपङ्क्तेरधीतौ
स्वप्ने श्रीवण्शठारेर्महितमठगतः श्रीमहाभूतपुर्याम् ।
स्वाख्यप्रव्राजकात्मा तमिममुपगतं दासमुद्वीक्ष्य 'सोऽयं
सद्यो भावी परिव्राट् स्थिर' इति वचसा सादरं ह्यन्वगृह्णात् ॥

## ஸந்யாஸாஸ்ரம வைபவம்

## ஆஸ்ரம ஸ்வீகார ப்ரகாரம்

ஹேவிளம்பிஹு சித்திரை மாஸத்தில் ஸ்ரீ ஆதிகேசவப் பெருமாள் உத்ஸவத்தையும் ஸ்ரீபாஷ்யகாரோத்ஸவத்தையும் ஸேவித்துக் கொண்டு, ஆனி மாஸத்தில் ஸந்ந்யாஸத்துக்காக திருவெவ்வுளுருக்கு ஸ்வாமி எழுந்தருளப் போவதாகக் கேள்விப்பட்டு, ஸ்வாமியிடத்தில் விசேஷ ப்ரதிபத்தியுள்ள சேஷ பட்டாசார்யர் என்கிற வைகாநஸார்ச்சக ஸ்வாமி ஒருவர், ஸ்ரீபாஷ்யகார மங்களாசாஸநத்திற்கு ஸ்வாமி எழுந்தருளின காலத்தில் ஸ்ரீ பாஷ்யகாரருடைய காஷாயத்தைக் கொடுத்து ஸந்ந்யாஸம் நடக்கட்டுமென்று ஸாதிக்கவே, ஸ்வாமியும் 'இதுவுமொரு பாக்ய விசேஷம்' என்று அந்தக் காஷாயத்தை வாங்கிக்கொண்டு திருவெவ்வுளுருக்கு எழுந்தருளினார். அங்கெழுந்தருளிப் பத்துநாள் சென்றதும், ஹேவிளம்பி ஹு ஆடி மீ பூர்ணிமை புதன்கிழமை உத்தராஷாடா நக்ஷத்ரம் கூடிய தினத்தில் தமக்கு ஆசார்யனான ஸ்ரீ அத்திப்பட்டு மஹா தேசிகன் ப்ருந்தாவநத்திற்கு ஸமீபத்தில் உள்ள கண்ணன் ஸந்நிதியில் பூர்வ தினத்தில் ஜீவ ஸ்ராத்தாதிகளை நடத்தி, ராத்ரி அக்நி ஸமீபத்தில் மாத்ராஸாதநம் செய்து ஜாகர வ்ரதம் அநுஷ்டித்து மறுநாள் உதயத்தில் நித்ய கர்மாநுஷ்டாநம் முடிந்ததும் மூன்று ஸ்தலங்களில் ப்ரேஷ மந்த்ரோச்சாரணம் பண்ணும்போது ஸ்ரீராகவனுக்குத் திருமஞ்ஜந தீர்த்தம் எழுந்தருளப் பண்ணிக் கொண்டு போகும்



நிமித்தம் திருச்சிந்நம் பரிமாறவே, அதைக் கேட்டுக் கொண்டிருந்த ஸ்வாமிகள், ஸ்ரீ ராகவனும் ஸாக்ஷாத்தாகவே அநுமதி பண்ணியதாகவே எண்ணி ஸ்வாமியின் பாக்ய விசேஷத்தைக் கொண்டாடினார்கள். இந்த வ்ருத்தாந்தத்தையும் ஸ்ரீ ஸ்வாமியே பட்டாபிஷேக ஸ்ரீமுகத்தில் "इत्थं सम्प्रार्थितस्त्वम्" என்கிற ச்லோகத்தில் அருளிச் செய்துள்ளார். அனந்தரம் ஸர்வதாநம் பண்ணி மாத்ரா க்ரஹணம் பண்ணிக் கொண்டு, முன்னமே எழுந்தருளி யிருக்கிற ஸ்ரீ டெங்கிணிக் கோட்டை ஸ்வாமியின் முகமாக ஸ்ரீவீரராகவ சடகோபன் என்ற நாமகரணம் பண்ணப் பட்டவராய், அன்றே சாதுர்மாஸ்ய ஸங்கல்ப தினமாகையால் க்ஷௌரமும் ம்ருத்ஸங்க்ரஹணமும் செய்துக் கொண்டு, ஸ்ரீ ஸ்வாமிக்காக ஹ்ருத்தாப நாசினியின் (திருவெவ்வுளூர் புஷ்கரிணியின்) தென்மேற்கு மூலையில் கட்டப்பட்டிருந்த குடீரத்தில் எழுந்தருளியிருந்து, ஸ்ரீமத் ரஹஸ்யத்ரயஸாரம் முதலிய க்ரந்தங்களை ஆச்ரிதர்களுக்கு அநுக்ரஹித்துக் கொண்டு த்ரிஷவண ஸ்நாநம், பிக்ஷாடநம் முதலான பரமஹம்ஸ லக்ஷணத்துடன் எழுந்தருளியிருந்தார்.

---

इत्थं सम्प्रार्थितस्त्वं श्रितजनसुलभः किङ्गृहेश प्रभो मां
प्रव्रज्यामन्त्रघोषं नियमयितुमनाः स्वीयचिह्नारवेण ।
अभ्याशस्थः श्रुतेन प्रकृतमनुवचोऽर्थानुसन्धानविज्ञात्
भीत्या त्वय्यर्पितेन प्रमुदितहृदयं प्रेरयन् अन्वगृह्णाः ॥

## ச்ருதி கீதா வ்யாக்யாநமும் அர்களபஞ்சகமும் அருளிச்செய்தது

அப்போது அவ்வூர் ஜில்லா முன்சிப்பாக இருந்த ஒரு ஸ்மார்த்த அத்வைதி வித்வான் ஸ்ரீ ஸ்வாமியைத் தண்டன் ஸமர்ப்பிக்க வேண்டுமென்று வக்கீல்களின் மூலம் அநேகாவ்ருத்தி ப்ரார்த்திக்கச் செய்தேயும் ஸ்ரீ ஸ்வாமி திருவுள்ளம் இசையாதிருக்கக் கண்டு, ஒரு ஸமயம் ஸ்ரீ தட்டை ரங்காசார்யர் அவ்விடம் வந்தபோது அவர்முகமாகவும் நிர்பந்திக்கவே, ஒருநாள் ஸாயங் காலத்திய நீராட்டத்திற்கு முன்பு அவரை வரச்சொல்லி நியமனமாக, அவரும் உபஹார ஹஸ்தராய் வந்து தண்டன் ஸமர்பித்து நிற்க, ஸ்ரீஸ்வாமி அவரை உட்காரும்படி நியமித்து விசாரிக்கும்போது, அவரும் ஸ்ரீபாகவதத்தில் ச்ருதி கீதையில்—

"ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे?॥"

என்கிற ப்ரச்ந ஸ்லோகத்திற்கும் அதற்கு ஸமாதாந ஸ்லோகமாகிய,

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः।
आत्मार्थं च भवार्थं च आत्मने कल्पनाय च॥"

என்பதற்கும் அர்த்தத்தை அருளிச் செய்யவேண்டும் என்று ப்ரார்த்திக்க, அப்போது ஸ்ரீஸ்வாமி ஸாதித்த அர்த்தங்கள் அவர் மநஸ்ஸில் பதியாததால், அதற்காக 'ச்ருதி கீதா வ்யாக்யாநம்' என்று க்ரந்தம் அருளிச்



செய்து அவருக்கு அனுப்பவே, அவரும் அதைப் பார்த்து ஸந்தோஷமடைந்தார். இந்த க்ரந்தமும் தெலுங்கு அக்ஷரங்களில் அச்சிடப்பட்டிருக்கிறது. இப்படியிருக்குங் காலத்தில் ஸ்ரீஸ்வாமியின் பெருமையில் அஸூயாயுக்தர்களான சிலர், பெருமாள் மங்களாசாஸநத்துக்கு ஸ்வாமி ராகவன் ஸந்நிதிக்கு எழுந்தருளும் காலத்தில் பெருமாளுக்கு எதிரில் உழல் தடியைப் போட்டுவைத்தார்கள். இப்படிச் செய்யும் தாமஸ ப்ரக்ருதியிடத்திலும் கரைபுரண்ட கருணையுடன் ஸ்ரீஸ்வாமி அவர்களுக்கும் நல்ல புத்தி ப்ரதாநம் பண்ணும்படி பெருமாளைப் ப்ரார்த்தித்துக் கொண்டு 'அர்களபஞ்சகம்' 'अर्गलपञ्चकम्' என்கிற ஐந்து ஸ்லோகங்களை ஸாதித்து, அதைக் கொண்டே மங்களாசாஸநம் பண்ணிக்கொண்டு எழுந்தருளியிருந்தார். இந்த ஸமயத்தில் தான் சிரகால அநுவர்த்தநம் பண்ணித் தமக்கு உபாயாநுஷ்டாநத்தைப் ப்ரார்த்தித்துக் கொண்டிருந்த நெடுந்தெரு, நரஸிம்ஹய்யங்கார் வந்து தமக்கு ஸ்ரீ வீரராகவன் திருவடிகளில் உக்திநிஷ்டா ரூபமான பரஸமர்ப்பணம் ஆகவேண்டுமென்று ப்ரார்த்திக்க, ஸ்வாமியும் 'நீர் இங்கேயிருந்து சில்லரை ரஹஸ்யங்களை ஸேவித்து ப்ரபத்தி வாக்யோச்சாரணார்த்த பாடவத்தை ஸம்பாதித்துக் கொள்ளும், இல்லையேல் ஆசார்ய நிஷ்டையாகவே நடக்கும்' என்று ஸாதிக்கவே, அவரும் கால விளம்பாஸஹிஷ்ணுவாய்த் திருவுள்ளப்படி ஆசார்ய நிஷ்டையாகவே ஆகட்டுமென்று ப்ரார்த்திக்க, ஆவணி மாஸத்தில் பவித்ரோத்ஸவத்தில் யாகசாலையில் ஸ்ரீராகவன் எழுந்தருளியிருந்த காலத்தில்

அப்படியே அவருக்கு ஶரணாகதி நடந்தது. பின் அதே மாஸத்தில் ஸ்வாமியிடம் அஸூயையுள்ள தாமஸ ப்ரக்ருதியான ஒருவர், சில சோரர்களைக் கொண்டு இரவில் ஆஸ்ரமத்தில் புகச் செய்து ஸ்வாமியின் ஆராத்யமான ஸாளக்ராமமூர்த்திகளையும், மற்றும் பழம், கற்கண்டு முதலிய பொருள்களையும் அபஹரிக்கச் செய்ய, ஸ்வாமி அதையும் பொருட்படுத்தாமல் அந்த ஸமயத்தில் சில பரமைகாந்திகளால் ஸமர்ப்பிக்கப்பட்ட வேறு ஸாளக்ராமங்களைக் கொண்டு ஆராதநத்தை நடத்திக் கொண்டு யாதொரு மநோவிகாரமுமில்லாமல்

"वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥"

என்றபடி 'उत्पपात' என்பதை அநுஷ்டக்கத் திருவுள்ளமிருந்த போதிலும் உத்தாந கால ப்ரதீக்ஷராய் எழுந்தருளியிருந்து, அக்காலம் வந்தவாறே பெருமாள் கோவிலை உத்தேசித்து எழுந்தருளினார். அப்போது மார்க்கத்தில் நீர்வளூர் முதலிய அக்ரஹாரங்களில் தங்கி, கார்த்திகை மாஸம் ஹஸ்த நக்ஷத்ரத்தில் பெருமாள் கோவில் எழுந்தருளி,

"योऽसौ मेधाश्रुताद्यैर्दुरधिगमतयाऽऽम्नायि शास्त्रैकयोनिः
यश्चासूत्रि त्रयीयं परनिरसनतो 'नेति नेत्या' ह चैनम् ।
येदोलब्धाश्वमेधः करिगिरिशिखरे वीक्ष्य हृष्टो यदक्षे
सञ्जातं देवराजं वरदमिममहं तत्र हस्ते समीक्षे ॥"

---

'उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः' (रामायणे युद्धकाण्डे 17-)



என்று தேவப் பெருமாளை மங்களாசாஸநம் செய்து ஸ்வாமிக்காகவே ஆனைகட்டித் தெருவுக்குப் பின் தெருவில் ஒரு மனையில் கட்டப்பட்ட ஆஸ்ரமத்தில் எழுந்தருளியிருந்தார்.

## ஶாரீரக ஸுப்ரபாதமும், வேதாந்த கௌஸ்துப ஸாரமும் அருளியது

அந்தக் காலத்தில் சில ஸ்வாமிகள் ஸ்வாமி ஸந்நிதியில் ஸ்ரீரஹஸ்யத்ரயஸாரம் முதலான க்ரந்தங்களை ஸேவித்து ஸ்வாமி திருவடிகளில் ஆச்ரயித்தார்கள். அடுத்த மார்கழி மாஸத்தில் ஸுப்ரபாதாநுஸந்தாநார்த்தமாக ஶாரீரகாதிகரண விஷய வாக்யமாகிற பர்யங்கத்தில் சயனித்துக் கொண்டிருக்கிற தேவப் பெருமாளை எழுப்புவதாக இருக்கும்படி ஒரு ஸுப்ரபாத ஸ்தோத்ரத்தை 'ஶாரீரக ஸுப்ரபாதம்' என்று பெயரிட்டு அடியேனுடைய பிரார்த்தனையின் பேரில் அருளிச் செய்து ப்ரதிதினமும் திருப்பள்ளியெழுச்சி திருவாராதநத்தில் இந்த ஸுப்ரபாதத்தையும் ஸேவித்துக்கொண்டு, அந்தத்தில் சாற்றுமுறை காலத்தில் திருப்பாவை திருநாள் பாட்டு ஸேவித்தான பின்பு இதில் ஒரு ஸ்லோகமும் அநுஸந்தித்தருளினார். இப்படி அநுஸந்தாநம் நடக்குங் காலத்தில் கோதா ஸ்துதியில் முப்பதாவது ஸ்லோகம் அருளிச் செய்யப்படாமலிருந்ததால், அதற்காக

भक्तिप्रकर्षपरिणाममयाङ्गि गोदे !
युक्ता हि कृष्णविभवानुभवाय गाथाः ।
त्रिंशत् कृतार्थयितुमाप्तजनं त्वयोक्ताः
गोपीष्विव त्वयि ततः स तथा व्यमुह्यत् ॥

என்கிற ஸ்லோகத்தை அருளிச் செய்து இதை இருபத்தெட்டாவது ஸ்லோகமாக அநுஸந்தித்து, அதன் பின் "शतमखमणिनीला" "इति विकसितभक्तेः" என்கிற ஸ்லோகங்களை அநுஸந்தித்தருளினார். அநந்தரம் வேதாந்த கௌஸ்துபம் என்ற சைவ கண்டனமான வைஷ்ணவ க்ரந்தத்தைக் கடாக்ஷிக்கும்போது வேதாந்த கௌஸ்துப ஸாரம் என்று ஒரு க்ரந்தத்தை முந்நூறு ஸ்ரக்தரா வ்ருத்தங்களால் அருளிச் செய்தார். இந்த க்ரந்தத்தின் மஹிமையை இதைக் கடாக்ஷிக்கும் மஹா வித்வான்கள் தான் அறிய முடியும்.

### ஸ்ரீதேசிகன் விக்ரஹ ப்ரதிஷ்டை

இப்படியிருக்கும்போது பெருமாள் கோவில் ஸ்ரீ தூப்புல் ஸந்நிதிக்கு எதிரில் ஸ்ரீ. உப ஐயா. ரகுநாதாசார்யர் என்கிற ஸ்வாமி ஒரு மனையை வாங்கிச் சிறியதாக ஒரு கர்ப்பக்ருஹம் கட்டி, அதில் வேறொரு தேசிக திவ்ய மங்கள விக்ரஹத்தை ப்ரதிஷ்டை பண்ணவேணு மென்ற ஆஸ்தையுடன் வெள்ளியில் ஒரு கண்டையை (மணியை) எழுந்தருளப் பண்ணி, அதைத் திருவேங்கடமுடையான் ஸந்நிதியில் திரு ப்ரதிஷ்டை செய்வித்து, அங்கேயே ஒரு மாஸம் ஆராதிக்கும்படி செய்து, அதை எழுந்தருளப் பண்ணிக் கொண்டு வந்து, அத்துடன் இன்னும் சில ப்ரக்ருதி த்ரவ்யங்களையும் சேர்த்து, ஸ்ரீ தேசிகன் திவ்ய மங்கள விக்ரஹத்தை எழுந்தருளப்பண்ணி, 'அதை எங்கு ப்ரதிஷ்டை செய்யலாம்?' என்று ஆலோசித்துக் கொண்டிருக்கையில், கும்ப ஸங்க்ராந்தி திந ராத்ரியில் நம் ஸ்வாமிக்கு ஸ்வப்நத்தில்



"भाद्रो मासोऽद्य वेदान्तगुरुरुदियात्"

[இது புரட்டாசி மாஸம்; ஸ்ரீ வேதாந்த தேசிகன் அவதரிக்கப் போகிறார்] என்று ஒரு உரத்த குரல் கேட்டதாகக் கண்டு ஸ்வாமியும் தூக்கம் விழித்தெழுந்து இதென்னவென்று திகைத்து நிற்கும்போது மறுதினம் உதய காலத்தில் அந்த ரகுநாதாசாயர்ரே வந்து,'திருவெவ்வுளுருக்கு ஸ்வாமி எழுந்தருளி ஸ்ரீ தேசிகன் ப்ரதிஷ்டையை நடப்பித்து ஸ்ரீ ராகவன் மங்களாசாஸநத்தையும் செய்துவைத்து, அந்தக் திவ்ய மங்கள விக்ரஹத்தை அடியேனுக்கு எழுந்தருளப் பண்ணிக் கொடுக்க வேண்டும்' என்று ப்ரார்த்திதார். ஸ்ரீ ஸ்வாமியும் ராத்ரி நேர்ந்த ஸ்வப்நத்தை அநுஸரித்து இந்த பாகவத நியமநம் இருப்பதைக் கண்டு வியப்படைந்து, உடனே திருவெவ்வுளுருக்கு எழுந்தருளி, மாசி மாஸம் ஜ்யேஷ்டா நக்ஷத்ரத்தில், அந்த விக்ரஹத்தை ஸ்ரீ ராகவன் ஸந்நிதி ஆராதகர்களான பட்டாசார்யர்களைக் கொண்டு பாஞ்சராத்ர முறைப்படி திருப்ரதிஷ்டை செய்வித்து, ரணபுங்கவ ஸ்தோத்ரம் முதலானவைகளால் ஸ்ரீ ராகவனை மங்களாசாஸநமும் பண்ணி, ஸ்ரீ ஆதிவண் சடகோப யதீந்த்ர மஹாதேசிகன் ஸந்நிதியில் நித்யாராதநம் பண்ணும்படியாயும், ஸ்ரீ ராகவன் புறப்பாட்டுக் காலங்களில் ஸ்ரீ தேசிகனுக்கு ஸ்ரீ சடாரி ஸாதித்த பின்பு ஸ்ரீ ஆதிவண் சடகோப யதீந்த்ர மஹாதேசிகனுக்கு ஸ்ரீ சடாரி ஸாதிக்கும் படியும் நியமித்து விட்டு, அங்கு கொஞ்ச காலம் எழுந்தருளியிருந்தார்.

## ஸ்வாமி செய்தருளிய ப்ரதிஷ்டையின் மஹிமை

அந்த தேசிகன்தான், அந்த ப்ரதிஷ்டையின் பலத்தாலும், ஸ்ரீ ராகவனுடைய மங்களாசாஸந பலத்தாலும், இப்போது திருவல்லிக்கேணியில் ஸ்ரீ அஹோபில மடத்தில் ஸமஸ்த விபவங்களுடன் புரட்டாசி மாஸத்தில் திருவவதார மஹோத்ஸவத்தில் உபய கோஷ்டிகளுடன் பத்து நாட்களும் இரண்டு வேளையும் திருவீதிகளை அலங்கரித்து, விசேஷ தளிகைகளும் கண்டருளி பத்தாம் நாளில் வெகு அழகாகப் புறப்பாடும் சாற்று முறையும் கண்டருளுகிறார். அன்றைய தினம் ஆயிரக்கணக்கான பாகவதர்களுக்குத் ததீயாராதநமும் கோஷ்டிகளுக்கு விசேஷ ஸம்பாவனையும் நடைபெறுகின்றன. இவ்வளவுக்குங் காரணம் பிம்பங்களுக்கு

"अधिवासादिकं कर्म यथावत् कर्तुमक्षमः ।
महाभागवतस्पर्शमेकं वा कारयेत् सुधीः ॥"

என்கிற வசனத்திற்குப் பொருளான "திருப்ரதிஷ்டையில் மஹா பாகவத கர ஸ்பர்ஶம் போலவும்" என்று அந்த மஹா தேசிகனாலேயே கொண்டாடப்பட்ட இந்த நம் ஸ்வாமியின் பரிசுத்தமான ஸ்பர்ஶமே என்பது ஸர்வ ஸம்மதம்.

## திருவேங்கடமுடையான் மங்களாசாஸநம்

அங்கிருந்து ஸ்ரீ பெருப்புதூர் பாஷ்யகாரரையும், பூவிருந்தவல்லியில் திருக்கச்சி நம்பிகளையும், திருநின்றவூரில் ஸ்ரீ பத்தராவியையும், திருமழிசையில் பக்திஸாரனை



யும் மங்களாசாஸநம் செய்துக்கொண்டு, மறுபடியும் ஸ்ரீ தேவப் பெருமாள் ஸந்நிதிக்கு எழுந்தருளி அவ்விடத்தில் ஸங்கல்பத்தை நடத்திக் கொண்டு உத்தாந காலத்தில் திருவெவ்வுளூர் எழுந்தருளி, பின் நாகலாபுரம் மார்கமாய் நாராயணபுரம், திருச்சானூர், கீழைத் திருப்பதி முதலிய இடங்களில் மங்களாசாஸனம் செய்துக்கொண்டு திருமலை எழுந்தருளித் திருவேங்கடமுடையானை ஸேவித்து விட்டுத் திருச்சானூரில் ஆஸ்ரமத்திற்கு ஸமீபத்திலிருக்கும் பெருமாள் ஸந்நிதியில் கொஞ்ச காலம் எழுந்தருளியிருந்து, அடிக்கடி திருமலைக்கு எழுந்தருளித் திருவேங்கடமுடையானைத் திருவடி தொழுதுவிட்டு, அதே திநத்தில் ராத்ரி திருச்சானூருக்கு எழுந்தருளிக் கொண்டிருந்தார். அந்த ஸமயம் மார்கழி மாஸம் சுக்ல பக்ஷ ஏகாதசியில் திருமலையில் திருவேங்கடமுடையான் வஜ்ராங்கி ஸமர்ப்பித்துக் கொள்ளும் வழக்கமாகையால், அப்போதும் திருமலைக்கு எழுந்தருளித் திருவேங்கடமுடையானை அநுபவித்து, மறுதினம் த்வாதசியில் ஸ்ரீ ஸ்வாமி புஷ்கரிணியில் நீராட்டம் செய்து நித்யகர்மாநுஷ்டாநங்களைப் பாரணாந்தமாக முடித்துக்கொண்டு திருவெவ்வுளூருக்கு எழுந்தருளுவதாக நியமநம் பெற்று, ஸ்ரீ ஆண்டாளுடைய போகி திருக்கல்யாணத்திற்குத் திருவெவ்வுளூருக்கு எழுந்தருளினார்.

## ஸ்ரீ ந்ருஸிம்ஹாஸ்தாந நிர்வாஹம்

அப்போது ஸ்ரீ அஹோபில மடத்தில் 36-பட்டத்தில் ஆஸ்தாந நிர்வாஹம் செய்துக்கொண்டிருந்த அழகிய சிங்கர் திருநாட்டுக் கெழுந்தருளவே, ஸ்ரீ லக்ஷ்மீ

ந்ருஸிம்ஹனும், விளம்பி ஸ்ரீ தைமீ 10௳ சுக்ல ஏகாதசி ஞாயிற்றுக்கிழமை ரோஹிணி நக்ஷத்ரம் கூடிய சுப திநத்தில் ஸ்வாஸ்ரிதர்கள் எல்லோரையும் ஒரு பெரும் பரிஷத்தாகப் பெரும்பாக்கம் அக்ரஹாரத்தில் சேர்த்துத் தாமும் அவர்களிடம் அநுப்ரவேசித்து, அவர்கள் அனைவரையும் ஏகமுகமாக்கி, நம் ஸ்ரீ ஸ்வாமியைத் தம்முடைய ஆராதநத்தை ஏற்றுக் கொண்டு ஆஸ்தாந நிர்வாஹம் செய்து வரும்படி நியமித்தருளினன். இப்படி ஸ்ரீ லக்ஷ்மி ந்ருஸிம்ஹன் பரிஷன்முகமாக நியமித்திருப்பதை ஸ்ரீ ஸ்வாமி ஸந்நிதியில் விஜ்ஞாபநம் செய்து ஸ்ரீ ஸ்வாமியைப் பெரும்பாக்கத்திற்கு எழுந்தருளப் பண்ண வேண்டியதற்காகத் திருக்குடந்தை பெரிய தெரு ஸ்ரீ சக்ரவர்த்தி ஸ்வாமி (38 வது பட்டம் ஸ்ரீ அழகிய சிங்கரின் பூர்வாச்ரமத் திருநாமம்) ஸ்ரீ. உ. ப. தட்டை ரங்காசார்யர், பருத்திப்பட்டு, வங்கீபுரம் ஸ்ரீ வேங்கடாசார்யர் முதலான பெரியோர்கள் திருவெவ்வுளுருக்கு வந்து ஸ்ரீ ஸ்வாமி ஸந்நிதியில் விஜ்ஞாபநம் செய்து. ஸ்ரீ ஸ்வாமியை அப்போதே ஸ்ரீராகவன் மங்களாசாஸனத்திற்கு ஸந்நிதி பிருதங்களுடன் எழுந்தருளும்படி ப்ரார்த்திக்கும்போது. இவ்வளவும் ஆதிமுதல் ஸ்ரீ ஆதிவண் சடகோப யதீந்த்ர மஹாதேசிகனுடைய ப்ரயத்ந பலமாக ஸ்ரீ ஸ்வாமிக்குத் திருவுள்ளமாகையால், அந்த மஹா தேசிகனை முன்னிட்டுக் கொண்டே தாம் மங்களாஸாஸநத்திற்கு எழுந்தருளுவதாக நியமித்து, அந்த மஹா தேசிகனுக்குத் திருப்பல்லக்கில் சாத்துப்படி ஸமர்ப்பித்துக் கண்ணன் ஸந்நிதியிலிருந்தே எழுந்தருளி, சத்ர சாமராதி ஸகல மர்யாதைகளும் அந்த மஹா தேசிகனுக்கே நடக்கும்படி செய்து, மங்களாஸாஸநத்தை



முடித்துக்கொண்டு. மறுதினமே புறப்பட்டுப் பெரும்பாக்கத்துக்குப் பரிமித சிஷ்யர்களுடன் எழுந்தருளினர். ஐந்தாறு நாட்களுக்குள்ளாகவே அதிவேகமாக ஸ்ரீ லக்ஷ்மீ ந்ருஸிம்ஹன் எழுந்தருளியிருக்கிற பெரும்பாக்கம் க்ராமத்திற்கு எழுந்தருளி, அந்த க்ராமத்திற்குத் 'தக்ஷிண ஹோபிலம்' என்று திருநாமத்தைச் சாற்றி, ஸ்ரீ லக்ஷ்மீ ந்ருஸிம்ஹன் ஸந்நிதியையும் கிட்டி, சாரீரக ஸூப்ர பாதாதிகளைக் கொண்டு மங்களாசாஸநம் செய்து, அபிகமநாராதநத்தைத் தொடங்கி, திருப்பாவை முதலான ஸ்ரீ ஸூக்திகளையும் ஸேவிக்கும்படி செய்து, ஆராதநத்தை முடித்துக் கொண்டு ஹம்ஸ முத்ரையையும் பெற்று ஆஸ்தாந நிர்வாஹத்தை அங்கீகரித்தருளினர்.

## திருவெவ்வுளூர் மங்களாசாஸனம்.

இப்படி இரண்டு மூன்று தினங்கள் ஆராதநம் செய்தருளியபின், திருவெவ்வுளூர் ஸ்ரீ வீரராகவனுடைய தை மாஸத்திய உத்ஸவத்தை ஸேவிக்கத் திருவுள்ளங் கொண்டு, ஸ்ரீ ந்ருஸிம்ஹனைச் சிறியதொரு பல்லக்கில் பக்ஷிகள் (ஸ்வாமிகள்) மூலம் எழுந்தருளப் பண்ணிக் கொண்டு பரிவாரங்களுடன் ஸ்ரீ ந்ருஸிம்ஹன் பின் அநுயாத்ரையாக எழுந்தருளும் போது. சிஷ்யர்கள் பலர் ஒன்றுகூடிப் பல்லக்கில் எழுந்தருள வேண்டுமென்று ப்ரார்த்திக்க— அதைத் திருவுள்ளம் பற்றாமல் அநுயாத்ரையாகவே எழுந்தருளி அங்கங்கு ஸ்ரீந்ருஸிம்ஹனுக்கு விசேஷாராதநத்துடன் ஸ்ரீ மதுராந்தகம் எழுந்தருளி, அங்கே ஸ்ரீ கோதண்டராமனையும் ஸ்ரீ ஜநகவல்லித்

தாயாரையும் ஸ்ரீ உடையவரையும் திருவடி தொழுது ஸகல மர்யாதைகளையும் பெற்றுக் கொண்டு, தைமீ அமாவாஸ்யை தினத்தில் திருவெவ்வுளுருக்கு எழுந்தருளி ஸ்ரீ வீரராகவனை மங்களாசாஸநம் செய்து அநந்தகொத்து பரிஜநங்களாலும் தங்கள் தங்கள் அதிகாரநிவேதந புரஸ்ஸரமாய்த் தொழப்பட்டு அன்று ஸ்ரீ பாஷ்யகாரர் ஸந்நிதியில் ஸ்ரீ ந்ருஸிம்ஹாராதநத்தைச் செய்தருளி, மறுதினம் முதல் மடத்தில் ஸ்ரீ ந்ருஸிம்ஹனை எழுந்தருளப் பண்ணி விசேஷாராதநம் கண்டருளும்படி செய்தார்.

## ஸ்ரீ லக்ஷ்மீ ந்ருஸிம்ஹனுக்கு ஸஹஸ்ர கலசாபிஷேகம்.

பின் ஸ்ரீ வீரராகவனுக்கு அவப்ருத ஸ்நாநம் முடிந்ததும் ஸ்ரீ லக்ஷ்மீ ந்ருஸிம்ஹனுக்கு மார்க்கத்தில் எழுந்தருளியதால் உண்டான விடாய்தீர ஸ்ரீ பாஞ்சராத்ர ஸம்ஹிதைகளில் சொல்லியபடி ஸஹஸ்ர கலசாபிஷேகத்தைச் செய்தருளி விசேஷாராதநத்தையும் பண்ணி, பரிஜனங்களுக்கும் வித்வான்களுக்கும் ஸ்ரீ ந்ருஸிம்ஹனே பஹுமாநம் பண்ணுவதாகத் திருவுள்ளம்பற்றி, மாத்ரா தாந காலத்தில் சுமார் ஆயிரம் ரூபாய்களை ஸமர்ப்பணம் செய்து, அந்த ரூபாய்களைக் கொண்டே வஸ்திரங்களை வாங்கி அவரவர்களின் அதிகாரானுகுணமாக ஸம்பாவனைகள் செய்தருளினர். இந்த க்ரமத்தை அநுஸரித்தே எப்போதும் திருவாராதநத்தில் மாத்ரா தாந காலத்தில் ஸமர்ப்பிக்கப்பட்ட த்ரவ்யத்தைக் கொண்டே நித்யப்படி ஆராதகர்களுக்கும் வருகிற வித்வான்களுக்கும் ஸம்பாவனை பண்ணும் வழக்கம் ஏற்பட்டு, அவ்வழக்கம் இன்றைக்கும் நடந்தேறி வருகின்றது.



## தக்ஷிண தேச யாத்ரை

அப்போது மாசி மீ 12 உ ஸ்ரீ அழகியசிங்கரின் பட்டாபிஷேக ஸ்ரீமுகம் நாநாதேச சிஷ்யர்களுக்கு அனுப்பப்பட்டது. பின் விகாரி ஹூ சித்திரை மீ வரையில் ஸ்ரீ ஸ்வாமி திருவெவ்வுளுரிலேயே எழுந்தருளியிருந்து, பின் ஸ்ரீ ஆழ்வார் திருநகரி சென்று நம்மாழ்வாரைத் திருவடி தொழவேண்டும் என்கிற அதிகமான அபிநிவேசத்துடன் அவ்வர்ஷம் சாதுர்மாஸ்ய ஸங்கல்பத்திற்குத் திருவஹீந்த்ரபுரம் எழுந்தருள வேண்டுமென்று தீர்மானித்து யாத்ரை ஸங்கல்பித்துக் கொண்டெழுந்தருளும்போது, பெருமாள் கோவிலுக்கு எழுந்தருளி ஸ்ரீ தேவப்பெருமான் மங்களா சாஸநத்திற்காக அபேக்ஷித்தபோது, அப்போது அந்த ஸந்நிதி அதிகாரிகளுக்கும் அர்ச்சகர்களுக்கும் ஏதோ மநஸ்தாபமிருந்தபடியால் அவ்வதிகாரிகள் ஸ்ரீ அழகியசிங்கர் ஸந்நிதிக்கு வந்து 'இந்த ஸமயம் ஸந்நிதிக்கு மங்களாசாஸனத்திற்கு எழுந்தருளினால் மர்யாதைகள் ஸரியாக நடைபெறாமல் போவதுடன் தங்களுக்கும் மிகுந்த மாநஹாநியேற்படும்' என்றும் விஜ்ஞாபித்தபடியால் அதை அநுஸரித்து அந்த ஸமயம் மங்களாசாஸநம் செய்தருளாமலேயே மிகக் குறையுடன் தூசி, மாமண்டூர் மார்க்கமாகத் திருவஹீந்த்ரபுரம் எழுந்தருளியாயிற்று

## சாதுர்மாஸ்ய ஸங்கல்பமும் ஸ்ரீ அழகிய சிங்கரின் அநுஷ்டாந க்ரமமும்.

அவ்விடத்தில் சாதுர்மாஸ்ய ஸங்கல்பம் உபக்ரமித்து நடக்கையில், ப்ரதிதிநமும் கருடநதியில் ஆச்ரமத்துறையில் காலையில் நீராட்டம் செய்து அநுஷ்டாநங்களை

முடித்துக்கொண்டு, திருச்சின்னம் பரிமாற மடத்துக்கெழுந்தருளி, அபிகமநாராதந காலத்தில் மாத்ராதாநம் செய்யும்போது வழக்கம்போல் விசேஷமாக த்ரவ்யத்தை ஸமர்ப்பணம் செய்து, வருகிற வித்வான்களுக்கு அதைக் கொண்டு ஸம்பாவநை செய்தும், பின் அபிகமநம் முடிந்ததும் உபாதாந காலத்தில் ஆஶ்ரிதர்களுக்கு ஸ்ரீ பாஷ்ய க்ரந்தம் ப்ரவசநம் செய்து கொண்டும் எழுந்தருளியிருப்பதுண்டு பல தினங்களில், அவ்வூரில் வித்வான்களாக அக்காலத்தில் எழுந்தருளியிருந்த தர்மபுரி, சடகோபாசார்ய ஸ்வாமி, ஶதாவதாநம் அநந்தாசார்ய ஸ்வாமி, தேவநாதாசார்ய ஸ்வாமி, சேட்டலூர் ந்ருஹிம்ஹாசார்ய ஸ்வாமி முதலானவர்களும்கூட கோஷ்டியிலிருந்து விஷய விசாரங்கள் செய்வதுண்டு. அந்த ஸமயத்தில்தான் திருக்குடந்தை பெரிய தெரு கதாதரபுரம் ஸ்ரீ சக்ரவர்த்தி வேங்கடாசார்ய ஸ்வாமி (38 வது பட்டத்து அழகிய சிங்கரின் பூர்வாஶ்ரமத் (திருநாமம்) ஸ்ரீ முஷ்ணம், ஸ்ரீ ஸ்வர்ணம் க்ருஷ்ணமாசார்ய ஸ்வாமி முதலான சிஷ்யர்களும் ஸ்ரீ அழகிய சிங்கரிடத்தில் ஸ்ரீ பாஷ்யம் அதிகரித்தார்கள். அப்போது அபிகமந காலங்களில் ஆழ்வார் ஆசார்யர்களுடைய திருநக்ஷத்ரம் முதலியன நேர்ந்தபோது, அவ்வுத்ஸவங்களை வ்யாஜமாகக் கொண்டு அவ்வூர் ஸ்வாமிகளை ஸம்ஸ்க்ருத த்ராவிட வேதபாராயணங்களைப் பண்ணும்படி நியமித்து யதோசித ஸம்பாவநையும் செய்வதுண்டு. பின் மாத்யாந்ஹிக ஸ்நாநத்தை ஸ்ரீ தேசிகன் திருமாளிகையில் ஸ்ரீ தேசிகனுடைய திருக்கையாலேயே கட்டப்பட்ட கிணற்றில் உத்ருதோதகத்தில் செய்தருளும்போது,